REPRINT FROM THE PANDIT.

॥ श्रीः ॥



सर्वार्थसिद्धियुतः

# तत्त्वमुक्ताकलापः ।

बौधायनीयार्षसिद्धान्तानुसारी विशिष्टाद्वैत-
ब्रह्मनिरूपणपरः प्रकरणग्रन्थः ।

श्रीवेदान्ताचार्यापराभिधेन कवितार्किककेसरिणा
सर्वतन्त्रस्वतन्त्रधिषणेन श्रीवेङ्कटनाथदेशिकेन प्रणीतः ॥

सत्संप्रदायाचार्येण सर्वतन्त्रस्वतन्त्रपण्डितस्वामिराममिश्र-
शास्त्रिणा परिशोधितः क्वचिद्विषमे विशदीकृतश्च ॥

# TATTVAMUKTÁKALÁPA

WITH

## SARVÁRTHASIDDHI

BY

VENKATANÁTHA DESIKA.

EDITED BY

S. S. A. S. T. S. P. S. M. M. RÁMA MISRA SÁSTRI,

PROFESSOR, SANSKRIT COLLEGE, BENARES.



काश्याम् ।

मेडिकल्-हाल्-नामकमुद्रालये मुद्रयित्वा प्रकाशितः ॥

१९५६ वैक्रमाब्दे । १९०० ईस्वी ॥

॥ श्रीः ॥

श्रियै नमः ।

श्रीपतये नमः ।

श्रीमते रामानुजाय नमः ।

नमोनमो यामुनाय यामुनाय नमोनमः ।

नमोनमो यामुनाय यामुनाय नमोनमः ।



यस्मिँश्चिरन्तनगिरामिह तत्परत्व-
तत्तत्प्रलम्भनविमूर्छितशोकहानम् ।
आयत्तमस्ति भववारिधिपोतपादो
रामानुजार्यमुनिरेष जयत्यजस्रम् ॥

श्रीः

श्रियै नमः

श्रीधराय नमः

श्रीमते रामानुजाय नमः ॥

# भूमिका ।

अस्तीदमुपेयतमार्थनिरूपणपरं मध्यसिद्धान्तसिद्धार्थनिरूपणपरेभ्य उपेयार्थनिरूपणप्रचुरेभ्योऽपि सांख्ययोगादितन्त्रेभ्यः सारतमार्थप्रतिपादकमनन्यथासिद्धार्थविवेचनपरं वेदान्त*मीमांसाशास्त्रम् । यथाऽऽह पुराणाचार्यो भगवान् व्यासः

सत्यं सत्यं पुनः सत्यं भुजमुत्थाप्य चोच्यते ।
न वेदान्तात्परं शास्त्रं न देवः केशवात्परः ॥ इति,

उचितं चैतद् धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयेऽभ्यर्हिततमस्य मोक्षस्यैव फलोपायपर्यन्तस्य विंशत्य†ध्याय्या मीमांसितत्वात् ।

सन्ति चानेकव्याख्यानानि ब्रह्मसूत्राणां तावताऽपि न तानि सूत्राक्षरार्थानुरोधीनि । न चर्षेर्भगवतो बोधायनस्य ब्रह्मसूत्रवृत्तिकारस्य मतमनुरुन्धन्ति । प्रत्युत केचन

---

* अन्तः स्वरूपे निकटे नाशनिश्चययोरपीत्याभिधानिकानुस्मरणादन्तशब्दस्य निश्चयार्थकत्वेन वेदानां संहिता-ब्राह्मणोपनिषदारण्यकादिस्वरूपाणामन्तोऽर्थनिश्चयो येनासौ वेदान्त इति व्युत्पत्त्या पूर्वोत्तरभागात्मकं षोडशाध्यायी-चतुरध्यायीस्वरूपं जैमिनीय-कृष्णद्वैपायनीयं संहृत्य मीमांसा-शास्त्रम् । अत एव त्वैकशास्त्र्यवासनया पृथग्जनोऽपि पूर्वमीमांसोत्तरमीमांसे इति व्यवहरति । न्यरूपयाम चामुमर्थं शास्त्रदीपिकाभूमिकायामिति तत एव परीक्षन्तां विचक्षणाः ।

† जैमिनीयषोडशाध्यायीसंकलितोत्तरमीमांसाचतुरध्यायी विंशत्यध्यायीति सङ्घटः ।

ब्रह्मसूत्रभाष्यकाराः सूत्राक्षरविप्रतीपं स्वतात्पर्यविषयीभूतमेवार्थं स्वसंदर्भेषु बलान्निबबन्धुः । तिरश्चक्रुश्च हेत्वाभासोदाहरणभूताभिरतिदुर्बलदुर्युक्तिभिरुपाधिशताकुलाभिः परस्परव्याहताभिर्जगद्व्यामोहनपर्यवसानाभिर्भगवतो बोधायनस्य वृत्तिग्रन्थम् । अत एव तु ब्रह्माज्ञानवादं द्विषन्तोऽद्वयवादिनो भास्कराचार्यास्तत्सयूथ्याः सन्तोऽपि स्वभाष्ये आदावेव वुद्धेस्तत्त्वपक्षपातितया–

सूत्राभिप्रायसंवृत्त्या स्वाभिप्रायप्रकाशनात् ।
व्याख्यातं यै*रिदं शास्त्रं व्याख्येयं तन्निवृत्तये ॥

इति स्फुटं वस्तुवृत्तमनुसरन्तः शाङ्करव्याख्यायाः सूत्राभिप्रायसंवरणहेतुतामुदक्षरतां निजनयनिरूपणपरतां च समगरिषत । स्व†यमपि चानन्दमयाधिकरणे शेषे स्वनिरूपितार्थे असंतुष्यन्तः " सूत्राणि त्वेवं व्याख्येयानि " इत्यारभ्य अतिश्लथमर्थं निबद्धश्रद्धशिष्यबुद्धिसंग्रहाय कथंचिदुपदर्शयाञ्चक्रुः । अतएव रत्नप्रभादिशाङ्करभाष्यटीकासु " वेदसूत्रयोर्विरोधे गुणे त्वन्याय्यकल्पनेति सूत्राण्यन्यथा ‡ नेतव्यानीत्याह । 'सूत्राणीति' " एवं तच्छिष्याः स्फुटमुपवर्बृहिरे । किमेते मूलटीकाकृतो ब्रह्मसूत्राक्षराणां वेदविरोधमुद्भावयन्तो ब्रह्मसूत्राणां स्वप्रतिपाद्यार्थजाते प्रातिकूल्यं विश्वसन्ति ? यदि तथा, तर्हि त्रैलोक्यविजयिन एते बौधायनीयवृत्तेरिव ब्रह्मसूत्राणामपि खण्डने यन्न प्रववृतिरे तच्चित्रं । दिष्ट्या सौभाग्यमेव वा पाराशं-

* यैः=शङ्कराचार्यैः ।

† श्रीमच्छङ्कराचार्याः ।

‡ सूत्राक्षरस्वरसलभ्यादर्थात्प्रच्याव्य कुश-काशावलम्बनेन शिष्यव्यामोहनाय केवलं योज्यानीत्यर्थः ।

र्यस्य कृष्णद्वैपायनस्य । किंवा पाराशर्यस्य सप्तचिरंजीव्यन्तःपातितामुपश्रुत्यैव न ते तद्घाताय समुद्युक्षतेति मन्यामहे । अथवा ब्रह्मसूत्राणामतिसंक्षिप्ताक्षरतया यथा कथंचिदर्थनिरूपणेनादृढव्युत्पत्तेर्लोकस्य प्रतारयितुं शक्यतया न तन्निराकरणावश्यकतां मेनिरे, सूत्रवृत्तेस्त्वतिस्फुटार्थतयाऽन्यथयितुमशक्यत्वेन उद्युयुजिरे तन्निराकरणायैवेति ज्ञायते । भगवद्गीतां त्वयथाविधां निजघ्नुरेव ब्रह्मास्त्रैरित्यतिस्फुटम् । अस्तु किमप्येतत्तथाऽपि ते किमज्ञासिषुर्जनाश्च तान् कथमन्ववर्वावृतन्, व्यश्वसिषु*र्वेति परवृत्तिनिरूपणे सर्वथा परागवृत्तयो वयमिति किं, कथं वा, निरूपयितुमीशीमहि । तथाऽऽप्यात्मतत्त्वं जिज्ञासमानैः प्रमाणपरायत्तचेतोवृत्तिभिरवश्यमार्षः प्रमाणसिद्ध एवार्थो ब्रह्मसूत्राणामनुसर्तव्य इत्यार्षवृत्ति-ब्रह्मसूत्राक्षरार्थानुसारिणोः श्रीभाष्य-वेदार्थसंग्रहयोर्मुद्रणे प्राक् प्रावर्तिष्महि । परं तु महाकरग्रन्थेषु सहसा जनानां नावगमसिद्धि-

---

* एवमेव तु ब्रह्मणो नैर्गुण्यवादो वैषम्यनैर्घृण्यादिलक्षणाहेयगुणावधूननपरो ब्रह्मणः सर्वशुभगुणास्पदत्वेन गुणानामियत्तावधिराहित्यपरश्च परैरुत्सूत्रार्थनिरूपणे कृतपरिकरैरत्यन्तनैर्गुण्ये निर्विशेषसत्स्वरूपत्वपर्यवसायिनि बलादेव नियोजितः. तथा हि ब्रह्मसूत्रं प्रकृतैतावत्त्वं प्रतिषेधति ततो ब्रवीति च भूयः । अध्या· पा· । ३ पा· २ । सू· २२ । इति विस्पष्टं ब्रह्मगुणानां भूयोऽभिधानयुक्त्या बुबोधयिषितानां तेषामानन्त्यादियत्ताराहित्यं व्यवस्थापयति । आह च तन्मात्रमिति अध्या· ३ पा २ । सू· १६ । सूत्रं तु प्रकाशवच्चावैयर्थ्यमिति अध्या· । ३ । पा· २ । सू· । १५ । पूर्वसूत्राक्षरस्वारस्यानुरोधेन सन्मात्रतामेव ब्रह्मणः श्रुतिर्ब्रूते इत्येतदर्थकं न भवति किं तु सन्मात्रतामेव निर्दिशति, न तु तद्व्यतिरिक्तं सर्वथाऽनन्यसिद्धं श्रुत्यैकसमधिगम्यं गुणजातं प्रतिषिषेधिषति ब्रह्म-तद्गुणानामप्राप्तत्वाविशेषेण बुबोधयिषितत्वात् । प्रकाशवच्चावैयर्थ्यमिति हि सूत्रं प्रकाशस्येवाप्राप्तस्य परस्यापि गुणजातस्य ब्रह्मणि सत्त्वमवगमयति इतरथा पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादिब्रह्मगुणबोधकशास्त्रस्य वैयर्थ्यं प्रसज्येत न च गुणबोधकस्य शास्त्रस्य व्यावहारिकप्रामाण्याभिधानायापि स्वस्त्यस्ति प्रकाशवदिति दृष्टान्तावष्टम्भेन प्रकाशस्येव परेषामपि गुणानां याथार्थ्यबोधकताया आवश्यकत्वात् । चतुर्थाध्यायस्तु सर्वोऽपि परेषामुत्सूत्र इत्यादिकं सर्वमस्मदीयपदवृत्तिग्रन्थे द्रष्टव्यमित्यभिप्रायेण जातपदम् ।

रिति जानेऽपि श्रीभाष्यादिमुद्रणे जनस्यालब्धव्युत्पत्तेर्न तत्राधिकार इत्यधिकारसिद्धये तत्त्वमुक्ताकलापः सर्वार्थसिद्धिसहितोऽसा बोधसिद्धये पर्याप्नुयादिति प्रकाश्यते ।

अस्य च ग्रन्थरत्नस्य शोधनं तैलङ्गाक्षरपुस्तकमेकमपरं च देवाक्षरपुस्तकं श्रीमतामतिविस्तृत्वरस्वकीर्तिधवलीकृतसर्वदिङ्मण्डलानामस्मन्मन्त्ररत्नाचार्याणां पूज्यपादानामतिप्रकृष्टवाग्वैभवानामशेषशास्त्राचार्याणां वृन्दावनधामस्थजगद्गुरुश्रीदेगोवर्द्धनरङ्गाचार्याणां सुप्रसिद्धपुस्तकागाराच्छ्रीमतो लक्ष्मणाचार्यस्य साहाय्येनासाद्य निरवहम् । एतस्य ग्रन्थस्य निर्माता चावधीरितधिषणधिषणो वेदान्ताचार्यापराभिधः सर्वतन्त्रस्वतन्त्रो वेङ्कटनाथदेशिको द्राविड़ब्राह्मणो वादिहंसाम्बुदाचार्यशिष्यः श्रीदेमदनन्ताचार्यपुत्रो विश्वामित्रगोत्रः श्रीदेपुण्डरीकाक्षाचार्यस्य विततमखविधेः पौत्रः श्रीदेतोतारम्मागर्भमहोदधिमहारत्नम् ।

अस्य स्थितिसमयस्तु शाङ्करमतानुवर्तिनां श्रीमाधवाचार्याणां मध्वसंप्रदायानुवर्तिनामक्षोभ्यमुनीनां च समान एव । अस्ति चात्र प्रसिद्धिः कदाचिदक्षोभ्यमुनिना माधवाचार्याणां शास्त्रविचारे प्रवृत्तेऽङ्गीकृतमाध्यस्थ्याः श्रीवेदान्ताचार्याः ।

अस्तिना तत्त्वमसिना परजीवप्रभेदिना ।
विद्यारण्यमरण्यानीमक्षोभ्यमुनिरच्छिनत् ॥

शास्त्रार्थावसाने इति श्लोकं पेठुः । माधवाचार्या एव चतुर्थाश्रमावलम्बने विद्यारण्यपदेन प्रसिषिधुरिति तु सुप्रसिद्धमेव, ततश्च स्फुटमिदं यदेते अक्षोभ्यमुनिविद्यारण्यापरनाममाधवाचार्य-वेदान्ताचार्याः समसमयाऽ-स्थाना इति ।

आशासे चामुना मुद्रणादियत्नेन एतस्मिन् देशे सत्यवेदार्थप्रचारमनेकपुरुषायुषदुरवापमप्यात्मतत्त्वज्ञानं भक्तिमार्गसमुद्रेकं च ।

अभ्यर्थ्यते चात्र साहाय्यमनन्तकोटिब्रह्माण्डनायकस्य जगदुद्धरणे समुद्यतस्य तत एव परिगृहीतानेकैच्छिकदिव्यविग्रहस्य विचित्र[illegible]शक्तिमतः शीलौदार्यगुणौघमहोदधेर्भगवतो देवतासार्वभौमस्यास्मत्कुलसमाराध्यपरमदैवतस्य विष्णोः ॥

इति काश्यामगस्त्यमुन्याश्रमाश्रमो राममिश्रशास्त्री,
वैक्रमेऽब्दे १९८६ । पौषकृष्ण[illegible]तिपदि
रवाविति शम् ।



श्रीः

श्रियै नमः

श्रीधराय नमः

श्रीमते रामानुजाय नमः ॥

# सर्वार्थसिद्धिसहितस्य तत्त्वमुक्ताकलापस्य शुद्धिपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृ॰ । पं॰ |
|---|---|---|
| त्व | त्वं | ६ । ६ |
| अभेदत्रसि | अभेदसि | १० । ५ |
| लभाः स्य | लभास्य | १३ । ५ |
| बाह्य | बाह्ये | १४ । ५ |
| ततोप | ततोऽप | ,, । १० |
| धर्मस्त | धर्मास्त | ,, । ६ |
| त्व | त्वं | १६ । ७ |
| साधर्म्या | साधर्म्य | २५ । २ |
| प्रसिद्ध | प्रसिद्धि | ३३ । १२ |
| कृत्ये | कृत्वे | ३४ । १० |
| निष्ठति | निष्ठेति | ५५ । १ |
| भावे | भावो | ५६ । ११ |
| व्यवस्थिति | व्यवस्थितिः | ५८ । ४ |
| निमित्तति | निमित्तेति | ,, । ११ |
| वन्धा | वन्ध्या | ५६ । ६ |
| विशिष्ट | विशिष्टे | ६७ । ११ |
| त्रत्य | त्रत्ये | ,, । २ |
| ममत्त्वं | ममत्त्वे | ८० । ५ |
| न हि | स हि | ८६ । ६ |
| द्धत | द्धतया | ,, । १० |
| दषयति | दूषयति | ८८ । ५ |
| तेजकणा | तेजःकणा | १०७ । ४ |
| विपरा | विपरी | ११३ । ७ |
| ख | खं | १२५ । ८ |
| स्थिरत | स्थिरतर | १४ । ८ |

## द्वितीयसरः

| अशुद्धम् । | शुद्धम् । | पृ॰ । पं॰ |
|---|---|---|
| तद्भल | तद्रुल | १५७ । ८ |
| मैत्तत् | मैत्तत | १६६ । १ |
| परमानि | परमात्मनि | १७५ । ६ |
| निष | निष्ट | २०४ । १२ |
| स्यय | स्यस्य | २१२ । १ |
| नतया | तया | २१४ । १ |
| विनाश | विनाश्यं | ,, । ५ |
| हिंसाः | हिंसा | २२० । ६ |
| सङ्क्रहीतं | सङ्गृहीतं | ,, । ११ |
| ययन् | प्रयन् | २२२ । ६ |
| प्रतिक्ति | प्रतिवक्ति | २२५ । ११ |
| तटि | तड्डि | २२६ । १ |
| आाद्य | आद्ये | २३३ । ६ |
| ताति | तीति | २३७ । २ |
| भ्यत | भ्येत | २३६ । ११ |
| क्रिया | क्रिय | २४० । ३ |
| तन्मा | तन्या | २४१ । १० |

## तृतीयस्य नायकसरस्यारम्भः ।

| अशुद्धम् । | शुद्धम् । | पृ० । पं० |
|---|---|---|
| व्यामा | व्यामो | २५२ । १० |
| व्याख्यान | व्याघात | २६६ । ८ |
| दृष्टिदा | दृष्टिर्द्दा | ३१५ । १ |
| वत्स्यति | वर्त्स्यति | ३२६ । ७ |
| स्समन्तव्याः | स्संमन्तव्याः | ३२६ । १ |
| दोदुषप्टम | दोषदुष्टम | ३३० । १ |
| वार्जीदाविति | जीवादाविति | ३७६ । ७ |
| चत्रत्त | चत्तेत्रत्त | ३८६ । ८ |
| प्रदर्यति | प्रदर्शयति | ,, । १३ |
| भावः म | भावम | ४४७ । ११ |
| ग्रणं | ग्रहणं | ४४७ । ४ |
| प्रमुष | प्रमुष्ट | ४५४ । ६ |
| त्यग | त्याग | ४५६ । ७ |
| प्यलू | प्युलू | ४७० । २ |
| लोकांतेन | लोकितेन | ४८६ । ११ |
| स्वाव्या | स्वव्या | ४६० । ११ |
| तादिभि | ताभि | ४६२ । ३ |
| पुरोनश्वरे | नपुनरोश्वरे | ५३३ । १० |
| अन्विधा | अन्विताभिधा | ५३६ । ४ |
| तद्ग्रही | तद्गृहीतिः | ५६२ । ७ |
| काद्य | काद्या | ५६४ । २ |
| स्तद्ग्रही | स्तद्ग्रहो | ५६५ । २ |
| स्यत् | स्यात् | ५७६ । ४ |

श्रीः । श्रीः । श्रीः ।



श्रीः

श्रियै नमः

श्रीधराय नमः

॥ श्रीमते रामानुजाय नमः ॥

# सर्वार्थसिद्धिसहितस्य तत्त्वमुक्ताकलापस्य विषयसूचीपत्रम् ॥

## प्रथमस्य जडद्रव्यसरस्यारम्भः ॥


| विषयाः | पृ० |
|---|---|
| मूलटीकयोर्मङ्गलम् । | २ |
| स्वग्रन्थस्योपादेयत्वाभिधानम् । | ३ |
| तत्त्वज्ञानप्रयोजनम् । | ५ |
| द्रव्यविभागः । | ६ |
| द्रव्यतद्विशेषलक्षणम् । | ७ |
| द्रव्यसिद्धिद्रव्याद्वैतभङ्गौ । | १४ |
| पराभिमतनिर्विशेषसिद्धिप्रत्यनीकधर्मिधर्मैक्यप्रस्थापनम् । | १६ |
| प्रकृत्यादीनामागमगम्यत्व-सृष्टिप्रकारौ । | २६ |
| तन्मात्रभूतसृष्टिप्रकारः । | ३० |
| अग्नितेजसोर्व्यष्टिसृष्टिविशेषः । | ,, |
| पुद्गलानामनियतपृथिव्यादिपरिणामवादभङ्गः । | ३१ |
| प्रकृतिविकृतिविभागचिन्ता । | ३३ |
| सर्वतत्त्वानामीश्वराधिष्ठानेन कार्यहेतुत्वम् । | ३४ |
| त्रिवृत्करणपञ्चीकरणविचारः । | ३५ |
| परमाणुकारणतावादभङ्गः । | ४१ |
| अवयविवादभङ्गः । | ५२ |
| देहादेः पाञ्चभौतिकत्वम् । | ५३ |
| सांख्याभिमतरीत्या सत्कार्यवादभङ्गः । | ५३ |
| क्षणभङ्गुरतोपपादन-तन्निरासौ । | ७८ |
| कार्यकारणभावादिसमर्थनम् । | ८७ |
| इन्द्रियाणामभौतिकत्वाहङ्कारिकत्वे । | ६१ |
| इन्द्रियैकादशकसिद्धिः । | ६४ |
| अन्तःकरणत्रैविध्यनिरासः । | ६५ |
| एकेन्द्रियवादभङ्गः । | ६७ |
| इन्द्रियाणां सूक्ष्मत्वम् । | ६६ |
| चक्षुरादेः प्राप्यकारित्वम् । | १०४ |
| श्रोत्रवृत्तिशब्दाश्रयागमनपक्षौ । | १०६ |
| आकाशस्य प्रात्यक्षिकत्वव्यवस्थापनम् । | ११० |
| आकाशस्य नैयायिकाद्यभिमतानुमेयत्वभङ्गः । | १११ |
| अवकाशपदार्थनिरूपणम् । | ११२ |
| आकाशस्यावरणाभावमात्रत्वभङ्गः । | ११७ |
| आकाशस्यानित्यत्वाव्यापकत्वादिनिरूपणम् । | ११८ |
| दिश आकाशाद्यन्तर्भावः । | १२२ |
| वायोः प्रत्यक्षत्वनिरूपणम् । | १२५ |
| प्राणस्य वायुविशेषरूपत्वम् । | १२६ |
| प्राणस्यानिन्द्रियत्वम् । | १२८ |
| प्राणवैश्वानरयोः साङ्कल्यमनात्मत्वं च । | ,, |
| प्रभायाः प्रभावदवयवातिरेकतेजस्त्वे । | १३० |
| प्रभाविषयग्रन्थद्वयगमनिका । | १३१ |
| स्थिरास्थिरतेजोविभागः । | १३२ |
| हेमादेस्तैजसत्वोक्तितात्पर्यम् । | १३४ |
| तमसः पार्थिवत्वम् । | १३६ |
| तमस आलोकाभावमात्रत्वभङ्गः । | १३८ |
| भूभ्रमणादिवादभङ्गः । | १४१ |

| विषयाः | पृ॰ |
|---|---|
| भूपरिमाणादिविरोधपरिहारः । | १४२ |
| आकाशाद्यतिरिक्तकालसिद्धिः । | १४३ |
| कालस्येश्वरात्मन्यनन्तर्भावनिरूपणम् । | १४४ |
| कालोत्पत्तिवादपरिहारः । | १४५ |
| कालस्य प्रत्यक्षसिद्धत्वनिरूपणम् । | १४८ |
| कालस्य विभुत्वसर्वकार्यहेतुत्वनिरूपणम् । | १५१ |
| सर्वतत्त्वस्थितिप्रवृत्तीनामीश्वरेच्छायत्तत्वनिरूपणम् ॥ | ,, |

**जडद्रव्यसरः समाप्तः ॥**

**द्वितीयस्य जीवसरस्यारम्भः ॥**

| विषयाः | पृ॰ |
|---|---|
| आत्मनो देहातिरेकः । | १५८ |
| आत्मन इन्द्रियाद्यतिरेकः । | १६२ |
| नित्यबुद्ध्यतिरिक्तात्मसिद्धिः । | १६३ |
| आत्मनो ज्ञानमात्रत्वोक्तिनिर्वाहः । | १६४ |
| आत्मनः स्वयं प्रकाशत्वम् । | १६५ |
| प्रत्यक्त्वादिप्रकारः । | १६६ |
| आत्मनः कर्तृत्वादिः । | १६७ |
| यत्नसाफल्यम् । | १६८ |
| औपाधिकभेदवादभङ्गः । | १६९ |
| ब्रह्मस्वरूपस्याभाविकांशजीवभेदभङ्गः । | १७० |
| सर्वशरीरैकजीववादभङ्गः । | १७१ |
| एकशरीरैकजीववादभङ्गः । | १७३ |
| ब्रह्मप्रतिबिम्बजीववादभङ्गः । | १७५ |
| जीवनित्यत्वम् । | ,, |
| आत्मानित्यत्ववादस्याध्यक्षादिविरोधः । | १७७ |
| जीवात्मविभुत्वभङ्गः । | १८० |
| जीवाणुत्वम् । | १८३ |
| आत्मनो देहपरिमाणत्वभङ्गः । | १८५ |
| संसरतां प्रत्यापत्तिहेतुविशेषः । | १८६ |
| मुमुक्षाहेतुकथनम् । | १८७ |
| नित्यसंसारिसदसद्भावपक्षौ । | १८८ |
| पक्षद्वयोक्तप्रसङ्गपरिहारः । | ,, |
| भक्तिस्वरूपं मोक्षोपायश्च । | १९२ |
| विद्याभेद-तद्विकल्पादिः । | १९३ |
| त्रिवर्गापवर्गार्थविद्याविभागः । | १९४ |
| कर्मणां विद्योपकारकत्वप्रकारः । | १९५ |
| विद्यायाः कर्मकर्तृसंस्कारत्वभङ्गः । | १९६ |
| वर्णाश्रमधर्माणामैकान्त्यविरोधपरिहारः । | १९७ |
| वर्णाश्रमादिधर्मस्वरूपत्यागभङ्गः । | १९८ |
| गृहस्थसाधारणसर्वाश्रमिणां ब्रह्मविद्याधिकारः । | १९९ |
| नित्यकर्मणां विद्याङ्गत्वाश्रमाङ्गत्वादिः । | २०० |
| नित्यकाम्यादिकर्मविभागः । | २०१ |
| नैमित्तिकावान्तरविभागः । | ,, |
| प्रवृत्तिनिवृत्तिविभागः । | २०२ |
| त्रैवर्णिकाधिकार—सर्वाधिकारविभागः । | २०३ |
| ध्याननियोगवादभङ्गः । | २०४ |
| निष्प्रपञ्चीकरणनियोगवादभङ्गः । | २०६ |
| वाक्यार्थज्ञानस्य मोक्षोपायत्वभङ्गः । | २०७ |
| शाब्दप्रत्यक्षभङ्गः । | २०८ |
| आत्माद्वैतिन उपदेशानुपपत्तिः । | २१० |
| असत्यात्सत्यसिद्धिभङ्गः । | २१४ |
| निवर्तकज्ञाननिवर्त्यानुपपत्तिः । | २१५ |
| निवर्तकज्ञानवेद्यानुपपत्तिः । | २१६ |
| प्रपञ्चनिवृत्त्यनुपपत्तिः । | २१७ |
| निवर्तकज्ञानाधारानुपपत्तिः । | २१८ |
| विद्यायाः पापनाशकत्वोपपत्तिः । | २२० |

| विषयाः | पृ· |
|---|---|
| त्रैवर्गिकसुकृतस्यापि विद्यानाश्यत्वम् । | २२१ |
| प्रामादिकोत्तराघाश्लेषोपपत्तिः । | २२३ |
| पुण्याश्लेषः । | २२४ |
| प्रियाप्रियसंक्रमः । | २२५ |
| प्रियाप्रिययोर्विद्वत्कर्मफलसमानसृष्टेः स्वकर्मफलत्वम् । | २२६ |
| आतिवाहिककर्मनिरूपणम् । | २२८ |
| मुक्तधर्मविकासनित्यत्वम् । | २२९ |
| मुक्तस्यैच्छिकशरीरयोगानियमः । | ,, |
| ईश्वराधीनस्यापि मुक्तस्येच्छाविहतिराहित्यम् । | २३० |
| निरुपाधिकब्रह्मानुभवस्य दुःखरहितनिरतिशयानन्दत्वम् । | २३४ |
| नित्यसूरिसिद्धिर्जीवानां मोक्षे भगवत्साम्यं च । | २३५ |
| मुक्तानुभवस्य समानभोगत्वलक्षणसायुज्यैकरूपत्वम् । | २३७ |
| पुनरावृत्तिप्रसङ्गपरिहारः । | २३८ |
| पाषाणकल्पमोक्षवादभङ्गः । | २४१ |
| सांख्योदितसंसारानुवादः । | २४३ |
| सांख्याभिहितबन्धमोक्षव्यवस्थाऽनुपपत्तिनिरूपणम् । | २४७ |
| जीवन्मुक्तिभङ्गः । | ,, |
| बाधितानुवृत्तिभङ्गः ॥ | २४९ |


**जीवसरः समाप्तः ॥**

---

## तृतीयस्य नायकसरस्यारम्भः ॥


| विषयाः | पृ· |
|---|---|
| आगमिकेश्वरसिद्धिः । | २५६ |
| ईश्वरस्य निर्बाधत्वम् । | २५९ |
| अवाच्यत्वावेद्यत्वादिपरिहारः । | २६१ |
| सद्ब्रह्मादिशब्दानां नित्यलक्षकत्वानुपपत्तिः । | २६३ |
| सृष्ट्यादिप्रतिपादकवाक्यस्थशिवेशानादिपदानां भगवन्नारायणपरत्वनिरूपणम् । | २७३ |
| त्रिमूर्त्त्यैक्यादिपक्षक्षेपः । | २७५ |
| उपदेशानुमानभङ्गः । | २७७ |
| तर्केणेश्वरसिद्धिभङ्गः । | २९४ |
| शास्त्रयोन्यधिकरण-सांख्याधिकरणविरोधपरिहारः । | २९५ |
| ईश्वरस्य जगन्निमित्तत्वोपादानत्वोपपत्तिः । | २९७ |
| जगत्कारणस्य वैशिष्ट्यावश्यंभावः । | २९८ |
| ब्रह्मणश्चिदचिदीश्वरविकारवत्त्वभङ्गः । | २९९ |
| सर्वानुवृत्तसन्मात्रस्य ब्रह्मरूपत्वभङ्गः । | ३०१ |
| ब्रह्मणः स्वलीलार्थं जीवादिपरिणामवादभङ्गः । | ३०२ |
| भास्कराभिमतस्य ब्रह्मण औपाधिकजीवभाववादस्य भङ्गः । | ३०५ |
| सविद्यब्रह्मविवर्तवादभङ्गः । | ३०६ |
| तिरोधानाद्यनुपपत्तिः । | ३०८ |
| अविद्यादर्शनानुपपत्तिः । | ३१० |
| भावरूपाज्ञानप्रत्यक्षत्वभङ्गः । | ३१२ |
| पञ्चपादिकाविवरणोक्तभावरूपाज्ञानानुमानभङ्गः । | ३१३ |
| चित्सुखोक्तभावरूपाज्ञानानुमानभङ्गः । | ३१५ |
| ब्रह्माज्ञानानुमानानां नित्यनिर्दोषश्रुतिबाध्यत्वम् । | ३१७ |
| अविद्याकल्पकश्रुतार्थापत्तिभङ्गः । | ३१९ |
| मायादिशब्दानां ब्रह्मदोषप्रतिपादकत्वानुपपत्तिः । | ३२३ |
| मायाऽविद्याविभागवादभङ्गः । | ३२५ |

| विषयाः | पृ० |
|---|---|
| अविद्याकल्पककार्यमिथ्यात्वानुपपत्तिभङ्गः । | ३२६ |
| उपादानोपादेयसालक्षण्यवादभङ्गः । | ३२८ |
| दृश्यत्वानुमानभङ्गः । | ३४५ |
| व्यावर्तमानत्वानुमानभङ्गः । | ३४८ |
| अनित्यमिथ्यात्वक्लृप्तिपरिहारः । | ३५० |
| निषेधश्रुतीनां प्रत्यक्षादिप्रमाणविरुद्धार्थबोधकत्वानुपपत्तिः । | ३५२ |
| भागः । | ३५४ |
| शास्त्रप्रत्यक्षयोर्दोषसाम्यापादनम् । | ३५७ |
| दोषसाम्ये परस्य बाधकत्वानुपपत्तिः । | ३५८ |
| भेद-तन्निषेधश्रुत्योरपच्छेदन्यायाविषयत्वम् । | ३६० |
| परोक्षबाध्यत्वयोग्ययोग्यप्रत्यक्षवि- | |
| अलौकिकभेदस्य शास्त्रवेद्यत्वोपपत्तिः । | ३६२ |
| प्रपञ्चमिथ्यात्ववादिनां सौगतसाम्यापादनम् । | ३६३ |
| प्रपञ्चमिथ्यात्ववादिनां बाधकविकल्पोदाहरणम् । | ३६४ |
| नित्यविभूतिसद्भावः । | ३६८ |
| मतभेदेन नित्यविभूतेर्जडत्वाजडत्वपक्षौ । | ३६६ |
| नित्यविभूतेरजडत्वपक्षोपपत्तिः । | ३७० |
| अप्राकृतस्यानादेरनित्यत्वादिपरिहारः । | ३७१ |
| परविग्रहनित्यत्वम् । | ३७२ |
| परस्यास्त्रभूषणाद्यनुपपत्तिपरिहारः । | ३७३ |
| विग्रहादिविधिनिषेधविरोधप्रशमनम् । | ३७४ |
| विग्रहादिपञ्चकनिराकरणपरिहारः । | ३७५ |
| परव्यूहादिपञ्चकरूपस्यापि पूर्णषाड्गुण्यवत्त्वम् । | ३७६ |
| व्यूहेषु विशेषाभिमानादिविरोधपरिहारः । | ३७७ |
| व्यूहगणनावैषम्यनिर्वाहः । | ,, |
| प्रादुर्भावादिप्रक्रियान्तरोपपत्तिः । | ३७८ |
| ईश्वरस्वरूपविषयसमष्टिव्यष्ट्यादिवादनिरासः । | ३७६ |
| ईश्वरस्य स्वात्मनि शिष्याचार्यत्वाद्यभिनयफलम् । | ३८० |
| आचार्यवृत्तान्तविशेषसत्यत्वम् । | ३८१ |
| सार्वज्ञ्यानुपपत्तिनिरासः । | ३८३ |
| सर्वशक्तित्वस्थापनम् । | ३८४ |
| ईश्वरस्येच्छावत्त्वसिद्धिः । | ३८६ |
| ईश्वरस्य साध्यप्रमादादिमत्त्वम् । | ३८७ |
| ईश्वरनिरूपणप्रयोजनविशेषः ॥ | ३८८ |

**नायकसरः समाप्तः ॥**

## चतुर्थस्य बुद्धिसरस्यारम्भः ॥

| विषयाः | पृ० |
|---|---|
| ज्ञानसत्ता—स्वयंप्रकाशत्वे । | ३६१ |
| बुद्धेः संवेद्यत्वभङ्गः । | ३६३ |
| बुद्धेर्नित्यानुमेयत्वभङ्गः । | ३६४ |
| क्षेत्रज्ञबुद्धेरपि स्वरूपनित्यत्वम् । | ३६६ |
| पारमार्थिकसंविद्भेदः । | ३६८ |
| संवित्सधर्मकत्वम् । | ३६६ |
| अद्रव्यनित्यबुद्धिवादभङ्गः । | ४०२ |
| प्रमाणाप्रमाणव्यवस्था । | ४०३ |
| अख्यातिसंवलितयथार्थख्यातिपक्षः । | ४०७ |
| अन्यथाख्यातिभङ्गप्रकारः । | ४१२ |
| संशययाथार्थ्यप्रकारः । | ४१४ |
| अनिर्वचनीयख्यातिभङ्गः । | ४१८ |
| अनिर्वचनीयरजतोत्पत्तिभङ्गः । | ४२२ |
| निरधिष्ठाननिरुपाधिकासत्ख्यातिभङ्गः । | ४३१ |

| विषयाः । | पृ॰ |
| --- | --- |
| स्वात्माकारख्यातिभङ्गः । | ४४३ |
| निरालम्बनानुमानभङ्गः । | ४४५ |
| असद्ग्राह्यख्यातिहेतुदर्शनादि-भङ्गः । | ४४८ |
| योगाचारोक्तवासनाभङ्गः । | ४४९ |
| ज्ञानेऽर्थाकारसमर्पणादिमतभङ्गः । | ४५२ |
| संसर्गजाकारमतभङ्गः । | ४५४ |
| बाह्यार्थयादिसौगतोक्तनिरधिष्ठान-ख्यातिभङ्गः । | ४५५ |
| निर्विषयख्यातिभङ्गः । | ४५६ |
| प्रत्यक्षादिप्रमाणविभागलक्षणे । | ४५८ |
| आत्मविशिष्टविषयनिर्विकल्पकभङ्गः । | ४६२ |
| सविकल्पकबाधपरिहारः । | ४६४ |
| शब्दाध्यासभङ्गः । | ४६६ |
| सर्वप्रत्ययानां संज्ञानुविद्धत्वमतभङ्गः । | ४६७ |
| योगिप्रत्यक्षानुमानभङ्गः । | ४७१ |
| अनुमानस्य प्रत्यक्षादिबहिर्भावः । | ४७३ |
| अनुमानप्रामाण्यसिद्धिः । | ४७४ |
| अनुमानबाधकतर्कपरिहारः । | ४७६ |
| अतिचारशङ्कोद्धारप्रकारः । | ४७८ |
| उपाधितद्विधूननादिः । | ४८३ |
| हेतु–तदाभासादिविभागः । | ४८६ |
| व्याप्तिग्रहणप्रकारः । | ४८८ |
| व्याप्त्यादिविभागः । | ४८३ |
| केवलान्वयिविशेषनिरूपणम् । | ४९२ |
| केवलान्वयिविशेषप्रयोजनम् । | ,, |
| केवलव्यतिरेकिभङ्गः । | ४९६ |
| लक्षणनिरूपणम् । | ४९७ |
| परोक्तलक्षणासाध्यद्वयभङ्गः । | ४९९ |
| व्यवहारशिक्षायां न्यायविस्तरविरोध-निस्तारः । | ५०० |
| अनुमानप्रयोगावयवनिरूपणम् । | ५०१ |
| प्रतिज्ञादेर्ल्लोकसिद्धानुसारित्वम् । | ५०२ |
| तर्कलक्षणफलावान्तरभेदाङ्गादिः । | ५०३ |
| कथानधिकाराधिकारादिः । | ५०५ |
| कथा–तदवान्तरविभागादिः । | ५०६ |
| वितण्डायामपि व्यवस्थाऽनुपालनम् । | ५०७ |
| निग्रहस्थानलक्षणविभागादिः । | ५०८ |
| जात्यादिलक्षणविभागादिः । | ५०९ |
| षट्पक्षीसम्भवः । | ५१० |
| आगमस्यानुमानाद् बहिर्भावः । | ५११ |
| परोक्षानुभवासिद्धिपरिहारः । | ५१२ |
| निर्दोषवाक्यप्रामाण्यम् । | ,, |
| अव्युत्पन्नशब्दबोधकत्ववादभङ्गः । | ५१५ |
| सर्वशब्दसांकेतिकत्वभङ्गः । | ५१६ |
| सर्वशब्दानां कार्यपरत्वभङ्गः । | ५१७ |
| ब्रह्मस्वरूपपरवाक्यानां विधिशेषत्व-मन्तरेण प्रामाण्यनिरूपणम् । | ५१८ |
| सिद्धार्थे ऽप्याद्यव्युत्पत्त्युपपत्तिः । | ५२० |
| सिद्धार्थे द्वितीयादिव्युत्पत्तिप्रकारः । | ५२१ |
| अप्रत्यक्षपदार्थव्युत्पत्तिप्रकारः | ५२३ |
| आकृतिशब्दानां विशिष्टवाचित्वम् । | ,, |
| विशिष्टवाचिनां विशेषणमात्रे शक्ति-निष्कर्षानुपपत्तिः । | ५२४ |
| व्यक्तिलक्षणपक्षभङ्गः । | ५२६ |
| गुणवचनशब्दानां द्रव्यपर्य्यन्ताभिधा-यित्वम् । | ५२७ |
| देवादिशब्दानां शरीरपर्य्यन्तत्वम् । | ५२८ |
| शरीरलक्षणम् । | ५३१ |
| विश्वस्येश्वरापृथक्सिद्धत्वम् । | ५३२ |
| जगद्वाचिनां शब्दानां परमात्मपर्य्यन्त-त्वम् । | ५३३ |
| ब्रह्मणः सर्वशब्दवाच्यत्वे व्युत्पत्तिवि-रोधपरिहारः । | ५३४ |
| स्फोटप्रत्यक्षत्वभङ्गः । | ५३५ |

| विषयाः । | पृ॰ |
|---|---|
| स्फोटक्लृप्तिभङ्गः । | ५३६ |
| आगमिकस्फोटादिशब्दनिर्वाहः । | ५३७ |
| प्रतिभावाक्यवाक्यार्थभङ्गः । | ५३८ |
| अभिहितान्वयवादभङ्गः । | ५४१ |
| सामानाधिकरण्ये भेदाभेदप्रसङ्गपरिहारः । | ५४४ |
| निर्विशेषोपलक्षणसामानाधिकरण्यभङ्गः । | ५४५ |
| अखण्डवाक्यार्थभङ्गः । | ५५० |
| आधार्यसामानाधिकरण्यस्यापि विशिष्टार्थत्वम् । | ५५१ |
| वेदप्रामाण्यम् । | ५५३ |
| परतःप्रामाण्योत्पत्त्यनुमानभङ्गः । | ,, |
| बुद्धीनां स्वतःप्रामाण्यम् । | ५५५ |
| अप्रामाण्यस्य स्वाभाविकत्वभङ्गः । | ५५७ |
| स्वतःप्रामाण्यविरोधितर्कनिरासः । | ५५८ |
| स्वतःप्रामाण्यज्ञप्तिप्रकारः । | ५६० |
| वेदेष्वद्भुतोक्तियाथात्म्यम् । | ५६१ |
| वेदनित्यत्वम् । | ५६५ |
| वेदस्य बाह्यागमेभ्यो वैषम्यम् । | ५६७ |
| स्मृतीतिहासादेर्वेदमूलत्वम् । | ५६८ |
| अष्टकादेर्नित्यानुमेयश्रुतिमूलत्वभङ्गः । | ५६९ |
| शिष्टाचारादेरत्यन्तोच्छिन्नशाखामूलत्वभङ्गः । | ५७० |
| पुराणादिबलाबलविभागः । | ५७१ |
| पाशुपतादेर्वेदविरुद्धव्यामिश्रत्वम् । | ५७२ |
| पञ्चरात्रप्रामाण्यम् । | ५७५ |
| परसिद्धान्तप्रतिवन्दिनिस्तारः । | ५७६ |
| स्मृतिहेतुविभागादिः । | ५७७ |
| स्मृतियाथार्थ्योपपत्तिः । | ५७८ |
| स्मृतेरनुभूतव्यक्तिनियमविषयत्वम् । | ५७९ |
| उपमानान्तर्भावः । | ५८० |
| अर्थापत्त्यन्तर्भावः । | ५८२ |
| अभावप्रमाणान्तर्भावः । | ५८३ |
| ऐतिह्यसंभवाद्यन्तर्भावः । | ५८४ |
| अधिकप्रमाणपरिगणननिर्वाहः । | ,, |
| प्रमाणसंख्यानियमसम्प्रदायः । | ५८५ |
| प्रमाणविवेकप्रयोजनम् । | ५८७ |
| परीक्षाफलविशेषः ॥ | ५८८ |


## बुद्धिसरः समाप्तः ॥

## पञ्चमस्याद्रव्यसरस्यारम्भः ॥


| विषयाः । | पृ॰ |
|---|---|
| अद्रव्यविचारप्रधानप्रयोजनम् । | ५८६ |
| अद्रव्यप्रमाणादिः । | ५९१ |
| प्रत्यक्षभेदाभेदभङ्गः । | ५९८ |
| अनुमेयभेदाभेदभङ्गः । | ५९९ |
| अनेकान्तानुमानभङ्गः । | ६०१ |
| सप्तभङ्गीभङ्गः । | ६०२ |
| भेददूषणनिस्तारः । | ६०३ |
| भेदप्रत्यक्षत्वानुपपत्तिनिस्तारः । | ६०८ |
| अद्रव्यावान्तरविभागादिः । | ६०९ |
| सत्त्वरजस्तमसामुपयोगादिरद्रव्यता च । | ६१० |
| विचित्रावस्थानन्त्यम् । | ,, |
| शब्दादिगुणभेदग्राहकाधारनियमः । | ६११ |
| विभूतिद्वयेऽपि शब्दादिसम्भवः । | ६१२ |
| शब्दस्य सर्वभूताश्रितत्वम् । | ६१४ |
| सौगतोक्तशब्दक्लृप्तिभङ्गः । | ६१५ |
| शब्दस्य द्रव्यत्वभङ्गः । | ६१६ |
| शब्दपुद्गलत्वभङ्गः । | ६१७ |
| वर्णानित्यत्वम् । | ६१८ |
| वर्णानित्यत्वेऽपि वेदनित्यत्वप्रकारः । | ६२० |
| अनुष्णाशीतस्पर्शाधारनियमः । | ६२१ |

| विषयाः । | पृ॰ | विषयाः । | पृ॰ |
|---|---|---|---|
| शीतोष्णभ्रमनियमः । | ६२२ | विषयविषयिभावनिरूपणम् । | ६५२ |
| भूतपञ्चकवर्णोक्तिनिर्वाहः । | ,, | विषयविषयिभाववैषम्यम् । | ६५३ |
| पाकजापाकजादिरूपविभागः । | ६२३ | विषयविषयिसंयोगचोद्यपरिहारः । | ६५४ |
| अतिरिक्तचित्ररूपादिभङ्गः । | ६२४ | मुक्तबुद्धिव्याप्त्युपपत्तिः । | ६५५ |
| स्नेहाख्यगुणान्तरसद्भावपक्षः । | ६२५ | योगबुद्धेरतीतादिविषयत्वोपपत्तिः । | ६५६ |
| स्नेहस्य रूपविशेषान्तर्भावपक्षः । | ६२६ | अद्रव्यपक्षे नित्यद्रव्यविषयत्वस्य कार्यत्वानुपपत्तिः । | ,, |
| द्रवत्वान्तर्भाव-बहिर्भावपक्षौ । | ६२७ | प्राकट्याख्यधर्मान्तरक्लृप्तिभङ्गः । | ६५८ |
| सांसिद्धिकपाकजद्रवत्वाधारनियमादिः । | ६२८ | इच्छादीनां बुद्धिविशेषातिरिक्तत्वभङ्गः । | ६५९ |
| गुरुत्वाख्यगुणानुमानभङ्गः । | ६२९ | रागद्वेषादिमिथ्यात्वमतभङ्गः । | ६६० |
| गुरुत्वप्रत्यक्षत्वभङ्गः । | ६३० | द्वेषस्यापीच्छाविशेषत्वम् । | ६६१ |
| आगमिकगुरुत्वनिर्वाहः । | ६३१ | इच्छामात्रातिरिक्तप्रयत्नावस्थासिद्धिः । | ६६२ |
| कणादोक्तसंख्याप्रक्रिया । | ६३२ | जीवनमात्रपूर्वकप्रयत्ननिरासः । | ,, |
| परोक्तद्वित्वादिनिरासः । | ६३३ | सुखदुःखोदासीनरूपावस्थात्रयसिद्धिः । | ६६३ |
| एकत्वसंख्यास्वरूपाश्रयादिनिरूपणम् । | ६३४ | निरुपाधिकानन्दरूपबुद्ध्यवस्थाविशेषः । | ६६४ |
| एकत्वविषयमतभेदः । | ६३५ | सांसारिकसुखस्य दुःखत्वोक्तिनिर्वाहः । | ,, |
| अभिज्ञाप्रत्यभिज्ञाविषयैकत्वविशेषसत्यत्वम् । | ६३६ | धर्माधर्मलक्षणतत्साध्यादृष्टस्वरूपमतभेदः । | ६६५ |
| प्राभाकरोक्तसंख्यानिरासः । | ६३७ | अदृष्टस्यागमैकसिद्धत्वम् । | ६६६ |
| परिमाणसिद्धिः । | ६३८ | श्येनाग्नीषोमीयवैषम्यम् । | ६६८ |
| सौगतोक्ततुच्छपरिमितिनिरासः । | ६३९ | अदृष्टमात्रस्यान्यतस्सिद्धावपि श्रुत्या तद्विवेकानिष्कर्षः । | ,, |
| परममहत्त्वनिरूपणम् । | ६४१ | क्रियादिशक्तिमात्ररूपादृष्टक्लृप्तिनिरासः । | ६६९ |
| अवस्थामात्रपरिमाणवादभङ्गः । | ६४३ | अदृष्टस्य देवताप्रीत्यादिरूपत्वम् । | ६७० |
| पृथक्त्वाख्यगुणान्तरक्लृप्तिभङ्गः । | ६४४ | मन्त्रादेर्थिवचितार्थत्वविरोधपरिहारः । | ६७१ |
| संयोगसिद्धिः । | ६४५ | देवतानां तत्तच्छब्दमात्रादिव्यतिरेकः । | ६७२ |
| निरवयवेष्वेकदेशसंयोगप्रकारः । | ६४६ | | |
| अजसंयोगनिरूपणम् । | ६४७ | | |
| संयोगवैचित्र्यप्रदर्शनम् । | ६४८ | | |
| परोक्तविभागभङ्गः । | ६४९ | | |
| संयोगनाशस्वरूपशोधनम् । | ६५० | | |
| बुद्धिजन्यपरत्वापरत्वाख्यगुणान्तरक्लृप्तिभङ्गः । | ६५२ | | |

| विषयाः । | पृ· |
|---|---|
| कर्मणां कल्पान्तरेष्वपि फलसिद्धिद्वारविशेषः । | ६७३ |
| देवतान्तरप्रीतेरपि भगवत्प्रीत्यर्थत्वम् । | ६७४ |
| शास्त्रीयसंस्काराणां देवताप्रीत्यर्थत्वम् । | ६७५ |
| कर्मणां स्वयंफलप्रदत्वौचित्यभङ्गः । | ६७६ |
| वाच्यार्थापूर्वपक्षेऽपि कल्प्यापूर्वपक्षोक्तदूषणातिदेशः । | ६७७ |
| अपूर्वप्राधान्यभङ्गः । | ६७८ |
| अपूर्वविषयलिङादिव्युत्पत्त्यनुपपत्तिः । | ६७९ |
| अपूर्वस्य लिङादिवाच्यत्वेऽपि देवताप्रीत्याद्यनतिरेकः । | ६८० |
| शब्दभावनाया लिङादिवाच्यत्वभङ्गः । | ६८१ |
| लिङादेरिष्टसाधनतार्थत्वभङ्गः । | ६८२ |
| लिङाद्यर्थनिष्कर्षः । | ६८४ |
| वक्तृनियोगस्य लिङादिवाच्यत्वपक्षः । | ,, |
| षाड्गुण्यनिरूपणम् । | ६८५ |
| शक्तिशब्दार्थनिष्कर्षः । | ६८६ |
| शक्तिदूषणपरिहारः । | ६८७ |
| अद्रव्याणां स्वरूपशक्तिमत्त्वम् । | ६८८ |
| स्मृतिहेतुसंस्कारनिरूपणम् । | ६८९ |
| अनुभवजन्यसंस्कारस्य बुद्धिनिष्ठत्वम् । | ६९० |
| कर्मातिशयातिरिक्तवेगक्लृप्तिभङ्गः । | ६९१ |
| संस्थानविशेषातिरिक्तस्थितस्थापकभङ्गः । | ६९२ |
| कर्मनिरूपणम् । | ६९३ |
| सर्वकर्मणां नित्यानुमेयत्वभङ्गः । | ६९४ |
| असमवायिकारणविभागक्लृप्त्यनौचित्यम् । | ६९५ |
| कर्मणामुत्क्षेपणाद्यवान्तरभेदानिरूपणम् । | ६९६ |
| परापरजातिसमावेशसम्भवः । | ६९७ |
| स्वरूपनिरूपकादिविमर्शः । | ६९८ |
| परोक्तजात्यनुवादः । | ६९९ |
| सौगतोक्तजातिखण्डनपरिहारः । | ७०० |
| अपोहसामान्यवादभङ्गः । | ७०१ |
| संस्थानविशेषातिरिक्तगोत्वादिभङ्गः । | ७०२ |
| परोक्तजातिव्यञ्जकानुपपत्तिः । | ७०३ |
| संस्थानजात्यनुपपत्तिपरिहारः । | ७०४ |
| व्यावृत्त्यसंस्थानानां नियतसंस्थानसादृश्यरूपत्वम् । | ७०५ |
| सादृश्यादिपदार्थान्तरक्लृप्तिभङ्गः । | ७०६ |
| निरवयवेष्वनुवृत्तव्यवहारनिर्वाहः । | ७०७ |
| सत्ताजातिनिरूपणम् । | ७०८ |
| वैशेषिकक्लृप्तविशेषभङ्गः । | ७११ |
| समवायभङ्गः । | ७१३ |
| अनित्यसमवायपक्षविशेषदूषणम् । | ७१४ |
| भावातिरिक्ताभावभङ्गः । | ७१६ |
| अभावस्य निःस्वभावत्वभङ्गः । | ७१७ |
| पदार्थयत्तावधारणोपपत्तिः । | ७१८ |
| वक्तृवैलक्षण्यादिः ॥ | ७१९ |


**अद्रव्यसरः समाप्तः ॥**

सन्तु नः शुभाशिषः पूर्वाचार्याः सत्याभिसन्धाः कमलानायकश्चेति साञ्जलिबन्धमभ्यर्थयामहे ॥

॥ श्रीः ॥ ॥ श्रीः ॥ ॥ श्रीः ॥

॥ श्रीः ॥

# तत्त्वमुक्ताकलापः—सर्वार्थसिद्धियुतः ।



नमोबोधायनाय गुरुवराय । नमः पूर्वाचार्यपरम्पराभ्यः ।

## श्रीमते रामानुजाय नमः ।

जयति सकलविद्यावाहिनीजन्मशैलो जनिपथपरिवृत्तिश्रान्तविश्रान्तिशाखी ॥ निखिलकुमतिमायाशर्वरीबालसूर्यो निगमजलधिवेलापूर्णचन्द्रोयतीन्द्रः ॥ १ ॥ ताराकल्पे स्फुरति सुधियां तत्त्वमुक्ताकलापे दूराद्वृत्त्या दुरधिगमतां पश्यतां सर्वसिद्ध्यै ॥ नातिव्यासव्यतिकरवती नातिसंकोचखेदा वृत्तिस्सेयं विशदरुचिरा कल्प्यते ऽस्माभिरेव ॥ २ ॥ आरिप्सितस्य प्रबन्धस्याविघ्नपरिसमाप्त्यादिसिद्ध्यै मङ्गलमाचरन्नर्थाद्वक्ष्यमाणं द्रव्याद्रव्यविभागप्रतितन्त्रविशेषांश्च संग्रहेण सूचयति । लक्ष्मीति ॥

**मू० लक्ष्मीनेत्रोत्पलश्रीसततपरिचयादेष संवर्धमानो नाभीनालीकरि*ङ्खन्मधुकरपटलीदत्तहस्तावलम्बः ॥ अस्माकं सम्पदोघानविरलतुलसीदामसञ्जातभूमा कालिन्दीकान्तिहारी कलयतु वपुषः कालिमा कैटभारेः ॥ १ ॥**

टी० यत्तविद्येत्यादिना सर्वविद्यानां तादधीन्योक्त्या सा ख्याप्येति लक्ष्मीरादौ संकीर्त्यते. नित्ययुक्तत्वसूचनाय सततपरिचयोक्तिः । नाभीत्यादिना पद्मभुवः कार्यत्वकर्मवश्यत्वसूचनात्ततोऽर्वाचामनीश्वरत्वं कै†मुत्यसिद्धम्. अस्माकमिति । जीवानामीश्वरादन्यो-

* रिङ्खिति पु. पा. ।

† कैमुतिकसिद्धमिति पु. पा. ।

न्यञ्च भेदः प्रत्यक्त्वमहं–शब्दार्थत्वञ्च प्रख्याप्यते, तेन स्थालीपुलाक-न्यायेन परमतनिरासमप्युदाहरति । सम्पदोघानिति । तत्त्वज्ञानादिकाः स्वप्राप्तिपर्यन्ताः सिद्धिपरम्परा अविरलेत्यादिना सत्त्वाधिकप्रशस्ततमद्रव्यार्चनीयतया ऽन्येभ्यो व्यावर्तनीयत्वमनुवर्ण्यते कालिन्दीकान्तिहारीत्यनेन तद्गुणानां परगुणतिरस्कारकत्वमुपलक्ष्यते कैटभारेर्वपुष इति व्यतिरेकविभक्त्या शुद्धसत्त्वमयविग्रहयोगस्त*-त्स्वरूपादन्यत्वञ्च स्थाप्यते वपुषः कालिमेति द्रव्याद्रव्यविभागप्रदर्शनार्थम् । एवं जडाजडाद्यपि यथास्थानमूह्यम् ॥ चिकीर्षितस्य श्रद्धेयत्वाय वक्तृसम्प्रदायवैलक्षण्यं दर्शयति । नानेति ।

**सू० नानासिद्धान्तनीतिश्रमविमलधियोऽनन्त-**
**सूरेस्तनूजो वैश्वामित्रस्य पौत्रो विततमख-**
**विधेः पुण्डरीकाक्षसूरेः ॥ श्रुत्वा रामानुजा-**
**र्यात्सदसदपि ततस्तत्त्वमुक्ताकलापं व्याता-**
**नीद्वेङ्कटेशो वरदगुरुकृपालम्भितोद्दाम-**
**भूमा ॥ २ ॥**

टी० सत् प्रामाणिकं मुमुक्षोरुपादेयञ्च तदन्यदसत् सतस्सत्त्वेनासतश्चासत्त्वेन श्रवणमिहेष्टम्, ततः=श्रवणादेव हेतोः ॥ २ ॥ प्रबन्धस्य स्वरूपातिशयादपि सुधीभिस्स्वीकार्यत्वमाह । प्रज्ञेति ।

**सू० प्रज्ञासूच्याऽनुविद्धः क्षतिमनधिगतः कर्कशा-**
**त्तर्कशाणाच्छुद्धो नानापरीक्षास्वशिथिलवि-**
**हिते मानसूत्रे निबद्धः ॥ आतन्वानः प्रकाशं**

* तस्य स्व० पु० पा० । + श्रीहरामानुजाचार्येराकरादौ यदभिहितं तदेवेह मयोच्यते न किंचिन्नूतनमिति भावः ।

**बहुमुखमखिलत्रासवैधुर्यधुर्या धार्याहेतुर्ज-**
**यादेः स्वहृदि सहृदयैस्तत्त्वमुक्ताकलापः ॥ ३ ॥**

टी० ज्ञातस्यातिशयाधायिनी धीः प्रज्ञा, कलापस्यानुविद्ध-त्वादि प्रत्येकद्वारा । तत्त्वानां प्रज्ञया अनुविद्धत्वं सम्यग्धारितत्वं रत्नान्तरेषु शाणक्षतिसम्भवो न मुक्तासु· प्रमाणतर्कैर्याथात्म्यान्वेषणं परीक्षा । तन्नानात्वं तर्कादिभेदात् । मुक्तासु स्वानुगुणपरिमाणयुक्तं सूत्रं मानसूत्रम् । अन्यत्र प्रमाणमेव सूत्रं तस्याशिथिलविहि*तिर्निर्बाध-त्वेन विशेषतो धीस्थत्वम् । प्रकाशमालोकं बोधञ्च । बहुमुखं सर्व-तोदिक्कं सर्वविषयञ्च । त्रासो मणिदोषः प्रतिपक्षाद्भीतिश्च । जया-देरित्यादिशब्देन क्वचिदैश्वर्यादेरन्यत्र तत्त्वनिर्णयस्य च सङ्ग्रहः हृच्छब्दो वक्षश्चित्तं च वदति । सहृदयैस्सारासारविवेचनार्हहृद-यवद्भिः, धार्यः क्वचिदाभरणतया ऽन्यत्राप्रमोषेण ॥ ३ ॥ नन्वपवर्ग-सिद्धौ यदन्तरङ्गन्तदेव विशदं तदर्थिभिरवगन्तव्यं तावदेव शिष्यादि-भ्योऽपि प्रवर्तितव्यं किमन्यैरिह कीर्त्यमानैरित्यत्राह ॥ शिष्टेति ॥

**मू० शिष्टा जीवेशतत्त्वप्रमितियुतपरोपासना**
**मुक्तिहेतुश्शक्यस्तत्तत्प्रकारावगतिविरहि-**
**भिर्नैव याथात्म्यबोधः ॥ ते तेचार्था विदध्युः**
**कुमतिविरचितास्तत्त्वबोधोपरोधं तस्मान्नि-**
**र्धूतसर्वप्रतिमतविमतिं साधये सर्वमर्थम् ॥ ४ ॥**

* यद्यपि वा सव्योऽश्वियामिति पाणिनिस्मरणात् स्त्र्यधिकारस्थेन आतश्चोप-सर्गे इत्यनुशिष्टेन अङैव भाव्यं न तु स्त्रियां क्तिना उभयोरपि स्त्र्यधिकारस्थत्वेन क्तिनोऽङा बाधावश्यम्भावात्तथाऽपि धानं हितिरिति क्तिनोऽनन्तरमुपसर्गयोग इति नोपसर्गनिमित्तकस्याङः प्राप्तिरिति । धाधातोर्भिदादिगणपाठस्तु संविधाश्रद्धादिसि-द्ध्यर्थमिति सुसूक्ष्ममीक्ष्यताम् ।

टी० शिष्टा चोदितेत्यर्थः। जीवेशावेव तत्त्वे जीवेशतत्त्वे तयोः प्रमितिरिहागमजन्या । परोपास्तेस्तत्त्वज्ञानमितिकर्तव्यता न तु स्वयं साधनम् । प्रमितियुता प्रमितिजनिताऽनुस्मृतिपूर्विकेत्यर्थः तदभिप्रायेणोक्तं जीवपरमात्मयाथात्म्यज्ञानपूर्विकेत्यादि । परोपासनेति सर्वविद्याभिप्रायं परस्य ब्रह्मण उपासनेति वा शक्य इत्यादि न हि द्रव्याद्रव्यविभागाभावे शिष्टोपासनमूलकतत्त्वप्रतीतिसिद्धिः तत्त्वनिरूपणाभावे च तत्त्वनिर्णयोपयुक्तयोस्तर्कानुमानयोर्व्याप्तिः शङ्काकलङ्किता स्यात् परोक्तानुमानानामन्यतरासिद्ध्यनैकान्तिकत्वाद्युद्भावनं च कथं स्यात् परो वा कथमस्मत्सिद्धान्तानभिज्ञः कथायामस्माभिरधिकुर्यात् । परकल्पितार्थभङ्गेन तदहङ्कारखण्डनञ्च तत्त्वाध्यवसायसंरक्षणार्थं । तत्तदिति प्रस्तुतौ जीवेशौ गृह्येते। अथवा तत्तत्प्रकृत्यादिप्रकारबोधाभावे तत्तत्प्रतिसम्बन्धिकं तयोरपि याथात्म्यं नावगम्येत ते ते चार्थाः ब्रह्मविवर्तपरिणामभिन्नाभिन्नत्वादयः कुमतिविरचिताः कुदृष्टिभिः कल्पिता भ्रान्तिविजृम्भिता इति वा अत एव कुमतिभिरर्थ्यन्त इत्यर्थाः न तु परमार्थाः प्रतिमतैर्विमतिर्विवादः तत्प्रसूता वा विरुद्धबुद्धिस्सर्वमर्थं मुमुक्षुभिर्ज्ञातव्यं परम्परयेत्यर्थः ॥ ४ ॥ तथाऽपि निर्धूतसर्वप्रतिमतविमतिं सर्वमर्थं साधये इत्यशक्योक्तिः त्रैकालिकसिद्धान्तभेदानन्त्यादित्याशङ्कोत्पाटनपूर्वकं प्रयोजकशिक्षया कृत्स्नानिष्टनिरासः कृत्स्नाभीष्टसाधनञ्च शक्यमिति स्थापयति ॥ आवापेति ॥

मू० आवापोद्वापतस्स्युः कति कति कविधीचित्रवत्तत्तदर्थेष्वानन्त्यादस्तिनास्त्योरनवधिकुहनायुक्तिकान्ताः कृतान्ताः ॥ तत्त्वा-

**लोकस्तु लोप्रमप्रभवति सहसा निस्समस्ता-
न्समस्तान्पुंस्त्वे तत्त्वेन दृष्टे पुनरपि न खलु
प्राणिता स्थाणुतादिः ॥ ५ ॥**

टी० एकस्मिन्नेव हि दर्शने व्याख्यातृभेदात्क्लेशाङ्कितप्रमेयानामावापोद्वापौ दृश्येते यत एकदेशिव्यपदेशः कविधीचित्रवत् कवीनां धीभिः कृतं काव्यादिकं कविधीचित्रं तद्वन्मतभेदा अप्यनन्तास्सम्भवन्ति तत्तदर्थेष्वस्तिनास्त्योरानन्त्यादित्यन्वयः अस्तिनास्त्योरिति प्रयोगपरं कुहना छद्म तत्सम्बन्धिन्यो युक्तयः कुहनायुक्तयो हेत्वाभासच्छलजातिरूपाः ताभिः क्रान्ताः सम्यक्त्वेनैव भाताः तत्त्वालोकः यथार्थाध्यवसायः *प्रस्तुतशङ्कानिरासार्थमपेक्षणीयान्तराभावात्सहसेत्युक्तम् । निस्सम इति निरवधिकत्वोपलक्षणं प्रतिरोधबाधरहित इत्यर्थः । उक्तस्यापकं वक्ष्यमाणार्थविशेषव्यञ्जकमप्यर्थान्तरं न्यस्यति । पुंस्त्व इति । पुनर्न प्राणिता संशयविपर्ययसामग्रीलोपान्न भासेतेत्यर्थः ॥ ५ ॥ इति । तत्त्वज्ञानप्रयोजनम् । अथ निरूप्यमर्थजातं साधर्म्यवैधर्म्यभेदैस्संगृह्य विभज्य च निर्दिशति द्रव्येति ॥

**मू० द्रव्याद्रव्यप्रभेदान्मितमुभयविधं तद्विदस्तत्त्वमाहुर्द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ ॥ अन्त्यम्प्रत्यक् पराक् च प्रथममुभयथा तत्र जीवेशभेदान्नित्या भूतिर्मतिश्चेत्यपरमिह जडामादिमां केचिदाहुः ॥ ६ ॥**

* प्रकृत· पु· पा ।

टी० अत्र तत्त्वमिति पदार्थमात्रोक्तिः मितं प्रमितं तथात्वं च सर्वसाधारणं तदपि हि सामान्यतः प्रमितमन्ततस्स्वपरनिर्वाहान्नानवस्था इदं च साधर्म्योक्तिमात्रं व्यवच्छेद्याभावेन लक्षणत्वासिद्धेरित्येके । निर्दिष्टव्यापित्वे सति तदन्यवृ*त्तित्वविरहाल्लक्षणमपि स्यादित्यन्ये । बाह्यकुदृष्टिव्यावृत्तास्तद्विदः अत्र तत्तदन्यरूपेण विभागेषु न नीलपीतादिवत्कोट्यन्तरावकाशः द्रव्यत्वात्यन्ताभाववत्त्वरूपेण तदन्यत्वस्य विवक्षितत्वाद्द्रव्यलक्षणं वक्ष्यति । जडमिह स्वगोचरज्ञानत एव प्रकाशमानमव्यक्तशब्देन व्यक्तमपि लक्ष्यते तदनन्यद्रव्यत्वज्ञापनार्थं प्रत्यक् स्वस्मै भासमानं पराक् परस्मा एव भासमानं भूतिर्विभूतिः स्वातिशयाधानार्थं नियन्तव्यद्रव्यम् । नित्या भूतिरिति नित्यप्राचुर्य्यतश्शुद्धसत्त्वमुपलक्ष्यते । इहादिमां नित्यभूतिं केचिज्जडामाहुरिति सयूथ्यमतभेदोक्तिः ॥ ६ ॥ इति द्रव्यविभागः ॥ प्रस्तुतस्य द्रव्यस्य द्रव्यावान्तरभेदानां च लक्षणमाह ॥ तत्रेति ॥

मू० तत्र द्रव्यन्दशावत्प्रकृतिरिह गुणैस्सत्त्वपूर्वैरुपेता कालोऽब्दाद्याकृतिस्स्यादणुरवगतिमाञ् जीव ईशो ऽन्य आत्मा ॥ सम्प्रोक्ता नित्यभूतिस्त्रिगुणसमधिका सत्त्वयुक्ता तथैव ज्ञातुर्ज्ञेयावभासो मतिरिति कथितं सङ्ग्रहाद् द्रव्यलक्ष्म ॥ ७ ॥

टी० तत्र द्रव्याद्रव्ययोर्मध्ये द्रव्यं दशावत् विकारधर्मवदित्यर्थः । ईश्वरादावपि मूर्तसंयोगा आगन्तुकास्सन्ति संचरति हि

* वृत्तिरहितत्त्वा पु॰ पा॰ ।

मूर्तं तस्य विभुनश्च संयोगा विद्यन्त एव । प्रकृतिशब्दः प्राग्वद्विकृतीनामप्युपलक्षकः त्रिगुणशब्दाभिलप्यद्रव्यमित्यर्थः तत्स्वगुणैरेव लक्षयति· गुणैरित्यादिना । इहाव्यक्तकालयोर्मध्ये त्रिगुणस्य रजस्तमसी पृथग् लक्षणे· सत्त्वन्तु बन्धकत्वेन विशेषितं । कालोऽब्दाद्याकृतिरिति । उपाधिकृतविभागैरब्दादिव्यवहारविषय इत्यर्थः तत्तत्परिणामवान्काल इति पक्षोऽपि वक्ष्यते ईश्वरादचेतनादणोश्च व्यवच्छेदायाणुरवगतिमानित्युक्तम्, ईशो ऽन्य आत्मा अणुर्व्यतिरिक्तश्चेतन इत्यर्थः जीवे विभुत्वोक्तिरीश्वरे ऽणुत्वोक्तिश्चान्यपरेति सूचायुक्तम् । सम्प्रोक्ता तत्परैश्शास्त्रैरिति शेषः त्रिगुणसमधिका त्रिगुणद्रव्यादन्या सत्त्वयुक्ता सत्त्वाख्यगुणविशेषवती त्रिगुणान्यत्वं कालादेरप्यस्तीति तद्व्यवच्छेदोनेन कृतः एतावन्मात्रेण त्रिगुणसाधर्म्यमित्यभिप्रायेण तथैवेत्युक्तं रजस्तमस्समानाधिकरणसत्त्वस्यापि तत्र सत्त्वात् सत्त्वं निर्मलत्वात्प्रकाशकमित्यादि समानमिति वा ज्ञातुर्ज्ञेयावभासो मतिः अहमिदं जानामीत्यहमर्थाश्रयतया सिध्यन्सकर्मकः प्रकाशो मतिरित्यर्थः तादृशावस्थयापि तद्विशिष्टं गृह्यते द्रव्यलक्ष्म सामान्यतो विशेषतश्चेति शेषः ॥ ७ ॥ इति द्रव्यतद्विशेषलक्षणम् ॥ ननु द्रव्यमद्रव्यमित्युभयमसिद्धं रूपादेराश्रयाभावात् रूपादितया विकल्प्यमानस्यैकस्यैवासत्त्वादिति पक्षद्वयमेकेनैव प्रतिक्षिपति ॥ एकार्थेति ॥

**मू० एकार्थप्रत्यभिज्ञा भवति दृढतरा दर्शनस्पर्शनाभ्यां संघातादेरयोगादवगमयति सा वस्तुरूपादतो ऽन्यत् ॥ एकस्मिन्दूरतादेरविशदविशदप्रत्यभिज्ञादि तद्वन् नैकत्वेऽप्यक्षभेदाद्विदुरमिव मिथस्संश्रयादिप्रसङ्गात् ॥ ८ ॥**

एवमाहुर्वैभाषिकाः निराधारा निर्धर्मकाश्च रूपादयश्चत्वारः पदार्थाः । ते चक्षुराद्येकैकेन्द्रियग्राह्या इति ।

वात्सीपुत्रास्तु शब्दादीन् पञ्च वैभाषिका विदुः ।
शब्दात्मानश्चतुर्ष्वेव केचिदित्यपरे ऽब्रुवन् ॥

तत्र निराधारत्वं तावत्प्रतिसन्धानविशेषेण निरस्यति. अस्ति हि दृष्टमेव स्पृशामीति द्वीन्द्रियग्रा*ह्या धीः सा तावन्न संशयात्मा विरुद्धानियतकोट्य†नवलम्बात्. न च विपर्ययः स्वारसिकबाधादृष्टेरनन्यथासिद्धेश्च तदेतदुभयं दृढतरेति संगृहीतं ग्रहणमिति वक्तव्ये प्रत्यभिज्ञेत्युक्तिर्ज्ञातृज्ञेयस्थैर्यस्यापि व्यक्त्यर्थो सेयं न रूपमात्रगोचरा तस्य स्पर्शनविषयत्वाभावात् अन्यथाऽन्यस्यापि स्पर्शनेन रूपोपलम्भनप्रसङ्गात्. न च स्पर्शमात्रगोचरा तस्यापि दृग्विषयत्वाभावात्. तथात्वे चाऽस्पृशतोऽपि दृशा स्पर्शधीप्रसङ्गात्. न चोभयविषया दर्शनस्पर्शनयोः प्रत्येकविषयत्वादेव. अत इयं प्रत्यभिज्ञा रूपाद्यतिरिक्तं तदाश्रयभूतं वस्तु प्रकाशयति इदं रूपस्पर्शवदिति । ननु रूपस्पर्शयोर्नियताक्षवेद्यत्वेऽप्यवस्थाभेदात् प्रतिसन्धानं स्यात्, न स्यात् न ह्यस्माकमिव स्थिरमवस्थान्तरभाक्किंचित्वन्मते विभज्य वैभाषिकपक्षस्त्वतिमन्दः तदिह संहतासंहतस्वलक्षणभेदमात्रन्तु स्यात् तत्र संघातस्वरूपन्तस्य प्रतिसन्धानविषयत्वं च न युज्यते इत्याह । सङ्घातादेरयोगादिति । सङ्घातोऽपि सङ्घातिस्वरूपस्तदन्यो वा. पूर्वत्र न प्रतिसन्धानपदं, द्वितीये सत्योऽसत्यो.वा आद्ये द्रव्यवाद एव वरं संसर्गाख्यधर्मस्वीकारो वा तेन परस्परविशिष्टस्वरूपमेवेत्यपि निरस्तं विशेषणविशेष्यतत्सम्बन्धा-

---

* ग्राह्यविषयाधीरिति पु॰ पा॰ । † कोट्यनुपलम्भादिति पु॰ पा॰

तिरिक्तविशिष्टायोगात् । द्वितीये कथं प्रत्यभिज्ञात्मकार्थक्रियाकारित्वं निरन्तरस्वरूपं संङ्घात इति पक्षेऽपि प्रत्येकपक्षवन्नेन्द्रियान्तरेण प्र*तिसिद्धिः स्यात्. अन्यथा रसादिष्वपि संहतेषु तत्प्रसङ्गात्. एतेन देशैक्यमेव संघात इत्यपास्तम् एकदेशान्वयिनां–चैकालिकानामेव संघातत्वप्रसङ्गात्. देशोऽपि तदा तदभिन्न एवेति चेन्न क्षणभङ्गस्य निरसिष्यमाणत्वात्. न च ते देशा आकाशादिरूपास्तस्य युष्माभिरावरणाभावादिमात्रत्वज्ञापनात्. न चोपादानरूपः स्पर्शरूपादीनां भिन्नभिन्नक्षणोपादानत्वाभ्युपगमात् एकोपादानत्वे तु तदेव द्रव्यं पृथिव्यादिदेशैक्यात्संघातत्वे तु तत्संघातस्यापि संघातान्तरापेक्षायामनवस्था अन्योन्याश्रयोवा. । त्वन्मते पृथिव्यादिः रूपादिसंघातातिरिक्तो न तथा पृथिव्यादेरपि देशैक्यं पृथिव्यादिसंघातातिरिक्तं न अतिरिक्तं चेत्पृथिव्यादेर्देशैक्येऽपि तद्देशसंघातातिरिक्तं पृथिव्यादिदेशानां देशान्तरैक्यमेव प्रयोजकं स्यात् एवं सत्यनवस्थेत्यर्थः । एवं च पृथिव्यादिसंघातप्रयोजकैकदेशानपेक्षायां तु रूपादेस्संहतत्वे पृथिव्यादिसंहतत्वमेव प्रयोजकं स्यात् पृथिव्यादेस्संहतत्वे तु रूपादेस्संहतत्वमेवेत्यन्योन्याश्रय इत्यर्थः ॥ अथ स्यात् गृहीतेन रूपेण पूर्वमेव स्पर्शोऽनुमितः तच्च दृष्टरूपानुमितमेव स्पृशामीत्येव प्रतिसन्धानमिति चेन्न । द्वयोरेकाश्रयत्वग्रहणमन्तरेण व्याप्तिग्रहणासम्भवादनुमानासिद्धेः । दृष्टे रूपे स्पृष्टे च स्पर्शे भेदाग्रहात् दृष्टमेव स्पृशामीति बुद्धिशब्दाविति चेन्न. भेदेनैव तयोर्गृह्यमाणत्वात् रसादिष्वपि प्रसङ्गाच्च. । ननु निर्विषयैवेयं प्रत्यभिज्ञा वासनावशात्स्यादिति चेन्न. योगाचारनीत्या रूपादेरपि निह्नवप्रसङ्गात्. बाधाबाधाभ्यां विशेष इति चेन्न. स्वारसिकबाधा-

* प्रतिसन्धिरिति पु. पा. ।

दृष्टयौक्तिकबाधस्य समत्वाच्च अतो रूपस्पर्शवदिदमिति मिथो भिन्नाविशेषणमेकं विशेष्यं सर्वलोकसिद्धं दुरपह्नवम् । यत्तु मतान्तरं स्पर्शमात्रस्वरूपो वायुः स्वलक्षणः तैजसादयस्तु द्वित्रिचतुःस्वभावाः अतस्तेजःप्रभृतीनां द्वीन्द्रियग्राह्यत्वमिति तदप्यसत्. एकस्यानेकस्वभावत्वायोगात् तदभ्युपगमे च जैनमतावतारात्. अनेकधर्मत्वे त्वस्मन्मतसिद्धेः । एकस्मिन्नेव रूपादिस्वभावभेदकल्पनेति चेन्न । सर्वथासिद्धस्य कल्पनायोगात् क्वचित्सिद्धौ द्रव्यवादसिद्धेश्च । एतेन भेदोपलम्भाभावादभेदसिद्धिरिति प्रत्युक्तं विपरिवर्तस्यैव सुवचत्वात् न हि रूपमिदमिति घटादौ*क्वचित्प्रत्येति किन्तु तद्वदिति सहोपलम्भनियमादिति हेतुचतुष्टयं च निरसिष्यामहे.† न च रूपादेर्धर्मिणश्च सहोपलम्भनियमः पीतशङ्खादिभ्रमे रूपमन्तरेण रूपिणस्तदन्तरेण तस्य चोपलब्धेः । न चात्रान्यश्शङ्खस्तदानीमुत्पन्नः, नापि शङ्खरूपोऽयं पित्तविवर्तः स्पर्शनेन स एवायं शङ्ख इति गृहीतेः । एवं स्पर्शादावपि । यदि चासौ हेतुरङ्गीक्रियते किमपराद्धं सहोपलम्भनियमादभेदो नीलतद्धियोरिति वदद्भिः, अतस्सहोपलम्भनियमाद्धर्मधर्मिभेद एव सिद्ध्यति । किंच रूपस्पर्शयोस्सहधीनियमस्त्वयापि दुस्साधः अतस्तयोरयुगपदुपलम्भादभेदासिद्धावेकस्य प्रत्यभिज्ञाविषयस्य ततोऽन्यत्वं ‡स्पष्टम् । यत्तदन्यच युष्माभिरुक्तम् ।

अनुपप्लवभूतार्थस्वभावस्य विपर्यये ।
न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥

---

* कश्चित्क्वचिदिति पु॰ पा॰ ।
† निरसिष्याम इति वक्तव्ये आत्मनेपदं चिन्त्यम् ।
‡ प्रस्पष्टमिति पु॰ पा॰ ।

तदिह प्रतिसन्धेयम्· बुद्ध्यन्तराणि च तद्बाधकान्यभिन्नेन्द्रियजन्यान्याह· एकस्मिन्निति· आसन्नदेशे दृष्ट्वा दूरं गतस्याविशदा प्रत्यभिज्ञा दूरे दृष्ट्वा समीपं गतस्य तु विशदा एवं क्रमात् बहलविरलालोकादिवशादप्युभयथा ग्राह्या अल्पधर्मविशिष्टतया ग्रहणम् अविशदग्रहणं भूयोधर्मविशिष्टतया तु विशदग्रहणं न तु न्यूनाधिकदर्शनमात्रं तथा सति घटपटदर्शने घटमात्रदर्शने च विशदाविशदव्यवहारप्रसङ्गात् न चात्र रूपमेवाविशदं विशदं च भाति पीतशङ्खादिभ्रमे रूपान्तरवत्तया भातस्यापि तथा प्रत्यभिज्ञानात्· नापि परिमाणं तस्यापरमार्थस्य त्वयाऽनभ्युपगमात्· दूरे च परिमाणान्तरवत्तया वस्तुनः स्फुरणात् । अत एव नैकत्वसंख्या· दूरासन्नयोरेकानेकत्वबोधे तदेवेति दर्शनात्· अत्रोत्तरेणादिशब्देन संशयविपर्ययधियोर्ग्रहणं संशयविपर्ययौ तावदधिष्ठानग्रहे विशेषाग्रहात् समानधर्मग्रहाच्च भवतः तथा दृष्टिनियमश्च नान्यथयितुं शक्यः ।

अधिष्ठानस्य कार्त्स्न्येन भाने ऽभाने च न भ्रमः ।
भाताऽभाताकृतिभिदा कथं निर्धर्मके भवेत् ॥

बाधकधीश्चाधिष्ठानातिरिक्ततदसाधारणधर्मविषया तत्स्वरूपग्रहस्यारोपासहत्वात् जिज्ञासा च नात्यन्तानुपलब्धे अदर्शनात् न च निश्शेषविदिते वेद्याभावात् अतस्तद्विषये विदिताविदिताकारकत्वं सिद्धं, तदिदं सर्वमभिप्रेत्य भिन्नाभिन्नवादिभिरप्युक्तम् ।

आविर्भावतिरोभावधर्मकेष्वनुयायि यत् ।
तद्धर्मि यत्र वा ज्ञानं प्राग्धर्मग्रहणाद्भवेत् ॥ इति ।

अत्रागृहीताशेषधर्मधर्मिग्रहणन्तु न मृष्यामहे ।

यत्तु बौद्धैरुक्तम् ।

धर्मोपकारशक्तीनां भेदे तास्तस्य किं यदि ।
नोपकारस्ततस्तासां तथा स्यादनवस्थितिः ॥
नानोपाध्युपकाराङ्गशक्त्यभिन्नात्मनो ग्रहे ।
सर्वात्मनोपकार्यस्य को भेदः स्यादनिश्चित इति ॥

तदपि मन्दम् अन्वयव्यतिरेकसिद्धकारणवैचित्र्यनिबन्धनस्वभावभेदवतामुपाधीनां परस्परव्यभिचारिवृत्तिनियतसामग्रीबोध्यत्वेन ग्रहणाग्रहणयोरुपपत्तेरिति । नन्वस्तु प्रतिसन्धानबलाद् द्वीन्द्रियग्राह्यं किञ्चित् तत्तु रूपरसाद्यात्मकमिति वा तदाश्रय इति वा न मृष्यामहे तेषामेवाभावात् एकस्मिन्नेव ग्राहकभेदात्तत्तद्धर्मधीः यथा मणिकृपाणदर्पणादिव्यञ्जकभेदान्मुखादेरणुत्वपृथुत्वमलिनत्वविमलत्वादिधीः सव्यदक्षिणविपर्यासश्चेति तमिमं पक्षं प्रतिक्षिपति नैकत्वेऽप्यक्षभेदाद्विरुद्धधर्मिवेति । इह तावत्सर्वत्रासिद्धस्य कल्पनाऽनुपपत्तिरुक्ता । बाधकान्तरमाह । मिथ इति । चक्षुरादिग्राहकवैजात्यं हि ग्राह्याकारभेदात्कल्प्यते तदसिद्धौ कथं तद्ग्राहकभेदक्लृप्तिस्तदभावे च कथन्तत एव ग्राह्याकारभेदक्लृप्तिरिति इह तु मध्ये बुद्धिभेदप्रवेशे चक्रकम् । अस्तु कारणभेदादिन्द्रियभेदक्लृप्तिरिति चेन्न इन्द्रियवैजात्यव्यवस्थापकस्य तस्यानुपलम्भात् तत एव तत्क्लृप्तौ तत्रापि मिथस्संश्रयात् । ननु दर्पणादिग्राहकभेदाद् ग्राह्ये सव्यदक्षिणविपर्यासः पृथुत्वाणुत्वविमलत्वमलिनत्वकल्पना च दृष्टेति चेत्सत्यं दर्पणादेस्तद्धर्माणां च भेदेन दृष्टत्वात्तदधीनाध्यासभेदो यथादर्शनमङ्गीक्रियतेऽत्र तु न तथा अक्षेषु च ते बहिः कल्पनीयानां रूपादीनामसम्भवात् उपाधिज्ञाननिरपेक्षेयमौपाधिकभेदधीरस्तु मण्डूकवसाक्तदृष्टेर्वेणूरगबुद्धिवदिति चेन्न तत्तद्दोषशक्त्या तत्तद्भ्रान्तिभेदसिद्धेः कल्प्याकारस्य क्वचित्सम्भवाच्च चक्षुरादिस्वभावा एवात्रापि रूपादिभ्रान्तिहे-

तवो दोषा इति चेन्न । सर्वकल्पनाधारे स्वलक्षणेऽप्यनाश्वासप्रस-ङ्गात् ततश्चेन्द्रियस्वभावभेदोऽपि दुर्वचः अधिष्ठानाकाङ्क्षायामपि बुद्ध्यैव चरितार्थत्वात् तथा चेन्द्रियस्वभावभेदोऽपि नापेक्ष्यः पूर्वपूर्वबुद्धिशक्तिभेदादेवोत्तरोत्तरविचित्रभेदोपपत्तेः । ननु स्पर्शनेन्द्रियस्याश्रितैर्भागभेदैः करतलप्रकोष्ठादिवर्तिभिरेकस्यैव दुरालभाः स्पर्शस्योल्लेखभेदा भवन्तीति चेन्न । स्पर्शस्यात्र भेदेनानुल्लेखात् दुरालभावयवानान्तु वह्निकणवच्छरीरमाविशतान्तद्विकृतिजनकत्वमात्रम्प्रदेशभेदेन विकृतितारतम्यं च वह्न्यादिभिरिव नानुपपन्नम् । ननु मनुष्यपशुमृगादीन्द्रियभेदाद्वृत्त्यादिष्वानुकूल्यादिवैपरीत्यं तत्तारतम्यं च दृश्यते । न च वस्त्वेवानुकूलप्रतिकूलस्वभावं विरोधात् सर्वेषामविशेषेण सर्वदोभयविधानुपलम्भात् अनेकान्तवादानभ्युपगमाच्च । एवं चक्षुरादिभेदाद्रूपादिभेदभ्रमस्स्यादिति तदपि न तत्तत्कर्मशक्तिवैचित्र्यात्तदनुकूलत्वादिव्यवस्थोपपत्तेः वस्तुषु चानुकूलत्वप्रतिकूलत्वे सुखदुःखजनकत्वे एव तथाऽपि सुखदुःखे बुद्धिभेदावेव भवद्भिरपि *स्वीक्रियेते ततश्चात्र विषयभेदाद्बुद्धिभेदस्तस्मादेव च स इति प्रसङ्गः स्यादिति चेन्न । विषयभेदस्य स्वकारणाद्यधीनत्वात् तदुत्पाद्यबुद्धिभेदस्य तत्कारणत्वाभावाद् द्वयोरपि परस्परप्रतीतिनिरपेक्षप्रमाणसिद्धत्वाच्च एवमुपाधिभेदैरेकस्मिन्नेव ह्रस्वत्वदीर्घत्वधीनिदर्शनान्यपि नेतव्यानीति अत्रादिशब्देन पूर्ववत् संशयाद्यसम्भवो नीलपीतशीतोष्णमधुराम्लादिभेदासम्भवश्च गृह्यते । न हि नीलादिभेदेष्विन्द्रियभेदोपाधिकत्वं शक्यं वक्तुं रूपादिभेदमिथ्यात्वे तदन्तःपातिनीलादिभेदोऽपि मरीचिकावीचिकान्यायेन मिथ्यैव स्यादिति चेन्न । असिद्धस्यासिद्धेन दुस्साधत्वात् । मिथो निदर्शनेन साधने मिथस्संश्र-

* स्वीकृताविति पु॰ पा॰ ।

यात् निदर्शनमात्रेण निश्शेषनिह्नवप्रसङ्गाच्चेति । तथाऽप्येकमनेकस्वभावमिति व्याहतमिति चेन्न । स्वरूपभेदस्यानभ्युपगमात् धर्मभेदस्याविरुद्धत्वात् ।

वेद्यहेतुफलाकारैर्भिन्नैरेका समेति धीः ।
तथा बाह्योऽपि दृष्टत्वाद्युगपत्क्रमशोऽपि नः ॥
प्रतिसम्बन्ध्यनेकत्वं यथा नैकस्य बाधकम् ।
तथा सम्बन्ध्यनेकत्वं स्वाभीष्टे च समत्वतः ॥

॥ इति द्रव्यसिद्धिद्रव्याद्वैतभङ्गौ ॥

एवमेकाश्रयानेकदृष्टावन्यतरनिन्ह्नवार्थिनौ पुनरपि धर्मधर्मिभावभङ्गमुखेन प्रवृत्तौ प्रतिहन्येते अन्यथा अन्तस्तद्धर्मापदेशादित्याद्यनिरूढप्रायं स्यात् । नन्वनुमानं प्रमाणमिच्छन्न धर्मधर्मिभावं बाधितुमर्हति तस्य हेतुसाध्यधर्माश्रयावश्यम्भावात् आह च धर्मकीर्तिर्हेतुबिन्दौ ।

पक्षधर्मस्तदंशेन व्याप्तो हेतुस्त्रिधैव सः ।
अविनाभावनियमाद्धेत्वाभासास्ततोऽपरे ॥ इति ।

अन्येऽपि ग्राह्यधर्मस्तदंशेन व्याप्तो हेतुरिति सत्यम् काल्पनिकहेतुसाध्यधर्मद्वारा अनुमानप्रवृत्तिः पारम्पर्येण तु स्वलक्षणविश्रान्त्या भाक्तमनुमानप्रामाण्यमिति हि बौद्धानां रहस्यम् तत्त्वगत्या चतुर्विधानामपि तेषां धर्मधर्मिभावःचेष्यः अतस्तद्भङ्गमनूद्य प्रत्याह धर्म इत्यादिना ।

**मू० धर्मी निर्धर्मकश्चेत्कथमिव भविता सोऽभिलापादियोग्यो धर्मेणान्येन योगे न च भवति तथेत्यव्यवस्थेति चेन्न ॥ कश्चिद्धर्मोऽपि धर्मी स्फुटमतिमथने स्वान्यनिर्वाहकत्वं**

**तन्निष्कर्षप्रयोगेष्वपि भवति पुनस्तस्य धर्मी विशेषः ॥ ६ ॥**

अयमर्थः यस्त्वया कश्चिद्धर्म इष्यते स निर्धर्मकः सधर्मकोवा आद्ये तस्य शब्दवाच्यत्वं न स्यात् अविशिष्टस्य व्युत्पत्त्याद्यगोचरत्वात् सर्वधीशब्दानां विशिष्टविषयत्वं च भवतां भाष्यादिषूक्तम् । द्वितीये तु येन धर्मेण धर्मः सधर्मकः सोऽपि पूर्ववद्धर्मान्तरेण धर्मी स्यादित्यपरापरापेक्षायामनवस्था द्वित्रादिपर्वमात्रे विश्रम इति व्यवस्थाभावात् धर्मत्वञ्च धर्माणाम्भावः अतस्तस्यापि धर्मत्वं वाच्यम् । न चेतत्तस्यात्मैवात्माश्रयात् न चान्यत् अनवस्थानादेवेति चेत् तन्न सर्वेषां धर्माणां निर्धर्मकत्वानङ्गीकारात् कश्चिद्धर्मोऽपि धर्मी स्प*ष्टं स्फुटदृष्टं हि नापन्होतव्यम् त्वयाऽपि हेतुसाध्यादिधर्माणां पक्षधर्मत्वादिधर्माः स्वीकार्याः अन्यथाऽनुमानासिद्धौ क्षणभङ्गादिसाधनायोगात् । अतिमथने अत्यन्तचर्चायाम् । यद्वा स्फुटमतिमथने विशदबुद्ध्या सावधानं विमर्शे सतीत्यर्थः । स्वान्यनिर्वाहकत्वं स्वपरव्यवहारादिव्यवस्थापकत्वम् । यत्र ह्यनवस्थाभयाद्धर्मान्तरं नेष्यते तत्र निमित्तान्तरनिरपेक्षौ तद्व्यवहारौ यथा गोशब्दस्य व्यक्तिवृत्तावित्थम्भावभूतं गोत्वं निमित्तम् गोत्वे तु न निमित्तान्तरमपेक्षते आनन्त्यव्यभिचाररूपानुपपत्त्यभावात् एवं शुक्लादिशब्देष्वपि । ननु गोः शुक्ल इत्यादिविशेष्यपर्यन्तोक्तौ तथा स्यात् क्वचिद्गुणमात्रविषयेषु शुक्लादिशब्देषु भावप्रधानेषु द्व्येकयोरित्यादिषु त्वतलाद्यन्तेषु जातिर्गुणः क्रियेत्यादिषु च वाच्यानां तत्तद्धर्माणामिदन्त्वेन निर्देशादित्थम्भावसापेक्षत्वेऽनवस्था अनपेक्षत्वे त्विदमित्थमिति हि सर्वा प्रतीतिरिति भाष्यादिवि-

* स्फुटमिति पु· पा· ।

रोध इत्यत्राह तन्निष्कर्षप्रयोगेष्वित्यादि। अयं भावः उदाहृतेषु नियतिनियतनिष्कर्षकशब्देषु जातिगुणादेः प्रधानतया निर्देशेऽपि सन्ति केचिद्यथाप्रमाणमित्थम्भावाः त्वयाऽपि हेतुसाध्या*दिधर्माणां पक्षधर्मत्वादिधर्माः स्वीकार्याः अनवस्था च कथञ्चिदुपशमनीया स्वीकृतञ्च संवेदनसंवेदने शब्दशब्दादौ स्वपरनिर्वाहकत्वम्। न चात्र कर्मकर्तृविरोधः स्वोत्पादकत्वादाविव पौर्वापर्यादिवैगुण्याभावात्। किञ्च स्वलक्षणादीनां जात्यादीनाञ्च संवृत्तिसिद्धानां निर्धर्मकत्वे ऽपि कथञ्चिदभिलापार्हत्वम् त्वयाऽपि ग्राह्यमन्यथा तत्तत्संव्यवहारेण कथादिप्रवृत्त्ययोगात् अतो निर्धर्मकं शब्दवाच्यं न भवतीति स्वसिद्धान्तविरोधः स्ववचनव्याघातश्च। आस्तामेतत् समानाधिकरणस्येव व्यधिकरणस्यापि व्यावर्तकत्वादित्थम्भावत्वं सिद्ध्यति तथा च नियतनिष्कर्षकप्रयोगेष्वप्येतेषु धर्मी धर्मं विशिनष्टि यथा पटस्य शौक्ल्यं खण्डस्य गोत्वमित्यादिषु धर्मिविशेषो धर्मस्य स्वेतरनिष्ठाङ्ख्यावृत्तिधीहेतुरित्यर्थः। न चात्र मिथः संश्रयः विशेषणविशेष्यधियोस्तद्व्यवहारयोश्च मिथो जन्यत्वाभावात् निष्कर्षानिष्कर्षव्यवहारयोश्च विवक्षाभेदायतत्वात् उभयथा व्यवहारस्य सर्वत्र सर्वैरपि दुरपह्नवत्वात्। यश्चात्र समानाधिकरणप्रयोगे विशिष्टत्वेनावस्थितोऽप्यर्थः स्वधर्ममन्यनिष्ठाद् व्यवच्छिनत्ति स एव पटस्य शौक्ल्यमित्यादिप्रयोगे गुणीभवन् कण्ठोक्तेन स्वसम्बन्धेन विशिनष्टि गोत्वं शौक्ल्यमित्यादिपदेष्वपि तस्य भावस्त्वतलावित्यादिविहिततद्धिताश्रयवाच्यत्वेन धीस्थ एवार्थो निष्कृष्यमाणः स्वविशेषणनिरूपकतया ऽनुशिष्यते एवं विशेष्यस्यैव द्विधा विशेषणयोग इति व्यञ्जनाय पुनः शब्दो नि-

* साध्यादीनामिति पु० पा०।

त्कर्षप्रयोगेषु विशेषं वा द्योतयति ॥ पुनरपि धर्मस्य धर्मिणि वृत्तिं विकल्प्य तदुभयमपन्हुवानमप्रत्याह ॥ तच्छून्ये इति ॥ ६ ॥

मू० तच्छून्ये तस्य वृत्तिः कथमिव घटते तद्विशिष्टे तु वृत्तौ स्वाधारत्वप्रसङ्गस्तत इह न गुणो नापि धर्मीत्ययुक्तम् ॥ तद्वृत्तिर्धर्मिमात्रे न भवति तत एवास्य तच्छून्यताऽतो नोक्तौ दोषौ स्वधीवाग्विहतिरितरथा तद्वदन्ये ऽपि जल्पाः ॥ १० ॥

टी० योऽयं रूपादिः द्रव्यस्य गुणतयेष्टस्स किं स्वशून्ये वर्तते स्वविशिष्टे वा नाद्यः व्याघातात् अन्यथा सर्वेषां सर्वेषु वृत्तिः किं न स्यात् खपुष्पादीनामपि कथं निषेधः योग्यानुपलब्ध्येति चेन्न· तदुपलब्ध्यनुपलब्ध्योरपि विरोधाभावात्· किं चानुपलब्धिरभावोपस्थापनेन भावं विरुन्ध्यात् तदा कथं तच्छून्ये तस्य वृत्तिः । न द्वितीयः आत्माश्रयापातात् विशिष्टं विशेषणविशेष्यतत्सम्बन्ध्यातिरिक्तं न किंचित् तस्मिन् प्रमाणाभावात् । न चोक्तेषु त्रिष्वन्यतममात्रं तावति विशिष्टधीव्यवहारयोरभावात् अतः सम्बन्ध्युभयं विशिष्टशब्दार्थ इति स्यात् । तथा च स्वविशिष्टे वर्तमानो गुणस्स्वविशेष्यमिव स्वात्मानमपि स्वाधारीकुर्यात् किमत्रानिष्टं स्वस्य स्वस्मादन्यत्वम् अभेदे कथमाधाराधेयभावः प्रतिसम्बन्धिभेदाभावात् न चात्र भिन्नाभिन्नत्वं दृष्टं युष्मदिष्टं वा· एवं वृत्त्यनुपपत्त्या वा गुणगुणिनोरन्यतरपरिशेषः स्यात् उभयपरित्यागो वेति परोक्तमयुक्तं । कथमित्यत्राह· तद्वृत्तिर्धर्मिमात्र इति । न वयं तच्छून्ये तद्विशिष्टे वा तस्य वृत्तिं ब्रूमः अपि तु वस्तुतस्तद्विशिष्टे विशेष्ये तद्विशि-

ष्ठवृत्त्यभावे तच्छून्ये वृत्तिस्स्यादेवेति चेत्तत्राह। न भवति तत एवास्य तच्छून्यतेति। यत्र यद्वर्तते तस्य कथन्तच्छून्यत्वं न च तद्वृत्ति वर्तमानस्य तस्मिन्नपि वृत्तिरिति नियमः घटवति भूतले वर्तमानानां गुणादीनां घटे ऽपि वृत्तेरदृष्टेः। एवं घटस्याऽपि। ननु सर्वत्र वृत्तिविकल्पेन विशिष्टं दूषयतः किं निदा*नं किं क्वचिदपि विशिष्टप्रतीतिरेव नास्ति सत्यपि वा निष्कारणिका सकारणाऽपि वा दुर्निरूपकारणा निरूपितकारणापि वा निर्विषया सविषयापि वा बाधितविषयेति। नाद्यः लौकिकपरीक्षकबहिष्कारप्रसङ्गात् सर्वशून्यवादिना ऽपि हि संवृत्या विशिष्टधीरिष्यते। न द्वितीयः कार्यस्य कारणावश्यम्भावात् तदनभ्युपगमे तु लोकायतनावतारात्। इष्यते ह्यविद्यावासनादिभ्रान्तेरपि निदानं भवद्भिः। अत एव न तृतीयः। नापि चतुर्थः स्वपरलोकव्यवहारविरोधादेव। कथं किलासौ विशिष्टप्रतीतिः कथं च निर्विषया। न पञ्चमः अद्यापि बाधस्याशामोदकायमानत्वात्। विकल्पप्रामाण्यं च वक्ष्यते। अतो यथादर्शनं क्वचित्किञ्चिद्वर्तते न स्वस्मिन्निति व्यवस्थिते त्वदुक्तौ व्याघातात्माश्रयदोषौ न स्त इत्याह। अतो नोक्तौ दोषाविति। अन्यथाऽनिष्टमाह। स्वधीवाग्विहतिरितरथेति। स्वधीविहतिः स्ववाग्विहतिः स्वधीवाग्विहतिरिति प्रत्येकसमुदायपरं योज्यम्। कथन्तवापि विशिष्टधीविरहे तद्विषयव्याहारव्यवहारौ उदाहरणोपनयौ च वस्तुतस्तद्धर्मविशिष्टविषयौ। बुद्धिस्स्वप्रकाशा अभिन्नदेशकालं स्वलक्षणं कल्पनापोढमभ्रान्तं प्रत्यक्षम्। प्रतिवादिवाक्यमसाधकं विशिष्टन्नास्तीत्यपि विशिष्टमात्थ तन्न विशिष्टविषयस्वधीविरुद्धमिति। सन्त्यन्ये ऽपि धर्मधर्मिभावभञ्जकाः परेषां सम्प्रसङ्गास्ते कथमुद्धार्या इत्यत्राह। तद्वद-

* निदर्शनमिति पा·

न्येऽपि जल्पा इति। अन्ये ऽपि नित्यसमादिरूपाः शुष्कप्रलापास्तद्वन्निरस्तवाक्यैस्तुल्यं वर्तन्ते। उत्थानपरिहारप्रकारभेदेऽपि स्वव्याघातादिदोषाविशेषादित्यर्थः।

घटकुड्यवदन्यत्वेऽनन्यत्वे तु स्वरूपवत्।
न गुणस्य गुणत्वं स्यादित्यसत्स्वोक्तिबाधतः॥
दूष्यादन्यदनन्यद्वा दूषणं न तु दूषणम्।
गर्दभादिवदन्यत्वे ऽनन्यत्व दूषणीयवत्॥

एवं सम्बन्धत्वासम्बन्धत्वसमानकालत्वासमानकालत्वयुगपद्ग्राह्यत्वायुगपद्ग्राह्यत्वादिविकल्पस्य बाधास्तदुद्धाराश्च विशुद्धबुद्धिभिरवधातव्याः। दूष्येणापि सम्बन्धादिविकल्पदोषसाम्यात्। इति धर्मधर्मिभावः॥

टी० एवं द्रव्याद्रव्ये सामान्यतः प्रसाध्य द्रव्येषु प्रथमोद्दिष्टं त्रिगुणमादौ परीक्ष्यते। तत्र कश्चिदाह धीमन्निदर्शनतया प्रसिद्धसुरगुरुर्लोकायतं शास्त्रमारभ्य पृथिव्यादीनि चत्वार्येव तत्त्वान्याह अधिकानि तु तावन्मात्रविभागोद्देशादपोढानि अतिरिक्तचेतननिषेधाच्चेति अथ किं लोकायतसूत्राणि स्वयमप्रमाणतयोपादीयन्ते तदुपस्थापकतया वा। नाद्यः असम्मतेः गुरूक्तेश्च विरोचनोपदेशवदसुरमोहनार्थत्वात्। न द्वितीयः उक्तेषु विवादाभावादधिकानां निषेधस्य निष्प्रमाणकत्वात् अनुपलब्ध्या निषेध इति चेन्न। योग्यानुपलब्धेरभावादितरस्य निषेधकत्वायोगात् उपलब्ध्या चेच्चतुर्णामुपादानमाकाशेन किमपराद्धम्। अस्ति ह्यासंसारं तदुपलम्भः। न चाचाक्षुषत्वादिभिर्बाधः अरूपवत्त्वादिना वाय्वादेरपि निह्नवप्रसङ्गात् शेषं च वक्ष्यामः। अथोपलम्भबलादस्त्वाकाशमपीति चेत् तथैव भिन्नाभिन्नभवानुभूतार्थप्रतिसन्धाताऽप्यभ्युपगन्तव्यः। अस्तु तर्हि षड्धा-

नुवादः अध्वर्युभिस्तथाऽध्ययनादिति चेतर्ह्युद्गातृभिश्चतुर्थामध्ययनाच्चतुर्थानुवादः स्यात् । अनुक्रमविरुद्धमन्यतो ग्राह्यमिति चेत्समानं भूयसां च प्राबल्यादुपबृंहणप्राचुर्याच्च न चात्र मिथो विरोधान्नरर्थक्यार्थवादमात्रता सम्यग्न्यायानुग्रहमात्रेण बलाबलदृष्ट्या विरोधशान्तेः । केचित्तु प्रकृत्यादिशब्दैरदृष्टादिकं कथ्यत इत्याहुः यथाऽऽहोदयनः 'इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो मूलत्वात्प्रकृति' रित्यादि तदेतदपष्ठु । नियतक्रमानुपूर्वप्रकृतिविकृतिपरम्परोपदेशात् बाधाभावे भाक्तत्वायोगादन्यथा सर्वत्र श्रुतहान्यश्रुतकल्पनाप्रसङ्गाच्च । तदेतत्सर्वमभिप्रेत्याह ॥ स्वच्छन्देनेति ।

**मू० स्वच्छन्देनागमेन प्रकृतिमहदहङ्कारमात्रा-**
**द्यसिद्धिर्नाध्यक्षेणाप्रतीतेर्न पुनरनुमया व्या-**
**प्तिलिङ्गाद्यसिद्धेः । सत्त्वाद्युन्मेषभिन्नान्महत**
**इह तथा स्यादहङ्कारभेदः प्राच्याद[illegible]णि**
**मात्राः प्रजनयति परो मध्यमस्तूभया-**
**र्थः ॥ ११ ॥**

टी० साधकबाधकप्रमाणाभावे विशिष्टार्थबोधनसामर्थ्यमागमस्य स्वाच्छन्द्यम् । आगम इह श्रुतिस्मृतीतिहासादिः करणदोषबाधकप्रत्ययविरहादस्मदाद्यतीन्द्रियविषयं शास्त्रमपि प्रत्यक्षवच्छ्रद्धेयमेव । अत आगमिकानामपि सद्भावनिश्चय इति सिद्धिशब्दाभिप्रायः । ननु प्रत्यक्षसिद्धं पृथिव्यादितत्त्वं तच्च कार्यावस्थं प्रकृतिद्रव्यमेवेति ब्रूथ तथा सति कारणावस्थमपि तदेवेति कथन्तस्याप्रत्यक्षत्वम् । अश्रुतागमैरप्रतिसंहितव्याप्तिभिश्च बालादिभिरपि चक्षुरादिकरणानि व्यवह्रियन्ते ऽतः कथन्तेषामागमिकत्वन्तत्राह । नाध्य-

त्रेणेति । प्रत्यक्षविरुद्धेयं प्रतिज्ञेत्यत्राह अप्रतीतेरिति । न हि प्रकृत्याद्यवस्थस्य प्रत्यक्षतः प्रतीतिरस्ति अवस्थादिभेदैरेकस्यैव प्रत्यक्षत्वाप्रत्यक्षत्वे बहुलं लोकदृष्टे चक्षुरादिव्यवहाराश्च लौकिकानान्ततदधिष्ठानमात्रविषयाः । मनसा जानामीत्युक्तिरपि धीविशेषविषया अहमिति प्रत्यक्षन्तु न महतत्त्वविषयमहङ्कारविषयं वा प्रत्यगात्मन एवाहमिति भानात् । अध्यवसायादयोऽपि वस्तुत आत्मधर्माः करणभेदायत्ततया तु तत्तद्वृत्तित्वोपचाराः दृष्टेषु पृथिव्यादिष्वपि शास्त्रैकवेद्याः कति कति न सन्त्याकाराः किम्पुनरन्येषु अतो लोकोत्तीर्णाकारेण त्रिगुणस्य शास्त्रवेद्यत्वम् । एषां च तत्त्वानां तदवान्तरभेदानां च यथागमं यथादर्शनं च लक्षणं ग्राह्यं केषुचित्क्षीरगुडादिरसभेदवद्दुर्वेचा अपि भेदास्त्वनुभवादिसिद्धा दुरपह्नवाः । ननु सांख्योक्तैरनुमानैः प्रधानादिसिद्धिः स्यादित्यत्राह । न पुनरनुमयेति । न त्वनुमानैरित्यर्थः तत्र हेतुः व्याप्तिलिङ्गाद्यसिद्धेः यथासम्भवं व्याप्तिलिङ्गपक्षदृष्टान्तानामसिद्धेरित्यर्थः । तथा हि यत्तावदुक्तं कारणगुणात्मकत्वात्कार्यस्याव्यक्तमपि सिद्धमिति अयमर्थः यत्कार्यन्तत्कारणगुणात्मकं यथा तन्त्वादिगुणात्मकं पटादि तथा महदादि कार्यजातमपि सुखदुःखमोहात्मकतया स्वकारणगतसुखदुःखाद्यात्मकं भवति अतस्तत्कारणं सुखदुःखाद्यात्मकम्प्रधानमिति तत्र पटादेः किमिदं कारणगुणात्मकत्वं किं कारणगुणतादात्म्यमुत कारणं प्रति गुणभूतत्वम् । अथाप्रधानत्वं कारणगुणैर्गुणित्वं वा तत्सजातीयगुणवत्त्वं वा अन्यद्वा किञ्चित् । नाद्यः असिद्धेः । न खलु तन्त्वादिगुणैः शौक्ल्यादिभिः पटस्य तादात्म्यं दृष्टं तथा सति गुणवत्तन्तुनिष्पत्तिमात्रेण पटनिष्पत्तिप्रसङ्गात् न चायमिष्टः प्रसङ्गः अभिव्यक्तिवादादेरपाकरिष्यमाणत्वात् । अत एव न द्रव्यस्य गुणतादात्म्यं शुक्लः पट

इति च न पर्यायः । न द्वितीयः अदृष्टेरेव तन्तुसमवेतत्वात्पटस्य तन्तुगुणत्वोक्तिरिति चेन्न । अवयविसमवाययोस्त्वयाऽप्यनभ्युपगमात् । पटस्य तन्तुनिष्ठत्वमुपलब्धमिति चेत्किमतः कार्यावस्थानां कारणद्रव्यवर्तित्वमात्रसाधनापत्तेः । तथा च न कारणावस्थस्य सुखाद्यात्मकत्वसिद्धिः कारणमात्रन्तु सिद्धत्वान्न साध्यम् । तृतीयेऽपि किमिदं कार्यस्य कारणम्प्रत्यप्रधानत्वं तत्कार्यत्वमिति चेन्न । सिद्धसाधनात् साध्याविशेषाच्च । न ह्यकारणेन किञ्चित्कार्यमिच्छामः कारणसहकारित्वादिसाधनेऽपि न विवक्षितसिद्धिः । न चतुर्थः अवयविवादे तन्तुपटोदाहरणायोगात् तत्र हि तन्तुगुणैः पटगुणा जन्याः द्व्यनित्यत्ववादे सिद्धसाधनात् कार्यावस्थस्य कारणावस्थानियतगुणसाधने विरोधात् । पञ्चमस्तु विलक्षणमहत्त्वाद्यधिकरणत्वान्निरस्तः । सजातीयगुणसद्भावमात्रे साध्ये सिद्धसाधनात् सर्वगुणसजातीयत्वसाधने कार्यकारणयोरविशेषप्रसङ्गात् मृत्सुवर्णादिघत्कार्यविशेषव्यवस्थापककारणस्वभावसाजात्यविवक्षायां गोमयमाक्षिकाद्यारब्धवृश्चिकादिषु व्यभिचारात्तदभिप्रायं च सूत्रं दृश्यते त्विति । नापि षष्ठः तस्य त्वद्बुद्धिमात्रारूढस्यादूष्यत्वात् लोकदृष्टस्य तु कस्यचिदुक्तोत्तरप्रायत्वात् । अतःकर्मणां स्वविषयस्वरूपफलप्रदत्वानुमानवत्कार्याणां स्वगुणसरूपगुणकारणकत्वानुमानमप्यनैकान्त्यदुःस्थमिति । ये च भेदानाम्परिमाणादित्यादिना हेतव उक्तास्तत्र तावद्यत्परिमितं तत्सकारणकमित्यत्र न व्याप्तिर्जीवाणुत्वनित्ययोस्साधयिष्यमाणत्वात् महदादीनां स्वरूपमनुमानसिद्धं वा पक्षीक्रियते आगमसिद्धं वा । नाद्यः तल्लिङ्गासिद्धेः । ननु चिच्छक्तेरेव स्वतो विषयप्रवणतायामनिर्मोक्षप्रसङ्गात् अस्ति किञ्चिद् द्वारं तत्तु न चक्षुरादिमात्रं तदुपरमेऽपि संकल्पाद्युत्पत्तेः नापि मनोमात्रविश्रमः तत्प्रशान्ता-

यपि स्वप्ने मनुष्यस्य स्वात्मनि व्याघ्राद्यभिमानात् । नाप्यहङ्कारे पर्यवसानं तद्विरामे सुषुप्तौ प्रश्वासनिश्वासहेतुभूतप्रयत्नाधारस्य महतस्सिद्धेः न च तदवधिस्तत्त्वपङ्क्तिस्तस्यापि परिमितत्वेन कार्यत्वात्तत्कारणन्त्वव्यक्तं न परिमितमित्यत्र प्रमाणमस्ति तत्कल्पनायान्त्वनवस्थापातः, अतो ऽव्यक्तमपरिमितमादिकारणमिति वृत्तिभेदसिद्धेर्महदादिभिरव्यक्तानुमानं स्यात् तदेतत्कथामात्रं स्वतस्सर्वग्रहणयोग्याऽपि हि पुंसां चिच्छक्तिस्संसारावस्थायां कर्मणा संकुचन्ती कर्मात्यन्नैरेव द्वारैर्यथाकर्म प्रसरतीति तु त्रय्यन्तवृद्धाः । नापि सङ्कल्पादिभिर्मनःक्लृप्तिः संस्कारप्रनाड्यापि तदुपपत्तेः अन्यथा मनसाऽपि तदुत्पादनायोगात् करणस्य च द्रव्यत्वन्नावश्यापेक्षितं न च स्वप्ने व्याघ्राद्यभिमानादहङ्कारक्लृप्तिः मनसैव तादृशसंस्कारसध्रीचा तदुपपत्तेः । निश्वासादिहेतुभूतप्रयत्नाधारतया महत्क्लृप्तिरप्ययुक्ता अदृष्टवशादेव बाह्यस्येवान्तरस्यापि मरुतस्स्पन्दोपपत्तेः न चादृष्टस्यापि महत्तत्त्वाश्रयत्वमितः पूर्वं सिद्धं यदा चेश्वरप्रयत्नाधीनत्वमुच्छ्वासादेस्स्थेत्स्यति तदा देवदत्तस्यापि न जीवनपूर्वकः प्रयत्नः कल्प्यः किमुत कस्यचिदचिद्द्रव्यस्य परिमितत्वन्तु महतः कुतस्त्यमन्तर्देहमेव तत्प्रवृत्त्युपलम्भादिति चेन्न त्वत्पक्षे विभोरप्यात्मनः शरीरावच्छिन्नप्रदेश एव व्यापारावेशवद्विभोरपि महतस्सहकारिविशेषसामर्थ्यात् क्वाचित्कप्रवृत्तिसम्भवात् न च वृत्तिभेदमात्रादन्तःकरणभेदक्लृप्तिर्युक्ता कामस्सङ्कल्प इत्यादिना मनस्येव बहुविधवृत्तिश्रुतेः कामादीनां मनस्सामानाधिकरण्य“ मायुधृत”मितिवद्वाक्तं महतश्च त्वया मिथो मनस्येव विरुद्धभावाष्टकसुखदुःखाद्याश्रयत्वस्वीकारात् बाह्येन्द्रियमनोऽहङ्काराणामालोचनादिवृत्तिभेदाश्रयणमप्ययुक्तं महत एव सहकारिभेदात् सर्ववृत्त्यविरोधात् ।

अत एव शास्त्रतो महदादितत्त्वसिद्धावपि तेषां पृथक्कारणत्वं वृत्त्याश्रयत्वं वा न कल्प्यम् । एवं चक्षुरादिष्वालोचनोक्तिरपि नेया । न द्वितीयः महदादीनामागमतस्सिध्यतां साक्षात्परम्परया वा प्रधानजन्यत्वसिद्धेः अनुमातव्याभावात् । एकप्रमाणवेद्यत्वे कार्यकारणयोर्मिथो बोध्यबोधकते न स्तः सहदृष्टाग्निधूमवत् । विप्रतिपन्नं प्रत्यनुमानं सार्थमिति चेत् न महदादीनभ्युपेत्यानभ्युपेत्य वा तेष्वव्यक्तकारणकत्वविप्रतिपत्त्ययोगात् यदप्याहुः कार्याणां स्वाधिकपरिमाणादुत्पत्तिर्नियतेति तदप्यसत् वस्त्रादिषु वैपरीत्यदृष्टेः । अव्यक्तस्य च परिच्छिन्नत्वं "तमसःपरस्तान्मृत्युं भिनत्ती"त्यादिशास्त्रशतसिद्धम् । व्याप्तिवचनं तदनन्तमसंख्यातप्रमाणं चेत्यादिकमपि विभुत्वमन्तरेणापि स्यात् घटादीनामपि स्वन्यूनपरिमाणैः पिण्डाद्यवयवैरेवोत्पत्तिरिति समन्वयश्च कुत्र केषां कीदृशः सुखादिरूपेषु कार्येषु सत्त्वादीनां समनुगतिरिति चेत् किमतः । न हि यद्येनानुगतं तत्तेषां कारणमिति नियमः शौक्ल्यगोत्वादेरनेकानुगतस्य तत्कारणत्वाभावात् अन्यथा व्यक्ताव्यक्तसाधारणधर्माणां तदुभयकारणत्वप्रसङ्गात् तथा च तत्त्वाधिक्यप्रसङ्गः । एतेन विगीतं स्वानुगतकारणकं कार्यत्वात् घटशरावादिवदित्यपि निरस्तम् । घटादिष्वनुगतस्य मृत्त्वस्य तत्कारणत्वासिद्धेः मृद्द्रव्यस्य तु घटाद्यात्मना विभक्तस्याविभक्तस्य वा तेष्वनुगतत्वादृष्टेः । यदप्येकरूपान्वितत्वादेकोपादानत्वमिच्छन्ति । तदपि स्वपरमतनिर्धूतं सर्वथा सारूप्ये हेतौ तत्त्वभेदभङ्गप्रसङ्गात् यथाकथंचित्सारूप्ये तु व्यभिचारात् । साक्षादेकोपादानत्वसाधने सृष्टिक्रमादिशैथिल्यं स्यात् मृत्तन्त्वाद्युपादानभेदश्च निन्हूयते परम्परयेति तु मृद्घटादिनिदर्शनविरुद्धं नित्येषु च पुरुषेषु साक्षित्वादयो धर्मा-

स्साधारणा युष्माभिरेव पठ्यन्ते न तु तेषां हेतव इष्टाः । व्यक्ता- व्यक्तयोश्च "त्रिगुणमविवेकी"त्यादिसाधर्म्यपाठादेकोपादानत्वप्र- सङ्गः । कार्यत्वे सतीति विशेषणेऽपि मृत्पिण्डद्वयारब्धघटादिभिः गोमयादिनानोपादानवृश्चिकादिभिश्चानैकान्त्यं *तन्त्वारब्धपटा- दिभिश्च तेषामपि पक्षीकरणे दृष्टान्तासिद्धिः †व्यतिरेकिहेतुविवक्षा- यामपि न दृष्टः कारणभेदोऽपन्होतुं शक्यः । नापि कारणान्तरमेकं विधातुं दृष्टैरेव हेतुभिरदृष्टघटितैः कार्याणां चरितार्थत्वात् न च शास्त्रमन्तरेण जगतस्सत्त्वादिगुणसमन्वयसिद्धिः येन तन्मयं कारण- मुन्नीयेत । ननु सुख्यामि दुःख्यामि मुह्यामीति स्वानुभवसिद्धास्ता- वत्सुखादयस्ते च कार्यभूताः स्वानुरूपं कारणमाक्षिपन्ति तथा तथा तेषु तेषु विषयेषु कालभेदेन पुरुषभेदेन च प्रीत्यप्रीतिविषाद- जनकत्वं दृष्टं तदपि तत्तद्गतविचित्रगुणविशेषहेतुकं युक्तमिति तन्न । सम्प्रतिपन्नदृष्टादृष्टहेतुशक्त्यैव सर्वोपपत्तौ तदतिरिक्तत्रैगुण्यक्लृ- प्त्ययोगात् गुणानां कार्यैकनिरूपणीयत्वभाषणमपि शास्त्रोपक्षम् । अन्यथा त्रैगुण्योन्मेषभेदस्याप्यतिरिक्तनिर्वाहकवैचित्र्यक्लृप्त्यानवस्था- प्रसङ्गात् सामग्र्यनवस्था तु सिद्धा न क्वापि दोषाय प्रत्युत गुणायेति सर्वैरिष्टव्या गुणत्रयात्मकं च कारणमिच्छतस्ते विश्वस्यैकोपादा- नत्वं दुर्वचम् । ननु साम्यावस्थानां सत्त्वरजस्तमसां सङ्घातः प्रकृतिः अतः कारणैकत्वं स्यात्तन्न । चित्रपटारम्भकशुक्लकृष्णरक्ततन्तुसङ्घा- तन्यायेन सूक्ष्मदृष्टौ कार्याणां यथास्वं कारणभेदस्यैवाङ्गीकारात् ततश्च भेदानां भिन्नत्वे सति विकारत्वादभिन्नहेतुकत्वक्लृप्तिश्च निरस्ता सत्त्वादीनां भिन्नत्वाद्विकारित्वाच्च । अथ तत्राभिन्नकार-

* बद्धा पु· पा· ।
† अविदितेति पु· पा· ।

णान्तरक्लृप्तिः तथा सति स्वाभीष्टतत्त्वसंख्याविरोधः सत्त्वादिद्रव्यभेदाभ्युपगमाच्च "शक्तितःप्रवृत्तेश्चे"त्येतदपि मन्दं यदि कारणशक्तितः कार्यं प्रवर्तते कथमव्यक्तसिद्धिः। ननु कारणशक्तिर्नाम सत्कार्यपक्षे न कार्यस्याव्यक्तत्वादन्या यथा हि तिले तैलस्यातस्सर्वकार्योपादानाव्यक्तसिद्धिरिति मैवम्। यदि तैलाश्रयतिलवदव्यक्तावस्थाश्रयस्वीकारः तदा पूर्ववत्स्वेष्टतत्त्वसंख्याविरोधः। अथ न विषमस्तिलदृष्टान्तः नोदाहरणमादर्तव्यं क्षीराद्दधिवत् सूक्ष्मावस्थात्स्वस्मादेव जगदुत्पत्स्यत इति। तथाऽपि सम्प्रतिपन्नावधिस्तत्त्वपङ्क्तिरस्तु। यद्वा तदपि सूक्ष्मं सूक्ष्मान्तरादिति कथं तत्त्वेयत्ता एतेन सांख्यानां सूक्ष्मशरीरक्लृप्तिश्च निरस्ता। यदाहुः पूर्वोत्पन्नमसक्तमित्यादिना तन्न। न ह्यत्र लिङ्गशब्दोक्तसूक्ष्मशरीरसद्भावे प्रमाणमस्ति स्थूलवत्प्रत्यक्षं केश्चिदप्यनुपलम्भात्। विभोरात्मनस्स्वर्गादिगत्युपदेशान्यथानुपपत्त्या तत्क्लृप्तिरिति चेन्न। तत्क्लृप्तावपि युष्मन्मते तद्गतेरात्मन्युपचारात् ततो वरमदृष्टशक्त्या तत्रतत्र देहोत्पत्तिमात्रेण तत्तद्देशगत्युपचारः। ननु स्थूलदेहद्वयान्तरालवर्ती क्षेत्रज्ञस्तत्कालीनदेहवान् क्षेत्रज्ञत्वात् यस्तथा स तथा यथा कालान्तरवर्तीत्यनुमीयेत। मैवं। विपक्षे बाधकाभावात् गत्युपदेशानुपपत्तेः परिहृतत्वात्। अशरीरत्वे मुक्तत्वप्रसङ्ग इति चेन्न। प्रलयवदविरोधात्। तत्रापि सूक्ष्माचिद्विशिष्ट एव पुरुष इति चेन्न। अत्रापि तावन्मात्रसाधने सिद्धसाधनात् आगमस्तु गत्यवस्थायां पूर्वशरीराकृष्टसूक्ष्मावयवसङ्घातमात्रेणापि गतार्थः "सूक्ष्मप्रमाणतश्च तथोपलब्धे"रिति सूत्रमपि तावन्मात्रविषयम्। पुर्यष्टकशरीरोक्तिश्च न शरीरान्तर्वर्तिसूक्ष्मदेहसद्भावपरा। कारणकार्यविभागादविभागादिति हेतुश्च महदादिपक्षसिद्धासिद्धिविकल्पेन

निरस्तः । किंच कार्याणां सतां क्वचित्कारणे विभागाविभागौ नियताविति कृत्वा विचित्रस्य कार्यवर्गस्य विभागाविभागस्थानतया प्रधानं सिषाधयिषितं न त्वयं नियमः यथा मृदादिषु । घटादीनामेतौ दृष्टौ न तथा तन्त्वादिषु पटादीनां न हि तन्त्वेकदेशात्मकः पटः येन घटादिन्यायः स्यात् एकस्मादनेकोत्पत्तिनियमश्चानेन भग्नः त्वयाऽपि संहतैस्तन्त्वादिभिर्जगदारम्भोक्तेश्च । यत्र कार्याणां विभागाविभागदृष्टिः न तत्र सर्वत्रोपादानत्वं निमित्तेऽपि क्वचित्तद्दृष्टेः अरणेरिवारणेयस्य न हि काष्ठे पार्थिवांशो वन्हेरुपादानम् । न च वन्ह्यंशो धूमस्य एवं सति नाव्यक्तस्यैव सिद्धिः । विश्वनिमित्तस्यापि कस्यचिदेवमनुमातुं शक्यत्वात् तस्य च विजातीयस्यापि संभवात् । किंच यथा मृदवयवसंघाते घटादेरविभागादिः तथा पार्थिवाद्यणुसंघाते तत्तद्भूतभौतिकानां स किं न स्यात् ततश्च का कथा तदतिरिक्ततत्त्वकल्पनायां कृत्स्नैकदेशसंयोगानुपपत्त्याणुसङ्घातस्य कारणत्वक्लृप्तिरयुक्तेति चेन्न । सत्त्वादिविभुद्रव्यसङ्घातस्यापि तत्रैव संयोगविकल्पावतारात् अणूनां मिथः कार्त्स्न्येन संयोगे पृथुकार्यानुपपत्तिस्स्यात् न तु विभूनामिति चेन्न । तेषामपि मिथः कार्त्स्न्येन संयुक्तानां स्वापेक्षयाऽल्पपरिमाणबहुकार्योत्पत्तौ प्रतिकार्यं कारणस्य कृत्स्नैकदेशविनियोगविकल्पे कार्यान्तराणामनुत्पत्तिर्वा कारणस्य सावयवत्वं वा स्यादिति चर्चा स्यात् । श्रौते तूपादाने श्रुतेस्तु शब्दमूलत्वादिति समाधानं सूचितम् । अपि च क्षीरदधिरुचकस्वस्तिकादिन्यायेन स्वस्यैव पूर्वावस्थाविशेषवतस्स्वोपादानत्वे सिद्धे किमन्यत्र कुत्रचिदविभागादिगवेषणया । घटादयोऽपि मृत्पिण्डादिषु तत्तदंशैरेवोपादीयन्ते न तु पिण्डादिभिः कूर्मावयवदृष्टान्तश्चात्र मन्दः तत्र ह्याकुञ्चनप्रसारणाभ्यामवयवानां

रावृतानावृतत्वसिद्ध्या भवत्यव्यक्तव्यक्तावस्थाभेदः न तूपादानोपादेयभावात् न च तत्र कस्यचिदवयवनाशोत्पत्तिव्यवहारः अतो न कथंचिदप्यनुमानादव्यक्तादिसिद्धिः ।

आगमेन विना सिद्धिस्तन्मात्राणां च दुर्वचा ।
उद्भवानुद्भवाद्यैस्तु लोके सूक्ष्मादिकल्पना ॥

अत्रेषु वचनादीनामनुपहतैस्सहकारिभिद्भिस्तदवयवविशेषैरेवोपपत्तौ न तावत्कर्मेन्द्रियक्लृप्तिः रूपादिज्ञानादीनां च तत्तदधिष्ठानभेदैरेव तदनुगुणदशाविशेषितैस्सम्भवात् तदतिरिक्तकल्पनेऽपि काणादादिकल्पितन्यायेन स्मृतिविशेषानुगृहीतेन भौतिकत्वोपपत्तेराहङ्कारिकेन्द्रियसिद्धिरनागमतो न भवति ॥

कल्पनागौरवभयात्कलाकाष्ठाद्यकल्पयन् ।
अविशेषात्प्रधानादिकल्पनामप्यपास्य तु ॥
षड्विंशतत्त्ववादश्च यदि युक्त्या समर्थ्यते ।
सांख्यवत्प्रतिवक्तव्यो न विस्रम्भस्तदागमे ॥
तं षड्विंशकमित्याहुस्सप्तविंशमथापरे ।
इत्यत्र न विरोधस्स्याच्छ्रुतिमात्रानुसारतः ॥

एवमागमिकेषु महदादिषु कालभेदनियतविकारभेदाधीनं विशेषमाह । सत्त्वादीति । गुणत्रयाश्रयात्प्रधानात्सत्त्वादिगुणोन्मेषभेदेन सात्त्विको राजसस्तामसश्चेति त्रिधा महानुत्पद्यते त्रिभ्यश्च महद्भ्यस्तत्रैव त्रिविधो ऽहङ्कारः तत्र प्राच्यादेकादशेन्द्रियाणि परस्तु भूतादिसंज्ञस्तन्मात्राः क्रमाज्जनयति मध्यमस्तैजसाख्यः पूर्वापरयोरनुग्राहकतया तदुभयसाध्यसृष्टिद्वयार्थः । तुशब्दो मतान्तराद्व्यवच्छिनत्ति । कल्पितं हि कैश्चित्तन्त्रान्तरनिष्ठैः कर्मेन्द्रि-

याणाम्प्रवृत्तिशीलतया राजसाहङ्कारजन्यत्वं तच्चायुक्तं शब्दैकगम्येयं युक्तिभिरन्यथा करणायोगात् ॥ ११ ॥ इति प्रकृतिमहदाद्यागमिकता-सृष्टिप्रकारौ ॥ एवम्प्रकृत्यादीनामागमगम्यत्वं सृष्टिप्रकारं च संजगृहे । अथ तेषु तन्मात्रसृष्टौ श्रुतिस्मृतिविप्रतिपत्तेस्संशयं विपर्ययं वा निरस्यति । तत्रेति ॥

**मू० तत्राहङ्कारजन्यं भजति परिणतैः शब्दमात्रं नभस्त्वं तद्वत्तन्मात्रपूर्वास्तदुपरि मरुदग्न्यम्बुभूम्यः क्रमात्स्युः ॥ सूक्ष्मस्थूलस्वभावस्वगुणसमुदयप्रक्रियातारतम्यात्तन्मात्राभूतभेदः कललदधिनयात् कल्पितस्तत्त्वविद्भिः ॥ १२ ॥**

श्रूयते हि तन्मात्राणि भूतादौ लीयन्त इति । न च श्रुतिविरुद्धा स्मृतिरुदीयेत अतः पञ्चानामपि तन्मात्राणां तामसाहङ्कारादुत्पत्तिः बहुवचनात् बहुत्वस्य च प्रसिद्धितो नियमः भूतानां तु यथास्वं तन्मात्रेभ्यः क्रमादुत्पत्तिरिति कश्चिन्मन्यते तम्प्रति ब्रूमः न ह्यनुपबृंहणा श्रुतिराप्ततमा अन्योन्यघटितानेकोपबृंहणविरोधे तदनुगुणं नेतव्या । अतः पाशवद्बहुवचनमनादरणीयम् । अथभूयस्त्वव्यत्ययार्थं वा तस्माच्छब्दतन्मात्रमेकमहङ्कारजन्यं तच्च परिणतिविशेषादाकाशत्वं भजते एतेन सर्वत्र सृष्टौ द्रव्यानुवृत्तिस्सूच्यते । तद्वत् । आकाशवत् । तन्मात्रपूर्वाणि वाय्वादिभूतानि स्युः । ननु यदि शब्दाद्याश्रयतया तत्तद्भूतत्वं तर्हि कथन्तत्र पञ्चकद्वयक्लृप्तिरित्यत्राह । सूक्ष्मेति । स्वगुणा इह शब्दादयः तेषां समुदय उत्पत्तिः तत्प्रक्रियातारतम्यं सूक्ष्मस्थूलस्वभावतयैव तच्च शास्त्रगम्यं कललशब्दोऽत्र दुग्धदधिमध्यावस्थाविषयः तत्र हि निवृत्तभूयिष्ठमाधुर्यमी

षदम्लत्वमुपलभ्यते तथा स्यात् ॥ १२ ॥ इति तन्मात्रभूतसृष्टिप्रकारः । एवं तन्मात्रभूतसृष्टिप्रकार उक्तः । तत्र तोयतेजसोः सृष्टौ प्रमाणविप्रतिपत्तिं शमयति । अद्भ्योऽग्निरिति ॥

**मू० अद्भ्योऽग्निस्तैजसस्ता इति न हि वचसोर्बाधितुं युक्तमेकं निर्वाहः कल्पभेदाद्यदि न दृढमितास्तत्त्वसृष्ट्यैकरूप्यात् ॥ सृष्टौ ताभ्यः कदाचित्तदुपजनिरतो व्यत्ययस्तत्समष्टौ आदावप्सृष्टिवादश्श्रुतिमितमितरं न प्रतिक्षेप्तुमीष्टे ॥ १३ ॥**

अबाधेन गतिमत्त्वे श्रुतिविरोधप्रतीतावपि स्मृतिस्तदृढबाध्येति भावः । गत्यन्तरं निवारयति निर्वाह इति । स्वेष्टां गतिमाह । "व्यष्टाविति" । निमित्तभूताभ्य इति भाष्यम्, अतश्शब्दो हेतुमवधिं वा ब्रूते । ननु आपोवा इदमग्रे अप एव ससर्जादावित्यादिश्रुतिस्मृतिदर्शनादग्न्यादेस्सर्वस्यादभ्यस्सृष्टिस्स्यादित्यत्राह । आदाविति । महदादीनामिवाग्नेरप्यद्भ्यः पूर्वभावित्वं बहुश्रुतिस्मृतिसिद्धमतस्तदविरुद्धं दुर्निवारमित्यर्थः । श्रुतिषु च न्यून निर्देशेषु अनुक्तमधिकमन्यतो ग्राह्यं श्रुतहानायोगात् अव्यवस्थितन्यूनाधिकसृष्टिकल्पने गौरवाच्च ॥ १३ ॥ इति अप्तेजसोर्व्यष्टिसृष्टिविशेषः ॥ ननु कथमेवं तोयतेजसोर्व्यष्टिसमष्टिसृष्टिव्यवस्था विचित्रपरिणामशालिनस्त्रिगुणस्य कालभेदेनानियतपरिणामोपपत्तेः । उक्तं च जैनैः पुद्गलाख्यमेकमेकजातीयद्रव्यं तत्तत्सामग्रीभेदैरव्यवस्थितक्रमान् भिन्नाभिन्नस्वभावान् विचित्रपर्यायान् भजत इति यथा काणाद्प्रभृतीनां एकैकभूतपरमाणवः यथा च सांख्यादीनामेकैकं भूतम् ।

अतो न शाश्वतभूतभेदक्लृप्तिः । वाय्वादिचातुर्विध्योक्तिरपि पर्यायभेदनिबन्धना नियतक्रमभूतसृष्टिकल्पना च लाघवयुक्तिविहता तदेतदनुभाषते । पृथ्व्या इति ॥

मू० पृथ्व्यास्स्पर्शादिभेदो द्रवमृदुकठिनीभावभेदश्च दृष्टस्तद्वत्पृथ्वीजलाग्निश्वसनपरिणतिर्लाघवार्येति जैनाः ॥ तत्र द्रव्यैक्यमिष्टं क्रमजनिविलयौ त्वागमादप्रकम्प्यौ तर्कैकालम्बिगोष्ठ्यां भजतु बहुमतिं तादृशी लाघवोक्तिः ॥ १४ ॥

दूष्यांशव्यक्त्यै शेषमनुमनुते । तत्र द्रव्यैक्यमिति । त्रिगुणद्रव्यमेव हि वाय्वाद्यवस्थमिति भावः । नियतक्रमत्वे कल्पनागौरवमागमबलादपनयति । क्रमेति । लाघवतर्कस्य का गतिरित्यत्राह । तर्केति । गुरुकल्पनाप्रवृत्तं प्रति हि लाघवोक्तिः शोभत इति भावः ॥ १४ ॥ इति पुद्गलानामनियतपृथिव्यादिपरिणामवादभङ्गः ॥ ननु तत्त्वसृष्टौ क्रमनियमो न सम्भवति आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेष्विति सुबालोपनिषदाम्नानात् । अव्यवस्थिताश्च सृष्टिव्यवहाराः पृथ्व्यादिषु दृश्यन्ते अतो यथाश्रुतं कल्पभेदात् सृष्टिभेदस्स्यादित्यत्राह । तत्त्वेष्विति ।

मू० तत्त्वेष्वाथर्वणेष्टौ प्रकृतय उदिताः षोडशान्ये विकारा निष्कर्षैदम्परेऽस्मिन् वचसि तदितरत्सर्वमावर्जनीयम् ॥ दृष्ट्वा सांख्यं पुराणादिकमपि बहुधा निर्वहन्त्येतदेके चिन्तासाफल्यमान्द्याच्च्क्रमबहुलतयाऽप्यत्र तज्ज्ञैरुदासि ॥ १५ ॥

अधीयते हि केचिदाथर्वणिकाः “ अष्टौ प्रकृतयः षोडश विकारा इति ” अत्र तावदव्यक्तमहदहङ्कारतन्मात्राणां प्रकृतित्वमविगीतम् । इन्द्रियेभ्यस्तत्त्वान्तरोत्पत्तिः श्रुत्यन्तरेषु पुराणेषु वा न क्वचिद्दृश्यते सौबाले च लयानुक्रमे पूर्वापरवाक्यवदिन्द्रियतन्मात्रवाक्ययोर्न लीयत इति पदमावृत्तम् एवं वाक्यवैरूप्ये सत्यनुषङ्गात् वरमधिकरणविभक्त्याऽपि संसर्गमात्रग्रहणमिति स्थिते प्रकरणान्तरैकरूप्यं भवतीति केवलविकृतित्वमिन्द्रियाणां युक्तं भूतानां चाकाशादीनां चतुर्णां साक्षात् तन्मात्रद्वारेण वा तत्त्वान्तरोपादानत्वे प्रकृतयोविकृतयश्च पृथग् द्वादश स्युः । ननूपबृंहणविशेषानुसारादिन्द्रियाणि शब्दादिगुणाश्च षोडशविकाराः भूततन्मात्रभेदानादरेण प्रकृतयश्चाष्टावभ्युपगम्यन्तां मैवं द्रव्यतत्त्वप्रकरणे गुणपरिगणनाऽनौचित्यात् गुणशब्देन च क्वचिद्गुणाश्रयविवक्षा स्यात् गत्यभावे गुणविवक्षायामप्यत्र द्रव्यविवक्षोपपत्तेः आकाशाद्वायुरित्यादीन्यपि स्थूलसूक्ष्मभेदानादरेणेति समाधानम् । एवं स्थिते तामसाहङ्कारोत्पन्ने तन्मात्रपञ्चके भूतान्येकद्वित्रिचतुःपञ्चभिस्तन्मात्रैरारभ्यन्त इति सांख्याः पूर्वपूर्वतन्मात्राणि उत्तरोत्तरतन्मात्रमेकैकं भूतं जनयन्ति इति पौराणिकाः तत्राप्युत्तरोत्तरभूतसृष्टौ पूर्वपूर्वेषां तन्मात्राणां भूतानां वा सहकारित्वमिति पक्षभेदः । एवमन्योऽपि यथामति तदिदमाह दृष्टेति । एतत् इतरत्सर्वं वाक्यजातमित्यर्थः किमिति पूर्वाचार्यैरत्रोपेक्षितं तत्राह “ चिन्तेति ।

न प्रधानविरोधस्स्यादीदृशानवधारणे ।

इति निश्च*यितुं शिष्यान्प्राचां क्वचिदनिश्चयः ॥ १५ ॥

* निश्चेतुमिति प्राप्ते निश्चयितुमिति नामधातुद्वारा निर्वोढव्यम् अथवा निर्णयितुमित्येव पाठः ।

इति प्रकृतिविकृतिविभागचिन्ता ॥ प्रक्रान्तेषु प्रकृत्यादिकारणेषु पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणमिति वदतस्सांख्यस्यानन्यथासिद्धेश्श्रुत्यादिभिर्बाधमाह । "निश्शेषमिति" ।

**सू० निश्शेषं कार्यतत्त्वं जनयति स परो हेतुतत्त्वैश्शरीरी तत्तत्कार्यान्तरात्मा भवति च तदसौ विश्रुतो विश्वरूपः । तेजोऽबन्नाभिधेयैर्बहुभवनमभिध्यानलिङ्गं च दृष्टं तस्मादीशाननिघ्नाः प्रकृतिविकृतयस्स्वस्वकार्यप्रसूतौ ॥ १६ ॥**

यत्किंचित्सृज्यते येन जगत्सर्वं शरीरं ते इत्यादिभिरेतत्सिद्धम् । तत्सृष्ट्वा तदेवानुप्राविशदित्यादेश्चार्थमाह । तत्तदिति । अन्तर्यामिब्राह्मणसुबालोपनिषदादिप्रसिद्धमपि संवादयति तदसाविति विश्रुतः प्रधानपुरुषविलक्षणत्वेन विश्वशरीरकतया प्रत्यक्षश्रुतिसिद्धः क्वचिद्विश्वरूपशब्देनापि तत्तेज ऐक्षत बहु स्यां ता आप ऐक्षन्त बह्व्यः स्यामेति वाक्यविशेषाभिप्रेतं तद्व्यनक्ति । तेज इति । न ह्यचेतनमात्रस्य अनुत्पन्नकरणकलेवरस्य कर्मिणो वा तदानीं बहुभवनसंकल्पाश्रयत्वं युक्तं, गौणत्वं चात्रापि गौणश्चेन्नात्मशब्दात् इति सूत्रन्यायेन निरस्तं, प्रकृतं हि मुख्यमीक्षणमत्रापि तत्सम्भवे नान्यथा गतिर्युक्तेति भावः । उक्तनिगमनव्याजेन ।

विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् ।
ध्यायते ध्यासिता तेन तन्यते प्रेर्यते पुनः ॥
सूयते पुरुषार्थश्च तेनैवाधिष्ठिता जगत् ।
मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम् ॥

यत्किंचिद्वर्तते लोके सर्वन्तन्मद्विचेष्टितम् ॥

इत्यादिकमपि प्रख्यापयति । तस्मादिति ॥ १६ ॥

इति सर्वतत्त्वानामीश्वराधिष्ठानत्वेन कार्यकरत्वम् । तत्त्वान्तराणामीश्वराधीनत्वं व्यष्ट्याद्यारम्भवृत्तान्तैरपि व्यनक्ति ॥ द्वेधेति ॥

**मू० द्वेधा भूतानि भित्त्वा पुनरपि च भिनत्त्यर्द्धमेकं चतुर्धा तैरेकैकस्य भागैः परमनुकलयत्यर्धमर्धं चतुर्भिः । इत्थं पञ्चीकृतैस्तैर्जनयति स जगद्धेतुरण्डादिकार्याण्यैदम्पर्यन्त्रिवृत्त्वश्रुतिरधिकगिरामत्तमैका निरोद्धुम् ॥ १७ ॥**

स खल्वादिकर्ता स्वसृष्टानि पञ्च भूतानि द्विधा कृत्यैकैकं भागं स्थापयित्वाऽर्द्धान्तराणि चतुर्धा विभज्य तत्तद्भागैश्चतुर्भिर्भूतान्तराणामविभक्तान्यर्द्धान्तराण्यनुकलयति यथोक्तम् ॥

एवं जातेषु भूतानि प्रत्येकं स्युर्द्विधा ततः ।
चतुर्धा भिन्नमेकैकमर्धमर्धन्ततः स्थितम् ॥
व्योम्नोऽर्धभागाश्चत्वारो वायुतेजःपयोभुवाम् ।
अर्धानि यानि वायोस्तु व्योमतेजःपयोभुवाम् ॥ इति ।

ततः पञ्चधा विभक्तानां भागानां पञ्चस्वर्द्धान्तरेषु योजनमिति परोक्तं निरस्तम् । एवं पञ्चीकृतानां व्यष्टिकार्येषु विनियोगमाह । इत्थमिति । महदादिभिश्चेति भाव्यं महदाद्या विशेषान्ता इत्याद्युक्तेः । ननु हन्ताऽहमिमास्तिस्रोदेवता इत्याद्यारभ्य तासां त्रिवृतन्त्रिवृतमेकैकां करवाणि त्रिवृतन्त्रिवृतमेकैकामकरोत् इति त्रिवृत्करणे श्रुते पञ्चीकरणादिस्मृतिरन्यपरा स्यादित्यत्राह ।

ऐदम्पर्यमिति । तात्पर्यमित्यर्थः अत्रानन्यपराणां भूयसां च बलीयस्त्वमनुक्तानामविरुद्धानामपेक्षितानामन्यतोऽपि ग्राह्यत्वं स्थापितम् । अभाष्यत च त्रिवृत्करणं पञ्चीकरणप्रदर्शनमिति ॥ १७ ॥

इति पञ्चीकरणप्रक्रिया ॥

ननु पञ्चीकरणाभिधानात्पञ्चसु भूतेषु स्वतस्सभागत्वं व्यष्टिसमष्टिभावो भूतांशानां चात्यन्तभिन्नत्वं समानन्यायतया प्रकृतिपर्यन्तेषु तत्त्वान्तरेष्वपि तत्सर्वं सिद्धम् । भूतभागानां चात्यन्तभेदो वेणुरन्ध्रश्लोके भाष्यत एवं सत्यणुसमाहार एव प्रकृतिरिति स्थिते महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यामित्यौलूक्योपालम्भो न युक्त इत्यत्राह ॥ कार्यमिति ॥

**मू० कार्यं नैवारभेरन्समधिकमणवस्सर्वतस्सम्प्रयुक्ता दिक्संयोगैकदेश्यान्न घटत इह ते दिक्कृतोऽप्यंशभेदः । बुद्धेस्त्वंशानपेक्षा स्फुरति विषयिता विभ्रमस्त्व तु दृष्टेर्नो चेदारम्भकांशप्रभृतिषु नियता दुर्निवाराः प्रसङ्गाः ॥१८॥**

अयम्भावः अनन्यपरशास्त्रसिद्धेष्वर्थेषु श्रुतेस्तु शब्दमूलत्वादिति न्यायेन गत्यन्तराभावे काचिद्धर्मनिक्ता स्वीकार्या अनुमेयेषु तु यथादृष्टान्तं सिद्धिः अन्यथाऽतिप्रसङ्गात् । ततश्चावयविवादिनामवयवास्स्वभागैर्मिथस्संयुज्यावयविनमारभन्त इति सिद्धान्तः एतच्च द्व्यणुकावधि निर्विघातं द्व्यणुकारम्भे तु निरवयवा अणवोऽवयवा इति कल्पितं तत्रैवप्रसङ्गावतारः । यदि परमाणवस्स्वांशतस्संयुज्यावयविनमारभेरन् तदा तदंशो ऽवयवरूपस्तदन्यो वा आद्ये तस्यापि तथेत्यनवस्था । अन्यस्तु स्वाभाविक औपाधिको वा पूर्वेष

भिन्नाभिन्नता स्यात् उत्तरत्रोपाधिसंबन्धेऽप्यंशभेदो दुर्वचः परिशेषात्तन्निरपेक्षसंयोगैरन्योन्यानाघ्रातभागभेदरहितैरणुभिरारम्भः स्यात् त्यक्तस्तर्हि सप्रतिघत्वविरोधः । सर्वेषु च परमाणुष्वेकपरमाणुप्रदेशमात्रावस्थितेषु स्वाधिकदेशव्यापिकार्यारम्भो* न स्यात् न खल्ववयवास्पृष्टे कुत्रचित् प्रदेशे ऽवयवी तिष्ठेत् अदृष्टेरनिष्टेश्च, अवयवनाशादवयविनाशे क्षणमनाधारोऽवयवीति चेत् तथा कल्पयताऽपि त्वया पूर्वं तन्तुसंघानवच्छिन्नप्रदेशे पटस्य वृत्तिर्न कल्पिता एवमधिकारम्भानुपपत्तौ मेरुसर्षपादिविचित्रभेदासिद्धिः सेयमसिद्धं सिषाधयिषतस्सिद्धहानिस्तथा चासिद्धसाधनं निर्मूलम् । ननु परिमितानां सर्वेषां दिग्भेदेन भागभेदे दृष्टे परमाणुष्वपि तथाऽङ्गीकारो दुर्वार इत्यत्राह । दिक्संयोगेति दिक्संयोगायत्तोऽपि हि भागभेदस्सावयवेष्वेव दृष्टः त्रसरेणोरपि त्वया सावयवत्वक्लृप्तेः निरवयवेषु तु विश्वव्याप्तेष्वदिक्कालत्ववादिनस्ते तन्निबन्धना भागक्लृप्तिरशक्या तदुपाधिसंयोगात्तु स्यादपि यदि तत्राप्यंशानंशविकल्पत्रोभो ऽतिलङ्घ्येताऽतस्सर्वदिगुपाधिसंयोगानां परमाणुषु पृथक् प्रदेशरहितानां कथमौपाधिकभागभेदापादकत्वं यदि चानंशभेदेन संयुक्ता उपाधयः क्वचिद्भागभेदकास्तर्हि परमाणव एव तथा किं न स्युः वृथा चैवमंशक्लृप्तिरभागेन संयोगावस्थितेरिति तदिदं सर्वमभिप्रेत्याहुः

षट्केण† युगपद्योगात् परमाणोष्षडंशता ।
षण्णां समानदेशत्वे पिण्डः स्यादणुमात्रकः ॥ इति ॥

ननु बुद्धिः तावत्सर्वतन्त्रसिद्धा सांवृतीत्यपि हि ताम्माध्यमिको मन्यते सा चैकाऽप्यनेकविषया दृष्टेष्टा च निरंशा सा प्रत्येकं

* न सिध्येदिति पु॰ पा॰ ।
† षट्केनेति पा॰ ।

कार्त्स्न्येनांशतो वा विषयीकुर्यात् नाद्यः अन्यानुल्लेखप्रसङ्गात् । न द्वितीयः निरंशत्वादेव । तत्र चेत् कश्चित्समाधिः अणुष्वपि तथा स्यात् तत्राह । बुद्धेस्त्विति । तुरशङ्कानिवृत्त्यर्थः विषयित्वं ह्यंशानपेक्षतयैव दृष्टं न ह्यन्यतोऽपि तस्यान्यथादृष्टिरतो यथोपलम्भमेकवदनेकोऽपि विषय एकस्या बुद्धेः । एवमेकस्य निरंशस्यानेकबुद्धिविषयत्वमपि निरूढम् । अवयव्यारम्भकसंयोगस्तु त्वयाऽपि न क्वचिदंशनिरपेक्ष उक्तः क्वचिद्विशेषाङ्गीकारे नियामकाभावः । अथ संघातारम्भकसंयोगेऽपि समः प्रसङ्ग इति न समः संयोगसाध्यसंघाताभावात् तत्स्वीकारे ह्यवयविवाद एव वरं संयोगस्तर्ह्येकोऽनेकवृत्तिस्सन्नंशानंशविकल्पदौस्थ्यं नातिक्रामेत् । न ह्यसौ नास्त्येव सिद्धयोस्साध्यतया दृष्टेरिति तदपि न विषयित्ववन्निस्ताराात् सोऽपि हि द्वयोर्न स्वांशाभ्यां वर्तत इति दृश्यते एवं स्वामित्वादयोऽपि न प्रतिबन्दिः । अस्तु तर्हि संयुक्तप्रतिबन्दिः मूर्तविभूनां संयोगोऽस्ति न वा न चेदन्यतरकर्मजसंयोगलोपः अविशेषात् । अस्ति चेत् यदि कार्त्स्न्येन विभुद्रव्यमेकेन स्पर्शवता संयुज्यते कथं स्पर्शवदन्तरेण तस्य संयोगः स्यात्, अंशतश्चेत् सावयवत्वप्रसङ्गः । न हि विभुद्रव्यस्यावयवित्वं संघातत्वं वा सुवचं पूर्वोक्त स्पर्शवत्त्ववृतत्वकार्यत्वानित्यत्वादिप्रसङ्गात् । उत्तरत्र नानात्वभेदाभेदयोरन्यतरापातात् तत्र च विभुद्रव्यांशानां मिथस्संयोगोऽस्ति न वा अस्ति चेत् तत्रापि स एव प्रसङ्गः नास्ति चेदसंहतरूपता स्यात् । औपाधिको विभूनामंशभेद इति चेन्न । उपाधिसंयोगेऽपि अंशादिविकल्पानपायात् । निरंशोऽपि संयुज्यमानं स्वरूपेण तद्भेदोपाधिरिति चेन्न । स भेद उपाधिनाच्छिन्ने चेदवयवविश्लेषात्मा स्यात्, अच्छिन्ने तु भेदाभेदवाद एव शरणम् । अत एव स्वसमानपरिमाणेषु विभुप्रदेशेषु तत्तदुपाधिसम्ब-

न्यव्यवस्थेति निरस्तं तत्प्रदेशभेदस्यैव मृग्यमाणत्वात्। विभुद्रव्यमेव तत्तन्मूर्ततुल्यपरिमाणं जायत इति चेन्न । विरोधादुक्तदोषानतिक्रमाच्च । काल्पनिकांशभेदेन मूर्तसंयोग इति चेत्तर्हि वस्तुतस्त्वखण्डेनेत्युक्तं स्यात् । अंशभेदकल्पना च किं विभुद्रव्यस्वरूपमात्रे उत तदंशे एवेति दुस्तरो गर्तः निरंशानामपि स्वभावत एव विभूनामनेकमूर्तसंयोगक्षमत्वमिति चेदणूनामपि एतदस्तु अविशेषात् एवन्त्रसरेणुप्रतिबन्दिश्च भाव्येति । अत्रोच्यते यदि वयं प्रदेशत्रितगुणनिन्हवाय प्रवर्त्स्यामस्तदा विभुप्रतिबन्द्या ऽणुष्वपि तत्सम्भवः प्रदर्श्येत किन्त्ववयव्यारम्भकाणामवयवैरेव संयोग इति नियमस्य त्वयैवान्येषु सर्वेष्वङ्गीकारात् कल्प्येष्वपि तत्प्रसङ्गो दुर्वार इति ब्रूमः न चान्यत्रैवायं नियम इति स्थाप्य तादृशानामणूनामदृष्टेः अनन्यथासिद्धलिङ्गाभावाच्च । यदि विभज्यमानेष्वभावपरिशेषायोगात् परमाणुरपि सत्त्वरजस्तमसां सर्वापकृष्टस्स्यात इति साङ्ख्यमतस्य निर्मूलत्वात् महत्परिमाणतारतम्यविश्रान्तिवत् परिमाणतारतम्यत्वादणुपरिमाणतारतम्यविश्रान्तिरपि क्वचित्कल्प्येत तत्राह । विश्रमस्त्वस्तु दृष्ट इति । दृष्टे त्रसरेणौ विश्रमसम्भवे न मृग्यं ह्यन्यत् तथा च सिद्धसाध्यता । यदि त्रसरेणुरेव परमाणुस्स्यादप्रत्यक्षस्तर्हि स्यादिति चेत् । हन्त कुत्रैषा व्याप्तिः ।

सा*ध्यो ह्यन्यत्र दृष्टान्तस्साध्ये त्वन्योन्यसंश्रयः ।
त्रसरेणुः पराणुस्सन् किं नाध्यक्षो पराणुवत् ॥

चाक्षुषत्वप्रकर्षनिकर्षयोर्महत्त्वप्रकर्षनिकर्षानुविधानात् द्रव्यस्य चाक्षुषत्वं महत्त्वनियतमिति चेत् चाक्षुषावयवकस्यैव द्रव्यस्य

* सिद्धोह्यन्यत्र्त्ति पु॰ पा॰ ।

चाक्षुषत्वनियमदर्शनादचाक्षुषावयवकस्य त्रसरेणोरप्यचाक्षुषत्वप्रसङ्गे कस्ते निस्तारः अगत्येति चेत् भवतु कुतश्चिन्महत्त्वाभावेऽपि क्वचिदेवम् अत एव मूर्तत्वे सति महत्वात् त्रसरेणुः कार्यद्रव्यारब्ध इति कल्पनाऽपि निरस्ता अस्तु बाह्येन्द्रियग्राह्यत्वादेव तत्साध्यमिति चेन्न । विपक्षे बाधकाभावात् । अन्यथा त्रसरेण्वारम्भकस्यापि कार्यद्रव्यारब्धत्वकल्पनायां निवारकाभावात् । तत्र विपक्षे बाधकं नास्तीति चेत् अत्रापि तथेत्युक्तमेव अतो न द्व्यणुकमित्यपि किञ्चित् एवमारम्भकपरम्परायास्सावयवत्वं तद्व्यापकतयाऽभिमतमनित्यत्वं कुतश्चिन्महत्त्वं च प्रसज्यमानमनिवारणीयं स्यात् एतत्सर्वमभिप्रेत्याह । नो चेदिति । अणुषु स्वाभावसमानाधिकरणसंयोगसिद्धेरौपाधिकांशवत्त्वस्वीकारात् इष्टप्रसङ्गतां परिहर्तुमारम्भकशब्दः ॥ १८ ॥ नन्वेवं सर्वत्रावयवानन्त्यप्रसङ्गे सर्षपमहीधरादिपरिमाणवैचित्र्यं न स्यादिति शङ्कते ॥ स्यादिति ॥

**मू० स्याद्भागानन्त्यसाम्ये परिमितिसमता सर्षपक्ष्माभृतोश्चेन्नैवं भागेष्वनन्तेष्वपि समधिकता स्थौल्यहेतुर्गिरेः स्यात् । व्यक्त्यानन्त्येऽपि जात्योः परतदितरतापक्षमासाद्यनन्तं श्रौतोपादानसौक्ष्म्यं न भवदभिमतं तत्प्रथिम्नश्श्रुतत्वात् ॥ १९ ॥**

प्रसञ्जकस्याप्रयोजकत्वमित्यभिप्रायेण प्रतिवक्ति । नैवमिति । आनन्त्यसाम्येऽप्यवयवानां न्यूनाधिकभावेन परिमाणवैषम्योपपत्तिमाह ॥ भागेष्विति ॥ तच्चोत्तरमनन्तभागाभ्युपगन्तॄणां तत्प्रसञ्जकानां च समानम् ।

अणवंशानामनन्तत्वे गन्तॄणां तदतिक्रमः ।
कदाऽपि न स्यात्किं न स्याद्वेगातिशयवैभवात् ॥
द्युमणेरातपस्सर्पेन्नुदयाद्रिशिखामणेः ।
तत्क्षणं किं न निर्भाति पश्चिमाद्रिशिखण्डकः ॥

आनन्त्याविशेषे कथं न्यूनाधिकभाव इत्यत्राह । व्यक्तीति । सत्ताप्रभृतिघटत्वादिपर्यन्तानां सर्वासां जातीनां त्रैकालिकानन्तव्यक्तिवृत्तित्वमविशिष्टं तथाऽपि न्यूनाधिकवृत्त्यैव परापरभावो युष्माभिः कल्पितः तद्वदिहापि स्यादिति भावः । निदर्शनान्तराण्यप्याह । पक्षेति । अनन्ताः पक्षा मासाश्च तथाऽपि मासापेक्षया द्वैगुण्यं पक्षाणामेष्टव्यम् आदिशब्देन क्षणप्रभृति परार्धादिसंग्रहः । अन्यच्च घटसमुदायाद् घटपटसमुदायोऽधिकः हिमवद्दक्षिणदेशान्मेरुदक्षिणदेशः एकात्मदुःखजातादनन्तात्मदुःखजातमित्यादि स्वयमूह्यम् नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा इति जगदुपादानं निरतिशयसूक्ष्मं श्रूयते अस्मदाद्यग्राह्यो दुस्त्यजः परमाणुरित्यत्राह । श्रौतेति । न हि सर्वन्यूनपरिमाणत्वं तत्सूक्ष्मत्वं पूर्वोक्तसर्वगतशब्देन श्रुत्यन्तरैश्च विरोधात् न च जात्यभिप्रायोऽसावेकस्य सर्वोपादानत्वोक्तेस्सर्वव्यापित्वतस्सर्वज्ञजगत्कर्तृविषयत्वाच्च वाक्यस्य सूक्ष्मशब्दश्च न परिमाणविशेषनियतः । उक्तं च विभ्वीं प्रकृतिं महीयसश्च महदादीन् प्रक*म्य सांख्यैस्सौक्ष्म्यात्तदनुपलब्धिरिति । ननु त्रसरेणोरष्टमः षष्ठो वा भागः परमाणुरिति सर्वानुमतेश्शिल्पिनां शास्त्रैर्धर्मशास्त्रैस्तन्मूलश्रुत्या च परमाणुसिद्धिः स्यात् तत्र शिल्पादिशास्त्राणां परमाणावतत्परत्वात् मानोन्मानादिविशेषनिर्धारणं हि तत्र विधित्सितं ततोऽहे-

* प्रकृत्येति पु॰ पा॰ ।

तुकानुवादमात्रमिह स्यात् तत्र च त्रसरेणुतः किंचित्सूक्ष्मं भवतु मा वा भूद् दृष्टोपक्रमं विवक्षितसिद्धिरित्यत्राकूतं शास्त्रतश्च क्वचिदनन्यथासिद्धात्परमाणुसिद्धावपि तदनुमानभङ्गात्परस्य मानभङ्गः यथा प्रकृत्याद्यनुमायिनस्सांख्यस्य ।

शास्त्रैकविषयत्वे च परमाणो र्न सिध्यति ।
नित्यस्पर्शादियोगित्वं भूतानां विकृतित्वतः ॥
अस्पर्शाणवंशसद्घत्वात्कतिचित्प्रकृतेरतः ।
एकैकाणवंशभागेऽपि भागानन्त्यं प्रचक्षते ॥
निरंशा प्रकृतिस्सैव परिणामविभागिनी ।
अनन्तांशात्मिका चेति व्याहतं साङ्ख्यभाषितम् ॥
अत्यन्तभिन्नसत्त्वादिद्रव्यसंघातप्रधानतः ।
यथांशं विश्वसृष्टौ च न स्यात्त्रिगुणता क्वचित् ॥ १६ ॥

इति परमाणुकारणतावादभङ्गः ॥ एवं पृथिव्याद्युपादानं चिन्तितम् । अथोपादानातिरिक्तं कार्यद्रव्यं नास्तीति साध्यते तत्रावस्थाभेदमात्रं स्वीकृतम् अयमेव च सत्कार्यवाद आरम्भणाधिकरणसाध्यः ।

विसृष्ट्युल्लासविक्षेपाः कार्याणां कथिताः क्वचित् ।
कल्पनीया न सर्वत्र परिणामोक्त्यबाधतः ॥
आविर्भावतिरोभावजन्मनाशविकल्पवत् ।
नित्यं जगदिति स्मृत्या व्यवस्थाद्वयमीरितम् ॥

तदिह प्रत्यक्षागमबलादेकस्यैव द्रव्यस्यावस्थाभेदादुपादानोपादेयभाव इति स्थिते द्रव्यान्तरं प्रागसदागन्तुकं वदतः प्रतिवक्ति । कार्येति ।

**मू० कार्योपादानभेदे न कथमधिकता गौरवादेस्स्वकार्यं नान्यत्वं नामसंख्याव्यवहृतिधिष-**

**णाकारकालादिभेदैः। द्रव्याभेदेऽप्यवस्थान्त-
रत इह तु ते पत्रताटङ्कवत्स्युः नोचेदंशां-
शिनोस्स्यात्प्रतिहतिरुभयोः स्पर्शवत्त्वाविशे-
षात् ॥ २० ॥**

कार्यद्रव्यस्य स्वोपादानद्रव्याद्भेदे सति द्विपलिकैकपलिकन्यायेन तन्तुगुरुत्वं समं न्यूनमधिकं वा पटगुरुत्वं च सम्भूय पतनातिरेकं कथं न कुर्यात् तदकरणे कश्चिदपि हेतुर्न सिध्येदित्यर्थः तथा हि न तावदवयविनि गुरुत्वं न जायते परमाणुगुरुत्वपरिशेषप्रसङ्गात् तथा च त्वया ऽनभ्युपगमात् अयुक्तेश्च। कार्यगुरुत्वादेव ह्यणुगुरुत्वं कल्पयसि जातस्य च न स्वाभावतः पतनहेतुत्वाभावः प्रतिबन्धात्कार्यानतिरेक इति चेत्। किमयम्प्रतिबन्धोऽवयविगुरुत्वस्योतावयवगुरुत्वस्य नाद्य. परमाणुगुरुत्वस्यैव *अपतनहेतुत्वप्रसङ्गात् तथा सति गुरुत्वात् पतनं द्रवत्वात्स्यन्दनमिति तत्तत्क्रियावन्निष्ठगुरुत्वादिकल्पनभङ्गापाताच्च अतो वरमवयविनि गुरुत्वाद्यनुत्पत्तिकल्पनं तत्र चोक्तोदोषः। न द्वितीयः कदाचिन्निष्कम्पे अवयविनि शाखाफलहस्तादिलम्बनाभावप्रसङ्गात तथा च कथमवयव्यपि तत्र-लम्बेत संयोगान्तरादर्शनात् लम्बमानो ऽवयवी स्वावयवमपि लम्बयतीति चेन्न सर्वावयवलम्बनप्रसङ्गात् सङ्घातवादिनस्तु यथार्हं प्रतिबन्धांशेऽलम्बनोपपत्तिः कार्यगुरुत्वोत्पत्तौ कारणगुरुत्वं नश्यतीति चेन्न। अपसिद्धान्तात् रूपादिष्वपि तथात्वप्रसङ्गात्। अथ कार्यगुरुत्वस्यातिमन्दत्वात्सूक्ष्मं पतनवैषम्यन्दुर्ग्रहमिति तदपि न। मान्द्यकारणादृष्टेः कल्पकासम्भवाच्च अतस्तन्ततत्कार्यपटसमुदा-

* पतनेति पु· प·।

योन्माने पटद्वयोन्मान इव गुरुत्वान्तरकार्यन्तुल्यजमादिशब्देन द्रवत्वमन्यादिसंग्रहः स्वकार्ये *तत्तदुचितं कार्यमित्यर्थः तथाऽप्य-नन्यथासिद्धभेदकभूम्ना भेदसिद्धौ गुरुत्वान्तरकार्यादर्शनं कथंचिदन्य-तरप्रतिबन्धेन नेयमित्यभिप्रायेण शङ्कमानमप्रत्याह । नान्यत्व-मिति । यद्यपि नामभेदाभेदावर्थभेदाभेदयोरप्रयोजकौ तथाऽपि पर्या यातिरिक्तो विशेषणविशेष्यभावानर्हो वाचकभेद इह नामभेदः स च सिंहव्याघ्रशब्दवत् स्ववाच्यं भिन्द्यात् संख्याभेदोऽप्येकस्यैव द्वितीया-दियोगाद्यद्यपि स्यात् तथाऽपि नैवमत्र बहवस्तन्तव एकः पट-इति विभजनात् व्यवहृतिरिहार्थक्रियासिद्ध्यर्थो व्यापारः पटा-द्यर्थं तन्त्वादय उपादीयन्ते पटादयस्त्वाच्छादनाद्यर्थं न च तन्त्वादिमात्रे पटादिधीः पटादिषु वा तन्त्वादिधीरिति धिषणा-भेदः, आकारभेदश्च व्यवस्थिताश्रयो वृत्तचतुरस्रत्वादिः पूर्वका-लीनास्तन्त्वादयः पटादयस्तु पश्चाद्भाविन इत्येवंविध इह काल-भेदः आदिशब्देन कारणभेदादिसंग्रहः अंशुप्रभृतयस्तन्त्वादीनां पटादीनान्तु तन्त्वादय इति नियतोऽत्र कारणभेदः कार्यभे-दश्चैवं नियत एव कारणस्यैव च कार्यत्वे कारकव्यापारवैयर्थ्यं स्यादितिमे दहेतवः । एषामन्यथासिद्धिमाह द्रव्यभेदे ऽपीति । तुशब्दोऽवधारणे उपादानोपादेयतया ऽवस्थाद्वयवति द्रव्ये घटप-टवद्भेदं साधयितुं न शक्नुवन्तीत्यर्थः । अत्र दुस्तरप्रतिबन्द्यभि प्रायेण निदर्शयति । पत्रताटङ्कवदिति । पत्रस्य हि कुण्डलि-तस्य नियतं नामान्तरं दृष्टं सफलश्चावस्थान्तरेण कारकव्या-पारः न ह्यत्रावयव्यन्तरोत्पत्तिः आकुञ्चनप्रसारणपद्मसंकोचविकासा-दिष्वपि तत्कल्पनाप्रसङ्गात् न चैकेनावयवेनावयव्यारम्भः असम-

* तदुचितमिति पु· पा· ।

वायिकारणासम्भवात् अवयवावयवसंयोगस्तत्रासमवायिकारणमिति चेन्न। तस्यान्यार्थत्वात् अन्यथा अंशूनां तन्तुवत् पटाश्रयत्वमपि स्यात् न च तद्युक्तम् आरब्धकार्यैरवयवैस्तद्देवावयव्यन्तरारम्भान-भ्युपगमात् तत्र हि सप्रतिघत्वविरोधाद्विभेषि एवं सम्प्रतिपन्नाव-स्थाभेदमात्रानादरेण द्रव्यान्तरकल्पनेऽपि तमेव विरोधं प्रसञ्ज-यति। नो चेदिति। अंशांशिनोः अवयवावयविनोरित्यर्थः उक्तप्र-सङ्गे तदभिमतमेव हेतुमाह। उभयोरिति। द्वयोर्द्रव्ययोरन्यतर-स्य वा स्पर्शहीनत्वे मिथः प्रतिरोधोनास्ति इह तु न तथेति अभि-प्रायेणोभयोरित्युक्तम् अवयवावयविनोरैक्यत्र वृत्तिर्नास्तीति चेत्स-मवायिदेशैक्याभावेऽपि संयोगिदेशैक्यमङ्गीकरोषि तत्र कथं तन्त्ववष्टब्धनभःप्रदेशे पटसंयोगः, माभूदिति चेत् मूर्तामूर्तसंयोगविलोप-प्रसङ्गः मेरुमन्दरादीनामप्यविभक्ताकाशप्रदेशवृत्तावविरोधः स्यात् नीरक्षीरादिमेलने का वार्ता हन्त स्वसिद्धान्तं प्रस्मृत्य पृच्छसि एतेन भूमावुन्मज्जति निमज्जतीत्यादिसिद्धनिदर्शनमपि निहतम्। तस्मादवयवावयव्यतिरिक्तविषय एव सप्रतिघत्वविरोधव्यवस्थापन-मपि निर्मूलमिति ॥ २० ॥ परपक्षे प्रसञ्जितानां दोषाणामभावात् स्वपक्षस्य सम्यक्त्वमाह। इत्थमिति।

**मू० इत्थं वृत्त्यादिखेदो न भवति न च नः कल्प-**
**नागौरवं स्याद्वस्त्रे दीर्घैकतन्तुभ्रमणविर-**
**चिते वस्त्रधीर्नापि बाध्या। देशाधिक्यं समे-**
**तेष्वणुषु न हि ततः स्थूलधीबाधशङ्का संस-**
**र्गादेर्विशेषादवयविपरिषद्ध्राशिवन्यादिवादः**
**॥ २१ ॥**

इत्थमवस्थाभेदमात्रेण निर्वाहे सतीत्यर्थः । यद्वा त्वत्पक्षव-दिति उक्तस्सप्रतिघत्वविरोध इह वृत्तेः खेदः अवयवेषु वृत्त्यनुपप-त्तिर्वा यदि प्रत्यवयवमविभागेनावयवी वर्तते तदैकावयवदर्शनेऽ-प्यवयव्युपलभ्येत जातिरिव प्रत्याधारम्, अथ विभज्य अवयवानितरि-क्तांशभेदेनानवस्थापातः बलवत्प्रमाणोपनीतेऽर्थे सम्प्रतिपन्नवद्वृत्त्य-नुपपत्तिर्विलीयत इति चेन्न । प्रमाणबलस्यात्र निरस्तत्वात् आदि-शब्देनोत्पत्तिनाशानुपपत्तिस्संगृह्यते तथा हि पृथुतरपटनिर्माणप्रक्रमे द्वितन्तुकादिपटपङ्क्तिरुत्पद्यते न वा । न चेत् बुद्धिशब्दान्तरादि-रवस्थाभेदादेवेति सिद्धं स्यात् । उत्पद्यते चेत् त्रितन्तुकाद्यारम्भ-दशायां पूर्वपूर्वन्तिष्ठति न वा पूर्वत्र तदनारम्भः, आरब्धकार्यै-स्तदानीमवयव्यन्तरानारम्भात् । न च द्वितन्तुकादिस्तन्त्वन्तरस-हितस्त्रितन्तुकाद्यारम्भक इति युक्तम् इह तन्तुषु पट इत्यादिस्वा-भिमतव्यवहारविरोधात् ।

पूर्वसिद्धपटैस्सार्धं तन्तुभिः पटसम्भवे ।
पटपङ्क्तिस्समीक्ष्येत क्रमादाधिक्यशालिनी ॥
प्राक्सिद्धानां पटादीनामुत्तरोत्तरजन्मनि ।
अहेतुको विनाशश्च स्थिरपक्षे न युज्यते ॥

न चेदुपलम्भविरुद्धनाशसन्ततिकल्पनाप्रसङ्गः एवमेकद्वित्रा-दितन्त्वपकर्षणदशायामपि खण्डपरम्परोत्पत्तिनाशपरम्पराक्लृप्तिः क्लिष्ट-तरा लाघवशालिनि संघातमात्रपक्षे राशिन्यायान्नासौ दोषः । ननु गौरवभयादवयविपरिहारे सौगतवत्स्वरूपविशेषमालम्ब्य तन्त्वादीनां संयोगोऽपि त्यज्यतामित्यत्राह । न चेति । अत्र हि परैरप्यसमवा-यिकारणतयाऽभिमता दृष्टा च संयुक्तावस्था स्वीकृतेति नास्माक-मिह काचित्कल्पना कुतस्तद्गौरवं सम्भवेदिति भावः स्वलक्षणस-

मुदायवादिनाऽपि नैरन्तर्यरूपोऽतिशयः कश्चिदिष्यते अन्यथा दूरस्थवदेकताभ्रान्तिः पुञ्जबुद्धिर्वा न स्यात् त्वमपि विभूनामणूनां च नित्यानामपि हेतुभेदैरवस्थान्तरापत्तिमङ्गीकरोषि सर्वद्रव्यस्वरूपनित्यत्वन्तदवस्थाभेदं च वदतामपि तथा किं न स्यात्संयुक्तावस्थाऽपि हि परिणामः कथन्तर्हि नित्यानित्यविभागः इत्थं द्रव्यतदवस्थयोस्तथाभावादेव द्रव्यविवक्षायान्त्ववस्थाविशिष्टवेषेणानित्यत्वव्यवहार इति । ननु तन्तव एव व्यतिषङ्गविशेषविशिष्टाः पट इति भवतां राद्धान्तः पटवच्चेति सूत्रे दर्शितः तथा सति दीर्घकतन्तुपरिवर्तनविशेषनिष्पादितेऽवयविनि कथं पटबुद्धिः स्यात् अनेकतन्तुसंघातासिद्धेरित्यत्राह । वस्त्र इति । नहि वयं तन्तुगतमेकत्वं द्वित्वबहुत्वादिकं वा पटधीनिबन्धनं नियच्छामः यथादृष्टि सर्वसम्भवात् त्वं तु स्वपक्षदोषमस्मत्पक्षस्थं मन्यसे प्रदर्शितं हि पक्षे तादृङ्निष्पत्तावेकस्यावयवस्यानारम्भकत्वमतस्तवैव तत्र पटधीबाधः एकस्यारम्भकत्वेऽतिप्रसङ्गोऽपि तवैव । स्यादेतत् अवयविनमनभ्युपगच्छतामन्ततः पर्वतादयोऽपि परमाणव एव संहताः स्युः ते न प्रत्यक्षाः अतस्तत्रोग्रहणमवयव्यसिद्धेरित्यक्षपादोक्तमनतिक्रमणीयं स्यात् स्थूलद्रव्याबाधे चाणुसंहतौ स्थूलत्वाध्यासोऽपि न सिध्येदिति तत्राह । देशाधिक्यमिति । अयम्भावः स्थूलधीरित्यवयविधीर्वा परिमाणविशेषधीर्वा प्रत्यक्षयोग्यत्वधीर्वा प्रत्येकदेशादधिकदेशत्वधीर्वा नाद्यः तदभावप्रसक्तेरिष्टप्रसङ्गात्, न द्वितीयः संहतेरेवावयविवत्परिमाणान्तरस्य सृष्ट्युपपत्तेः अणुष्वेव कथं विरुद्धं स्थूलत्वं स्यादिति चेदेकत्वाद्याश्रयेष्वेव कथं द्वित्वादिकमिच्छसि अपेक्षाबुद्धिसंगृहीतान्यानुबन्धसामर्थ्यादिति चेद्बुद्ध्यनपेक्षसम्भेदसामर्थ्यादेव परिमाणान्तरमपि पश्यन्तु भवन्तः । न तृतीयः एकैकस्या-

प्रत्यक्षत्वेऽपि समुदायवशाद्दृश्यत्वोपपत्तेः यथैकस्य दवीयसः केश-हिमादेरदर्शनेऽपि संहतानां दृश्यत्वं एकैकस्याप्यासत्तौ दर्शनाद्योग्यत्वमस्तीति चेदणूनामपि त्रसरेणुमात्ररूपाणां सामग्रीसम्भवे तथैव स्यात् । न चतुर्थः माषादिराशिषु संहतिभेदैर्देशतारतम्यदृष्टेः ननु तत्तत्परिमाणावयविद्रव्याभावे तत्प्रयुक्तदेशन्यूनाधिकत्वन्दुर्निरूपं स्यात् मैवं न ह्यवयविनिरूपणेनैव देशाधिक्यादिनिरूपणं सुरभित्वगन्धत्वादेरिव सम्बन्धिन्यूनाधिकभावेनापि तदुपपत्तेः । द्रव्येषु नैवमिति चेत् न द्व्यणुकोत्पत्तेः पूर्वक्षणे संयुक्ताणुद्वयस्य प्रत्येकदेशादधिकदेशत्वावश्यम्भावात् अन्यथा सर्वपरमाणूनां समानदेशत्वे प्रागुक्तदोषप्रसङ्गात् द्व्यणुकान्तरपरिच्छिन्नस्स देश इति चेन्न । सहवृत्त्ययोगात् अन्यथा परिच्छेदासिद्धेः समवायिनस्संयोगिनो वा देशस्याभावे कथन्तत्र देशाधिक्यमिति चेन्न आकाशाद्यंशभेदेन तदुपपत्तेः कथं निरवयवस्यांशभेद इति चेदात्मानं पृच्छ कर्णशष्कुल्याद्युपाधिपरिच्छित्त्या नभसि नाना श्रोत्राणि कल्पयसि भेर्यादिशब्देषु श्रूयमाणेषु तरङ्गवृत्त्या तत्तदनन्तरदेशेषु शब्दोत्पत्तिं साधयसि वेणुरन्ध्रादिविशेषभागाश्च प्रसिद्धाः आकाशादेरप्रत्यक्षत्वात्तदंशतारतम्यं दुर्ग्रहमिति चेन्न । प्रत्यक्षाकाशवादिनम्प्रति हेत्वसिद्धेः त्वयापि माषादवयविनो महीधरस्याधिकदेशत्वं गृह्यते आलोकमण्डलांशभेदैस्तत्र देशाधिक्यमिति चेन्न आलोकस्यापि नभसि न्यूनाधिकदेशवृत्तित्वदृष्टेः परिमाणाधिक्यमात्रमेव पर्वतादिषु गृह्यत इति चेदगृह्यमाणमपि देशाधिक्यं तत्रास्ति न वा अस्ति चेत्सङ्घातेऽपि कश्चोद्यावकाशः, न चेत्तद्देशेषु चक्षुःप्रसरादिनिरोधकत्वं न स्यात् अन्यथा ऽल्पदेशवर्तिनः सर्वत्र निरोधकत्वप्रसङ्गात् अतः परस्परानाक्रान्तदेशावष्टम्भेन संहन्यमानेषु त्रसरेणुषु सुग्रहमेव देशाधिक्यं

देशस्तु आलोकाकाशादिर्यः कश्चिद्यथायोग्यमस्तु अत एव प्रधानाभावादणुषु स्थौल्यारोपोऽपि न स्यादिति चोद्यमपि निस्तीर्णम् तथाऽपि यदि संसृष्टास्तन्तव एव पटस्ततस्तन्तुराशिमात्रेऽपि पटधीः स्यादित्यत्राह । संसर्गादेरिति । न हि त्वयाऽपि तन्तुसंसर्गमात्र पटस्यासमवायिकारणमिष्यते तथा सति कुविन्दादिव्यापारनैरपेक्ष्यप्रसङ्गात् अतो यादृशात्संसर्गविशेषादवयवी तवोत्पद्यते तादृशसंसर्गविशिष्टास्तन्तवः पट इति क्लातिप्रसङ्गः । आदिशब्देन संसर्गिद्रव्याणि देशकालौ च गृह्यन्ते द्वितीयेन त्वादिशब्देन यूथपङ्क्तिमण्डलसेनाव्यूहपूर्णचतुरश्रादिसंग्रहः परिषदाद्युपादानं दृष्टान्तार्थं मत्वर्थीयमपि शूरवती सेनेतिवत् प्रत्येकसमुदायभेदविवक्षया स्यादिति ।

भिन्नानामेव संश्लेषे संघातैक्यानुसारतः ।
संयुक्तौ द्वाविति प्रख्या राशिद्वित्वनयाद्भवेत् ॥
महत्त्वैकत्वयुक्तत्वप्रभृतेरपि राशिवत् ।
संयुक्तद्रव्यनिष्ठत्वान्न संयोगे प्रसञ्जनम् ॥
घनत्वश्यामतादीनां वनैकाधिकरण्यतः ।
न स्याद्वृक्षबहुत्वादेर्घनत्वाद्यैर्विशेषणम् ॥
तन्तवः सितरक्ताद्याः पटचित्रानुयायिनः ।
अवयव्यनपेक्षत्वं चूर्णसंहतिचित्रवत् ॥
रूपादीनामचित्रेऽपि वदन् वैषम्यदर्शनम् ।
अपह्नुवीत वैयात्यात्खपुष्पादेरदर्शनम् ॥
या चासौ धारणाकृष्ट्योरुपपत्तिरसूच्यत ।
तादृग्भूतावयव्यर्थे संघाते सा भविष्यति ॥
गाढावयवसंश्लेषरहिते ऽवयविन्यपि ।
धारणाकर्षणे न स्तस्तथा चाभ्युपगच्छसि ॥

धारणाकर्षणे चात्र धृताकृष्टानुबन्धतः ।
दृष्टावयवसंश्लेषसहितेऽवयविन्यपि ॥
अंशान्तरेषु* तेऽस्माकं सिद्धे जतुगृहीतवत् ।
तृणोपलादिजतुसंगृहीतं यदुदाहृतम् ॥
तत्राऽप्यवयवी नेष्टः कश्चिज्जतुतृणादिषु ।
पाशाद्यैरपि पश्वादेर्धारणाकर्षणे समे ॥
किन्तत्र पशुपाशादिष्ववयव्यभ्युपेयते ।
संग्रहप्रभवं चात्र धारणाद्यनुभाष्य तु ॥
पक्षिलस्तन्मतस्थो वा नोत्तरं सम्यगब्रवीत् ।
आरब्धकार्यैरारम्भो मिथस्सप्रतिघत्वतः ॥
न्यायवार्त्तिकटीकादौ क्षिप्रस्संमतिरत्र नः ।
प्रत्यक्षातीन्द्रियोपात्ते प्रत्यक्षत्वं च दुर्भणम् ॥
चाक्षुषाचाक्षुषद्रव्यसंयोगे चाक्षुषत्ववत् ।
मुधा चोदाहृतं कैश्चिद्धिमवत्परमाणुकम् ॥
टीकाकारस्तु तत्राह सूक्ष्मद्रव्योपलक्षणम् ।
विशेषाऽनुपलम्भेऽपि राश्येकत्वमतिर्यथा ॥
वृक्षादिष्वपि तद्वत्स्यादाद्यथादृष्टि व्यवस्थितेः ।
एकदेशे समस्ते च वृक्षलक्षणसम्भवे ॥
वृक्षधीरुपपद्येत संग्रहाच्चापृथक्श्रुतिः ।
सर्वाग्रहणमवयव्यसिद्धेरिति सूचयन् ॥
प्रत्यक्षव्यतिरिक्तान्तक्लृप्तिदौस्थ्यपराहतः ।
सेनावनवदित्यादावप्रत्यक्षाणुसूचणम् ॥
त्रसरेणवत्र्यधिस्याणुस्थापकेषु न शोभते ॥ २१ ॥

* ते इत्यस्य द्विवचनान्तत्वे प्रकृतिभावावश्यंभावेन तेऽस्माकमिति पूर्वरूपं चिन्त्यमिति ।

एवन्तन्तुपटादीनां भेदे बाधकं तत्साधकानामन्यथासिद्धत्वं चोक्तम्। तथाऽप्यभेदे किम्प्रमाणमिति वदन्तं प्रति स्थिरत्वे प्रमाणमेवात्र प्रमाणमित्याह। द्रव्यैक्यमिति।

**मू० द्रव्यैक्यं प्रत्यभिज्ञा प्रथयति परिमित्यन्तरेऽन्याप्रतीतेरंशूत्कर्षत्रयादित्वममपि च ततोराशिवत्स्थूलमेकम्। नो चेदश्रान्तचण्डानिलजलधिधुनीदन्तिदावानलाद्यैः क्षोणीयं क्षुद्यमाना क्षणमपि चरमामण्ववस्थां न जह्यात्॥ २२॥**

परिमित्यन्तरे सत्यपीति शेषः इदं च भेदसाधकानामुपलक्षणं यथा प्रसारितस्याकुञ्चितस्य दीर्घत्वह्रस्वत्वे यथा च घनीकृतस्य विरलीकृतस्य च तूलपिण्डस्याल्पत्वविपुलत्वे दृश्येते एवं वृत्तचतुरश्रत्वादिविशेषे दृष्टेऽपि स्यात् कुतः अन्याप्रतीतेः, द्रव्यान्तरस्यादर्शनादित्यर्थः अन्यथा सर्वत्र यत्किंचिदवस्थाभेदमात्रेऽपि द्रव्यभेदोदृश्यते इति धृष्टवादे का प्रत्युक्तिः पद्मसंकोचविकासादिषु च द्रव्यान्तराभावो न्यायवार्तिकटीकायामुक्तः किंचान्त्यावयवित्वं पटादीनामिष्यते, तैरनेकैरच्छिन्नावयवैरेकपटादिनिर्माणेऽवयव्यन्तरमुत्पद्यते न वा पूर्वत्र तेषामन्त्यावयवित्वव्याघात उत्तरत्र तन्त्वादिभिरपि तथा स्यात् अविशेषात्। अन्यस्तर्ह्यन्त्यावयवी भवत्विति चेन्न। सर्वत्रैवं कस्यचित्कार्यस्य सहकारिभेदैः सम्भवात् सन्ति चास्मदादाशक्यस्रष्टारः केचित् अन्ततः ईश्वरश्च। किं च योऽसौ गोपुरादिरन्त्यावयवी तत्र यदि कश्चित्सुधाभिरवयवान्तरं संघटयेत् तदा तत्पूर्वं गोपुरं तिष्ठति नश्यति वा पूर्वत्र कथमन्त्यः उत्तरत्रानन्य-

थासिद्धोपलम्भविरोधः नाशकारणाभावे नाशानुपपत्तिः अपि च तूलपिण्डमध्यस्थमंशुं यदि कश्चित्सूच्याऽपकर्षेत् तदा तस्य परिमाणह्रासो न दृश्यते न च तस्य नाशः । अथापि तत्र ते नाशः कल्प्यः असमवायिविनाशात् समवायिविगमाच्च संघातवादे त्ववयवोत्कर्षापकर्षवादमाचान्न किंचिद् द्रव्यमुत्पद्यते नश्यति वा केवलमाषादिराशिष्विवोपचयापचयमात्रमेव अतो यथोपलम्भं संघातपक्ष एव साधीयानित्याह । अंशूत्कर्षेति । आदिशब्देनांशविदारणसन्धाने गृह्येते यदि क्वाचित्कावयवभेदमाचात्पूर्वद्रव्यनिवृत्तिरवयव्यन्तरोत्पत्तिः स्यात् तत्रानिष्टमाह । नो चेदिति । अव्यवस्थितेषु प्रदेशभेदेषु तैस्तैर्भेदकैरणुद्वयविघटने द्व्यणुकविनाशादिक्रमेण महापृथिवीपर्यन्तनाशे सति अवस्थितसंयोगैरपि पुनस्तदारम्भावसरो न सेत्स्यति तदेतत्समुद्रादिषु कैमुत्यसिद्धम् । यदप्येवं कल्प्यते द्वाभ्यामेवाणुभ्याम् आद्यं कार्यद्रव्यमारभ्यते एकस्यानारम्भकत्वात् असमवायिविरहात् संयोगो हि न स्वेन स्वस्य बहुभिरारब्धत्वे महत्त्वप्रसङ्गेन प्रत्यक्षत्वापातात् बह्वारब्धस्याप्यणुत्वेऽतिप्रसङ्गः तत्परिमाणं चावयवसंख्याविशेषेणावयवमहत्त्वप्रचययोरसम्भवात् नित्यपरिमाणस्यानारम्भकत्वात् स्वातिशयपरिमाणारम्भकत्वनियमेनाणुतरपरिमाणारम्भकत्वप्रसङ्गाच्च सा च द्वित्वादिसंख्या सर्वत्रापेक्षाबुद्धिजन्या तद्विनाशकाभावेऽपि कार्यत्वादनित्या एवं त्रिभिरेव द्व्यणुकैस्त्रसरेणवारम्भस्तावतैव महत्त्वलाभात् द्वाभ्यामारम्भे त्ववयवप्रचयमहत्त्वरूपकारणान्तराभावेन महत्त्वानुत्पत्तावदृश्यत्वप्रसङ्गात् स च त्रसरेणुः अप्रत्यक्षावयवकतद्रूपोऽपि स्वयं प्रत्यक्षः प्रत्यक्षरूपश्च । यद्वा अन्यरूपारोपेणालोच्यते यथाऽऽहोदयनः दृश्यमेव ह्यालोकरूपमारोप्य पिञ्जरस्त्रसरेणुश्चालोच्यत इति उत्तरावयविनान्तु अनियतसंख्यैरारम्भः भावरूपस्य सर्वस्य

समवाय्यसमवायिनिमित्तसापेक्षत्वेऽपि प्रध्वंसस्तु निमित्तमात्रजन्य इत्यादि । एतादृशं कल्पनाजातं न विद्यावृद्धा बहु मन्यन्ते तथा च सूत्रम् अपरिग्रहाच्चात्यन्तमनपेक्षेति ॥ २२ ॥ इत्यवयविविवादभङ्गः ॥ या चान्या कल्पना शरीरादिषु पृथिव्याद्यनेकभूतसद्भावेऽप्येकमेव भूतमुपादानमन्यत्संसर्गिमात्रमिति तामपि निरस्यति । संघात इति ॥

**मू० संघातोऽनेकभूतैरपि भवति यथाऽप्येकभूतस्य भागैर्देहादिः पञ्चभूतात्मक इति निगमाद्युक्तिभिश्च प्रसिद्धम् । न त्वेवं संकरःस्याद्भवहृतिनियमस्सूत्रितस्तारतम्याद्देहादौ येन भूतान्तरयुजि भवतो भौमतादिव्यवस्था॥२३॥**

अवयविसद्भावे ह्येकप्रकृतित्वं नियन्तव्यं न वा त्वया संघातवादे तु यथादर्शनं सर्वमुपादानं न च विजातीयानां संहतिर्नास्ति दृष्टविरोधात् युष्मत्सिद्धान्तविरोधाच्च अन्यथा कथन्तैजसत्वाभिमते काञ्चनादौ गुरुत्वादिक्लृप्तिः किंच त्रिवृत्करणं नामरूपव्याकरणार्थं चतुर्विधाहारमयं शरीरमिति च गर्भोपनिषत् पञ्चभूतात्मकं वपुरित्यादि च स्मर्यते तदिदमाह देहादिरिति यथा विजातीयवृक्षपोतव्यतिषक्तोपचये वृक्षैकत्वधीः एवमेकस्मिन्ननेकभूतारब्धे विरुद्धजातिसमावेशगन्धोऽपि न स्यादित्याह न त्विति एवं शब्द उक्तहेतुपरो वा अपूर्वद्रव्यानुत्पादादित्यर्थः तदुत्पादेऽपि न जातिसङ्कर इत्याशयः नरसंहादिन्यायेनोभयविलक्षणावयव्युत्पत्तिसम्भवात् कल्प्यते च युष्माभिस्त्रिचत्वं रूपान्तरम् एतेन तज्जातीयोपात्तं कथमतज्जातीयमित्यपि प्रत्युक्तं तन्त्वादिजातीयैरतन्त्वादिजातीयोत्पत्त्यभ्युपगमाच्च भवतु वा पृथिवीत्वतोयत्वादीनामेकत्र समावेशः तथाऽपि का हा निः परस्परप-

Acn No. 3766



रिहायुपाधिद्वयसमावेशन्यायेन दर्शनादर्शनाभ्यामेव सर्वातिप्रसङ्गशान्तेः । ननु पाञ्चभौतिकेषु कथमेकभूतशब्दस्तत्तदर्थक्रियानियमश्च वर्णितोहि भवद्भिरेव भूतान्तरोपष्टब्धेषु अपि देहादिषु पार्थिवाप्यादिविभागः कथं च मन्त्रार्थवादेषु पृथिवी शरीरमित्यादिविशेषव्यपदेश इत्यत्राह व्यवहृतीति । सूचितो ह्यसौ वैशेष्यात्तु तद्वादस्तद्वाद इति च्यात्मकत्वात्तु भूयस्त्वादिति च अत्र प्रतिबन्दीं प्रथयति देहादाविति । येनेति तारतम्यपरामर्शः तथाप्यनारब्धावयविकेषु विजातीयराशिषु भूयस्त्वव्यवहारोलोकसिद्धस्समन्तव्यः विजातीयदारुशिलाद्यारब्धेषु च खट्वापुरादिषु किंचिज्जातीयत्वनियमः तथावयव्यनारम्भे सर्वत्रैवमस्मन्मतसिद्धिः ।

विभागादविभागाच्च भूतभौतिकभेदधीः ।
सत्येव यदि वा द्रव्ये सिद्धसाध्यदशाद्वयात् ॥
एकत्वं च बहुत्वं च मृत्पिण्डकरकादिवत् ।
समष्टिव्यष्टिनीत्यैव त्रिगुणे वदति श्रुतिः ॥
ईदृक्सत्कार्यवादश्च वैदिकैः परिगृह्यते ।
द्रव्यस्य पूर्वसिद्धस्य साध्यावस्थाविशेषतः ॥

ननु यदि पूर्वं नित्यं सद् द्रव्यं तत्कथं सांख्यमतमुज्झतः कार्यं स्यात् या त्वागन्तुक्यवस्था सा न प्राक्सती अतः कथं सत्कार्यवादं ब्रूथ । इत्यत्राक्सदेव द्रव्यमवस्थान्तरविशिष्टवेषेण कार्यन्तयैव लोकवेदव्यवहारस्थितिरिति ॥ ३२ ॥

इति देहादेः पाञ्चभौतिकत्वम् । ईदृशसत्कार्यवादमसहमानस्य सांख्यस्य नित्यैकान्तवादनियतान्प्रयोगानन्वाह । सन्तीति ।

**मू० सन्ति प्रागप्यवस्थास्सदितरकरणप्राप्तनिष्प-**

**स्यदृष्टेः शक्ताशक्तप्रभेदादिभिरपि यदि न स्वोचितात्कार्यदृष्टेः । तस्मिन्सत्येव तस्माज्जनिरपि नियता तन्निमित्तादिनीतेर्व्यक्तिर्व्यक्ता ऽनवस्थां भजति न च कृतामात्थ नैवं कृतौ नः ॥ २४ ॥**

द्रव्यपक्षीकारेऽस्मान्प्रति सिद्धसाध्यताऽतोऽवस्थेत्युक्तम् । यदाहुस्सांख्याः "असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यमिति" । तत्रायं सदितरकरणादृष्टेरित्येको हेतुः अप्राप्तनिष्पत्त्यदृष्टेरिति द्वितीयः सदितरशब्देन प्रागसत्त्वमिह विवक्षितं न ह्यसत्खपुष्पादि क्रियेत मा भून्नित्यासतः करणम् । अत्र प्रागसत्त्वमात्रमिति चेन्न । तद्वदेव कदाचिदसतस्सर्वदैवासत्त्वापातात् न चासतः कदाचित्सत्त्वापत्तिः विरोधात्, न हि चिच्छक्तेः कदाचिदपि जडत्वं जडस्य वा चित्त्वम् । एवं यद्यतोऽन्यत् न तत्सर्वं कदाचिदपि तत्स्यात् प्रमाणादेरपि कदाचिदप्रमाणत्वप्रसङ्गात् न चातीतादेर्वर्तमानतादिरीश्वरेणापि सुनिष्पादः असत्त्वं सत्त्वं च वस्तुनोऽवस्थेति चेत् वस्तुनस्तर्ह्यनादितैव न च सन्निवासन्घटः प्रागुपलभ्यतेऽस्माकन्त्वव्यक्तावस्थयाऽनुपलब्धिरप्युक्तन ह्यसन् घटादिर्न घटादिरिति तु कस्यचिद्वचनं बालप्रतारणमभावप्रतियोगिवचने विवक्षितविरुद्धोक्तेः अभावमात्रविवक्षायां विरोधादिति उपादानग्रहणादित्यनेन विवक्षितं हेतुं व्यतिरेकेण व्यनक्ति । अप्राप्तनिष्पत्त्यदृष्टेरिति । न हि घटादिकार्यमप्राप्तैरन्यत्र दण्डचक्रादिभिस्तस्योत्पत्तिः तन्त्वादिभिर्वा पटादेः अतोऽवगम्यते स्वकार्यं प्राप्तैरेव निमित्तैरुपादानैश्च स्वसाध्यसाधनमिति प्राप्तिश्च

द्विनिष्ठेति साध्यस्यापि साधनवत्पूर्वभावित्वात् सदेव साध्यमिति शक्तस्य शक्यकरणादित्युक्तहेत्वभिप्रायेण शक्ताशक्तप्रभेदवचनमसतोऽप्यप्राप्तस्यापि सृष्टिः हेतुशक्तिनियमात्स्यादित्यस्योत्तरमेतत्। अयम्भावः यदि कारणेष्वसत्तदप्राप्तं च कार्यमुत्पद्येत तदा तिलेभ्य एव तैलं किमुत्पद्यते न सिकतादिभ्यः शक्ताशक्तभेदादिति चेत् सिद्धं नस्समीहितं तिलानां तैलोत्पादनशक्तिर्हि तद्गतत्वमेवान्यादर्शनात् तदशक्तिश्च सिकतानां तदभावः तथा सति तद्गतस्तन्निष्पत्तेः प्रागपि तत्सिद्धिरनिवार्य्येति आदिशब्देन कारणभावात् सर्वसम्भवाभावादिति हेतुद्वयग्रहणम्। कारणभावात् कार्यस्य कारणात्मकत्वादित्यर्थः प्रागेव सति कारणे कथं तदा तदभिन्नं कार्यमसद्भवेत्। नन्वस्तु प्रागसदेव कार्यं मा च भूवन् हेतुप्राप्ति–तद्वृत्ति–तदैक्यानि तथाऽपि कस्यचिदेव किंचित्कार्यमित्यत्र सर्वसम्भवाभावादिति प्रसङ्गतद्विपर्ययाभ्यां प्रत्युक्तिः तथा हि यदि प्रागसत् हेतुभिरप्राप्तं हेतुवृत्तितादात्म्यरहितं च तत उत्पद्यते सर्वस्मात्सर्वसम्भवः स्यात् न चासावस्तीति पञ्चानामप्याभासत्वाभिप्रायेण प्रतिवक्ति। नेति। तत्र प्रथमस्य प्रतिक्षेपे हेतुः कार्यदृष्टेरिति। शेषाणान्तु स एव स्वोचितादिति विशेषितः न तावत्कार्यमिति किमपि न दृष्टं सर्वलोकवेदविरोधात् व्यक्तिसाधनस्यापि निराश्रयत्वप्रसङ्गाच्च। न च दृष्टमपि न सत्यं माध्यमिकादिमतानां निराकरिष्यमाणत्वात्। न च सत्यमपि न कारणाद्व्यतिरेकेण गृह्यते उक्तोत्तरत्वात् प्रकृतिविकृतीत्यादिविभागभङ्गप्रसङ्गाच्च अतःकारणाद्भिन्नत्वेन दृष्टं कार्यं तेनाकारेण पूर्वं नासीदिति त्वयैवाकामेनापि स्वीकर्तव्यं न हि घटाकारेण निष्पन्नस्य पुनरपि दण्डादिव्यापारनिष्पाद्यत्वमस्ति किंच कार्यव्यङ्ग्यशब्दौ च व्यवस्थितविषयौ लोके दृष्टौ कारकव्यञ्जकभेदश्च

कारकं समग्रमप्येकमुत्पादयति व्यञ्जकन्तु सहकारिसम्पन्नं समानेन्द्रियग्राह्याणि समानदेशस्थानि तादृशानि सर्वाण्यपि व्यनक्ति तदत्र घटादिव्यक्तिसामग्र्यैव तद्वन्मृत्पिण्डगतानां करकादीनामपि व्यक्तिः स्यात् व्यञ्जकत्वे सिद्धे ह्यवान्तरव्यङ्ग्यभेदप्रतिनियतव्यञ्जकभेदव्यवस्थाक्लृप्तिः न चेह तथा आगन्तुकाभावे च पुरुषवत्प्रकृतिरपि ते निर्व्यापारैव स्यात् तथा च गतं सृष्टिप्रलयादिवादैः सिद्धान्तसृष्ट्यादिभिश्च । किंच सत्कार्यमिति कार्यस्य सत्त्वमात्रे साध्ये सिद्धसाध्यता कारकव्यापारात्प्रागपि सदिति साध्ये कार्यस्य कारकव्यापारस्य प्रागसत्त्वमङ्गीकृतं स्यात् । असदकरणात् शक्तस्य शक्यकरणादिति हेत्वोश्च करणशब्देनापूर्वोत्पादने विवक्षिते स्ववचनव्याघातः । व्यक्तिविवक्षायां तु व्यज्यमानत्वात्प्रागपि सदिति स्यात् । तदा अन्यतरासिद्धो हेतुः । ननु सतोऽभिव्यक्तौ घटतैलतण्डुलादिनिदर्शनमस्ति असत उत्पत्तौ न किंचिदिति चेत् किमतः, न हि निदर्शनमेव प्रमाणं हेतुनैष्फल्यप्रसङ्गात् । न च निदर्शनाभावे बाधकः, सर्वत्र प्रतिनियतस्वभावलोपप्रसङ्गात् । अपि च असदकरणादित्यत्र कार्यस्य प्राक्सत्त्वे क्रियमाणत्वादित्येव हेतुः स्यात् तथा च प्रतिज्ञाहेतुविरोधः विपक्षात् खपुष्पादेः सपक्षाच्च सर्वस्मात् व्यावृत्तत्वेन हेतोरसाधारणत्वप्रसङ्गश्च भावत्वेन तु प्राक्सत्त्वं साधयाम इति चेत् । तथाऽपि प्रत्यक्षविरोधः अन्यथा नित्यासतोऽपि कुतश्चिन्नित्यसत्त्वसाधने निवारकाभावात् । असतः सत्त्वापादनमशक्यमित्युक्तमिति चेन्न । अत्यान्तासत्त्वे विवक्षिते कार्येषु तदभावात् । प्रागसत्त्वे तु सृष्ट्यनुगुणस्यैव तद्विरुद्धत्वोपन्यासात् ।

प्रागसत्तुच्छमेव स्यात् सच्च नित्यं सदित्यसत् ।
अयथादृष्टि निर्णेतुरशेषाभीष्टविप्लवात् ॥

अन्योऽपि घटवान्कालः कालत्वादिति वादिनः ।
पक्षदृष्टान्तबाधादिप्रसङ्गः प्रणिधीयताम् ॥

यच्च कारकाणां कार्यं प्राप्तानामेव तदुत्पादकत्वमिति । व्याहतमेतत् । किंच किं दृष्टत्वादेवमङ्गीक्रियते अव्यवस्थाभयाद्वा । नाद्यः अनन्यथासिद्धनियतपूर्वभावित्वादतिरिक्तायाः कार्यप्राप्तेः कारणानां मिथः प्राप्तिवत् त्वयाऽप्यदृष्टत्वात् तदिहानङ्गाङ्गीकारो युक्ताङ्गहानिश्च । प्रागसत्त्वस्य युक्तस्योपेक्षणात् । अविषयवृत्तित्वं वा कारकाणां सम्बन्धस्य । विरुद्धस्थले सञ्चरणात् । समश्च प्राप्तावप्यतिप्रसङ्गः, न हि प्राप्तयोरपि रज्जुघटयोर्जन्यजनकता । तत्र नित्यप्राप्तिर्नास्तीति विशेष इति चेत् । निमित्तानामपि घटादिभिर्नित्यप्राप्त्यसम्भवात् । उपादाने तु स्यादिति चेन्न । निमित्तवदेव नित्यप्राप्तिनैरपेक्ष्यात् । त्वत्पक्षेण च यद्येन नित्यप्राप्तं न तत्तस्योपादेयं यथा पटस्य तन्तुः तथा च पटः तस्मान्न तन्तूपादेय इति प्रसङ्गात् । प्रकृतिपुरुषयोर्नित्यप्राप्तयोर्नोपादानोपादेयभावः अतो यद्येन नित्यप्राप्तं न तत्तस्योपादेयं यथा प्रकृतिपुरुषयोरन्योन्यमिति पटादिकमपि येन नित्यप्राप्तं कथं तस्योपादेयं स्यात् । तयोरन्योन्यप्राप्तिर्नास्तीति चेन्न । पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्ग इति स्वसमयविरोधात् । अजसंयोगपक्षे विभूनामपि नित्यप्राप्तेः ।

व्याप्तिरूपेण सम्बन्धस्तस्याश्च पुरुषस्य च ।

दारुण्यग्नि यथा—

इत्यागमविरोधाच्च । जहात्येनां भुक्तभोगामिति श्रुत्या मुक्तस्य प्रकृतिप्राप्तिर्निवर्त्स्यतीति चेन्न । तदाऽपि परस्परधर्माध्यासाधिकारभूतदर्शनमात्रनिवृत्तेः त्वदिष्टत्वात् । यद् ब्रूथ । या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्येति । अतः कार्यप्राप्तिः कारणा-

नङ्गम् उक्तं चात्तपादेन घटादिनिष्पत्तिदर्शनात्पीडने च व्यभिचारादप्रतिषेध इति । अत्र कार्यमप्राप्तैः इत्युपस्कार्यम् एतेन ।

असत्त्वान्नास्ति सम्बन्धः का*रणैः सत्त्वसङ्गिभिः ।
असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥

इति साङ्ख्यवृद्धगाथाऽपि प्रत्युक्ता । इह तु स्वोचितात्कारकचक्रात् तत्सम्बन्धतश्च कार्यदृष्टेरित्यव्यवस्थामूलघातः । एतेन विमतं पूर्वापरकालयोरपि सत् प्रमेयत्वात् सत्त्वाद्वा आत्मवत् । विगीतः काल एतद्घटादिमान् कालत्वात् एतत्कालवदित्यादिर्निरस्तः सर्वलोकप्रत्यक्षादिबाधात् ।

कारकव्यञ्जकानां च व्यवहारव्यवस्थितिः ।
किन्निमित्तेति वक्तव्यं सर्वनित्यत्ववादिना ॥
न हि व्यक्तौ विशेषोऽस्ति न चावरणवारणम् ।
तयोरपि भवत्पक्षे नित्यत्वात्साध्यता कथम् ॥
आवारकं च नित्यं चेन्नित्यमावरणं भवेत् ।
अन्यथा त्वपसिद्धान्तस्तत्तिरोधिश्च दुर्वचः ॥
तिरोधिं तन्निवृत्तिं च नानित्यौ तस्य मन्यसे ।
मिथश्चाभिभवाद्युक्तिर्गुणेष्वेवमनर्थिका ॥
समानदेशकालत्वमभावप्रतियोगिनोः ।
सहन्ते क्वाप्यगत्यैव न तथाऽचान्यथा गतेः ॥
अपि चाऽशेषनित्यत्वे पौर्वापर्यं न कुत्र चित् ।
व्यक्तिभोगापवर्गादिसाध्यतोक्तिरतो मुधा ॥
स्वप्रवृत्त्यादिनैष्फल्यं शास्त्रादेरप्यनुत्थितिः ।
सांख्यचार्वाकयोस्स्यातां साध्यसाधनबाधनात् ॥

* कारकैरिति पा० ।

अयोग्यत्वं तिरोधानं योग्यत्वं व्यक्तिरित्यपि ।
तन्नित्यानित्यताभ्यां ते विवक्षितविघातकृत् ॥
इन्द्रियप्रतिघातेन भागैर्भागान्तरावृतिः ।
यथा ऽन्यत्र तथा नाऽत्र कादाचित्कदशात्यजः ॥
असम्भवनिरस्तं च ग्रसनोद्ग्रसनादिकम् ।
मृत्पिण्डादिषु दुस्साधं शास्त्रमप्यनिदम्परम् ॥
अप्राप्तावव्यवस्थोक्ता प्राप्तावपि तवापतेत् ।
व्यक्तिवादोऽत एवेत्यप्ययुक्तं तन्निरासतः ॥
सत्त्वादिगुणभूयिष्ठभागभेदाव्यवस्थितेः ।
त्रिगुणद्रव्यसम्बन्धः प्रवाहानादिरात्मनाम् ॥
सार्वज्ञ्यप्रागभावात्मा तिरोधिरपि कर्मिणाम् ।
संविद्विकाससङ्कोचप्रवाहान्नातिरिच्यते ॥
तत्तत्कर्मप्रवाहेण तयोरेवं व्यवस्थितेः ।
न हि स्वरूपतोऽनादेर्हेतुरस्माभिरिष्यते ॥

यत्तु कारकशक्तिर्नाम तद्गतं सूक्ष्मं कार्यमिति कल्प्यते तत्प्रतिबन्धा प्रतिरूणद्धि । तस्मिन्निति । तस्मादित्यत्राऽपि स्वोचितादिति विशेषणीयं यथा सर्वेषु द्रव्येषु तिला एव तैलगर्भाः स्वकारणशक्त्या सृज्यन्ते तथा तत्तत्कार्यनियतपूर्वभावितया तत्तदुत्पादकस्वभावास्ते ते भावास्तथैवेति स्वीकार्यम् । अन्यथा दृष्टहानमदृष्टकल्पनं च । प्रतिबन्द्यन्तराणि स्वव्याघातं चाभिप्रेत्याह । तन्निमित्तेति । निमित्तादीनां कार्योत्पादनशक्तिरस्ति वा न वा न चेत्कथं तन्निमित्तत्वम् अन्येषां वा कथमतन्निमित्तत्वम् । अस्ति चेत्सा किं कार्यस्य सूक्ष्मावस्था अन्या वा । न पूर्वः अपसिद्धान्तात् । उपादाने हि तत्सत्त्वमङ्गीकरोषि । अन्यथा प्रकृतेरिवात्मनोऽपि

प्रपञ्चगर्भत्वेन प्रकृतित्त्वप्रसङ्गात् । आत्मा खल्वयस्कान्तवन्निर्व्यापारोऽपि सन्निधिमात्रेण निमित्तमिष्यते तथा सति निमित्तोपादानवैषम्यविलयाच्च । नाशकेषु च नाश्यवृत्तिरस्ति न वा । अस्ति चेद्वह्नौ तूलवद्विरोधः न चेत्कथं तदेव तस्य नाशकं न ह्यतद्वृत्तिस्तेन नाश्यते शुक्तावविद्यमानस्य रूप्यस्य तया नाशप्रसङ्गात् सर्वत्र वाऽतिप्रसङ्गात् दूषणेषु च दूष्यं वर्तते न वा । पूर्वत्र दूषणत्वादेरिव तद्वृत्तेस्तेन दूषणायोगः । उत्तरत्र तद्वृत्तिरहितस्य घटादेरिव तद्दूष्यत्वं न स्यात् । अथैतेषु यथादर्शनं व्यवस्थेष्यते । प्रकृतेऽपि तथा स्यात् । एवं निमित्तादिप्रतिबन्द्यैव कार्यस्य कारणभावः सर्वत्र सर्वसम्भवप्रसङ्गश्च निरस्तः । यानि च सांख्यानामवस्थातद्वतोरभेदसाधकानि तेषु यदेतत् पटस्तन्तुभ्यो न भिद्यते तद्धर्मत्वादिति । अत्र तावत्प्रतिज्ञाहेतुविरोधः स्पष्टः । दृष्टान्ताभावेन व्याप्तिश्च नास्ति यद्यतो भिद्यते न तत्तस्य धर्म इति व्यतिरेकव्याप्तिरस्तीति चेन्न । सपक्षेभ्यस्तन्तुभ्योऽपि व्यावृत्तत्त्वेन केवलव्यतिरेकित्वायोगात् । यदपि तदुपादेयत्वात्तदभिन्न इति । एतदपि पूर्ववदेव । तदुपादेयत्त्वं च तज्जन्यत्वमात्रं वा तद्विकारत्त्वं वा तत्सम्बन्धित्त्वं व तद्धर्मत्वं वा तदभिन्नत्त्वं वा अन्यद्वा यत्किंचिदिति नाद्यः । निमित्तैरप्यभेदप्रसङ्गात् न द्वितीयः तद्धर्मत्त्वहेतूक्तदोषादेव । उभयत्र पटावस्था तन्त्वात्मा न भवति तन्तुभ्यो भिन्नत्वात् घटवदिति प्रतिप्रयोगस्य शक्यत्वाच्च । इष्टो हि त्वयापि तत्र भेदोऽपि । न तृतीयः कारणेषु परस्परसम्बन्धिषु व्यभिचारात् त्वत्पक्षेणाऽसिद्धेश्च । न हि धर्मधर्मिणोस्तादात्म्यवादिनः तत्संबन्धित्वसम्भवः समवायस्यानभ्युपगमात् अन्यतरस्याद्रव्यत्वे तु संयोगायोगाच्च । न चतुर्थः प्रागेव दूषितत्वात् न पञ्चमः तस्यैव साध्यत्त्वात्, न षष्ठः अभेद-

व्याप्यस्य कस्यचिदन्यस्य त्वयाऽप्यदर्शनात् । इति यच्चैतत्पटस्तन्त्वात्मकः तत्संयोगतदप्राप्तिरहितत्वात् तादात्म्याभावे हि कुण्डबदरयोरिव संयोगो वा स्यात् हिमवद्विन्ध्ययोरिवाप्राप्तिर्वा तदुभयमिह निवर्तमानं तादात्म्यविरहमपि निवर्तयति इति तदपि मन्दं तादात्म्यविरहेऽपि अन्यतरस्याद्रव्यत्वात् संयोगाभावः तद्धर्मस्वभावत्वादेवाप्राप्तिपरिहार इत्यन्यथासिद्धस्यासाधकत्वात् अन्यथा तादात्म्याभाव इव भेदसद्भावेऽपि घटपटयोरिव धर्मधर्मिभावो न स्यादिति प्रसज्येत । गुरुत्वान्तरकार्यादर्शनन्तु द्रव्यान्तरोत्पत्तिं प्रतिरुन्ध्यात् न त्ववस्थातद्वतोरभेदं विदधीत । ननु जनिरपि व्यक्तिरेव जनी प्रादुर्भावे इति धात्वर्थपाठात् । न । जनिव्यक्तिशब्दयोरर्थभेदेनैव निरूढेः प्रादुर्भावपाठोऽप्युत्पत्तिपरस्स्यात् निर्वर्त्यप्राप्यभेदसिद्धेश्च । जन्यं हि निर्वर्त्यं व्यङ्ग्यं तु प्राप्यम् अभूततद्भावादिषु च प्रागसतस्सत्त्वमनुस्मृतमेव । भवतु वा जनिशब्दो व्यक्तिपरः ।

न व्यक्तिरुपलब्धिस्ते दृष्टाऽदृष्टदशान्वयात् ।
अथोपलब्धियोग्यत्वं न तदव्यापकत्वतः ॥
सत्त्वलक्षणपूर्तिश्चेदभिव्यक्तिस्तदप्यसत् ।
साऽपि वः प्राक्तनी नो चेन्न सिद्धोद्धेतुरप्यसन् ॥

किं च व्यक्तिरपि नित्या कार्या वा । पूर्वत्र कारकाणामिव व्यञ्जकानामपि नैष्फल्यम् । उत्तरत्र अर्धजरतीयः सत्कार्यवादः व्यक्तेरपि व्यक्त्यर्थं कारकापेक्षेति चेत् तत्रानवस्थाप्रसङ्गमाह । व्यक्तिरिति । व्यक्तेः कार्यत्वपक्षे अपसिद्धान्तमसदकरणादित्यादिहेतुविरोधं चाभिप्रेत्याह । न चेति । ननु कार्यस्य कृतिः तावन्न कार्यस्वरूपमेव । कार्यं क्रियते घटः क्रियत इति सामान्यतो विशेषतश्च सह प्रयोगात् अतिरिक्ता च सा तथा सति कार्यव्यक्तौ कः प्रद्वेषः कृतिरपि

कृता वा व्यक्ता वा पूर्ववानवस्था उत्तरत्र कारकनैष्फल्यापसिद्धान्तौ व्यक्तिरपि कृता व्यक्ता वेत्युभयथाऽप्यनवस्था तत्राह। नैवमिति। कृतिर्हि कारकाणां व्यापारः स चागन्तुस्वकारणव्यापारेण जन्यते सोऽपि तथेति सिद्धाऽनवस्थैषा। सा च सर्वसम्मता न दोषः त्वयाऽप्यभिव्यञ्जकव्यापारो व्यञ्जकान्तरव्यापारव्यङ्ग्य इति वाच्यं। ननु व्यक्तिर्न व्यज्यते न क्रियते च अव्यक्तैव नित्यं स्वयं व्यक्तैव वा कार्याणां व्यक्तिः स्यात्। न स्यात्। तदर्थकारकव्यापारवैयर्थ्यप्रसङ्गात् कार्याणां नित्यव्यक्तिप्रसङ्गाच्च। ननूत्पत्तिर्नाम सत्तासमवायो वा। स्वकारकसमवायो वा स च नित्यः न तदर्थश्च कारकव्यापारः कृतिरिति समा नश्चर्चा। न। समवायस्यास्माभिरनभ्युपगमात् तदेतदस्मच्छब्दान्वादेशेन सूचितं। का तर्ह्युत्पत्तिः कृतिरेव। अन्यधर्मः कथमन्यस्योत्पत्तिरिति चेत्तादर्थ्येन तद्धर्मतोपचारात् यदा हि तन्त्वादयो व्याप्रियन्ते तदा पट उत्पद्यत इति व्यवहरन्ति आद्यक्षणावच्छिन्नपटत्वावस्थैव वा पटोत्पत्तिरुच्यते सैव तदवस्थस्योत्पत्तिरिति भाष्यमपि तदभिप्रायमेव स्यात्। अत एव हि सह प्रयोगोपपत्तिः न चेदृश्या उत्पत्तेरुत्पत्त्यन्तरमस्ति। तथाऽपि प्रागसिद्धस्वरूपलाभादुत्पत्तिशब्द उपचाराद्भवतु वा मा वा तदा कार्यात्पत्त्यर्थः कारकव्यापार इति सिद्ध्यति स एव यदोत्पत्तिर्विवक्षिता तदा कार्यार्थः कारकव्यापारइत्येव वक्तव्यम् अन्यथा तूपचारः।

क्रियैव कारकाणां स्यात् प्रतिसम्बन्धिनीत्यसत्।
प्राक्सत्त्वासत्त्वसंक्षोभस्तस्यामपि हि दुस्तरः॥
क्रियावद्भिः पटादेश्च कारकैस्तादृशोऽन्वयः।
प्रधाने भागनिष्पत्त्या भागैरैक्याच्च भागिनः॥

प्राक्सत्त्वं सर्वभावानां मिथश्चैक्यमिति त्वसत् ।
भिन्नांशपूर्वसत्त्वे हि नाभिन्नाद्भिदसम्भवः ॥
भिन्नाभिन्नाद्यदि व्यक्तिभेदानां प्राक्तनी भवेत् ।
एकस्य प्रागसन् भेदो यदि स्यादस्मदिष्टवत् ॥
प्राक्सतोऽस्याप्यवस्था चेत्तथाऽप्यस्मदभीष्टवत् ॥ २४ ॥

इति सांख्यसत्कार्यवादभङ्गः ॥

अथ वैनाशिकनिरासाय सत्कार्यवादे साधिते तुल्यन्यायतया सर्वनित्यत्ववादेन समुत्थितः सांख्यो निरस्तः । अथ पक्षत्रयप्रतिपक्षं वैनाशिकमतं निरस्यति । वस्तुस्थैर्यमिति ।

**मू० वस्तुस्थैर्यं विरुद्धानुपहितविषया साधयेत् प्रत्यभिज्ञा नैकस्मिन् शक्त्यशक्ती कृतितदितरयोः सा ह्यभेदेन सिद्धेः । एकस्मिन् कालभेदाद्भवति च सहकार्यन्वयानन्वयादिर्नोचेन्नो देशभेदादपि सुपरिहरस्तेन नैकं क्वचित्स्यात् ॥ २५ ॥**

वस्तुशब्देन सत्त्वानुमानसूचनं यथाऽऽहुः यत्सत्तत्क्षणिकं यथा जलधरः सन्तश्च भावा इति । यदक्षणिकं तदवस्तु यथा खसूनम् । अक्षणिकत्वे चामीषां सद्रूदसत्त्वप्रसङ्ग इति भावः । विरुद्धानुपहितविषयेति । विरुद्धधर्मासंसृष्टविषयेत्यर्थः दीपस्रोतःप्रभृतिषु अनन्यथासिद्धभेदकबलात् बाधः विप्रतिपन्नैकत्वधीः प्रमा विरुद्धधर्मासंसृष्टविषयत्वात् सम्मतैकत्वधीवत् न हि स्वलक्षणानां प्रत्येकमेकत्वं नास्ति तथा सत्येकानेकसर्वविकल्पलोपेन माध्यमिकविजयप्रसङ्गात् । रूपादिधीवदित्येव वोदाहर्तव्यं तदियं प्रमितिः सती

प्रत्यभिज्ञा पूर्वापरकालवर्तिविषयं साधयति दीपनदीप्रवाहकृत्तपुनःप्ररूढकेशादिषु तु सम्प्रतिपन्नसामग्रीभेदादिबाधकबलात् तस्या न साधकत्वम्। ननु स इति धीः स्मृतिः अयमित्यनुभवः निरन्तरोत्पत्तेः ज्वालाक्षणेष्विव तयोर्भेदाग्रह इति तन्न। समानाधिकरणबोधात् यद्यपि सोऽयमिति व्यवहारे तादृशधीभेदेन वैयधिकरण्यशङ्का। तथाऽपि तमिमं पश्यामीत्यादिषु उभयाकारविशिष्टस्यैकस्य दृशिकर्मत्वदृष्टेर्बुद्ध्यैक्यं दुरपह्नवम्। अत एव ग्रहणस्मरणात्मकमिदं ज्ञानमिति वदन्तः प्रत्युक्ताः। ननु कथमिन्द्रियासम्बद्धः तदंश इदानीमिन्द्रियेण गृह्येत मनोऽसम्बद्धोऽनुभूतविषयः कथं मनसा तदनुभवजन्यसंस्कारसहकारादिति चेत् समानमत्राऽपि। दृष्टत्वात् तथैव तत्रेति चेत् अत्राऽपि तथैव। वेद्याकारैकदेशादुत्पन्नस्य प्रत्यक्षत्वे शुक्तिरजतधीरपि मानं स्यादिति चेन्न। आरोपानारोपाभ्यां विशेषात्। किं च संस्कारोपनीतरजताद्यारोपे च इदं रजतमिति चाक्षुषबुद्धिरेका। न हि तत्र रजताद्बुद्ध्युत्पत्तिः तस्यासन्निहितत्वात्। अर्थजत्वेन त्वदुक्ताविसंवादित्वप्रसङ्गाच्च। इन्द्रियजन्यतया प्रत्यक्षत्ववत् संस्कारजन्यतया स्मृतित्वमपि दुर्निवारमिति चेन्न। तमेतमनुभवामि पश्यामीत्यादिप्रत्यक्षविरोधादेव। अत एव संस्कारप्राधान्यमुत्प्रेक्ष्य केवलस्मृतित्वशङ्काऽपि निरस्ता। भवतु वा स्मृतित्वमपि। तथाऽपि स्मृत्यनुभवात्मकमेकं ज्ञानं स्वविषयस्य स्थिरत्वं साधयत्येव। कथमप्रमा स्मृतिरर्थं व्यवस्थापयेदिति चेत् किमत्राप्रमात्वं ज्ञानव्यतिरिक्तत्वं वा। अनुभवव्यतिरिक्तत्वं वा अयथार्थत्वं वा। नाद्यः असिद्धेः। न द्वितीयः वितथप्रकाशवादिभिः स्मृतेरप्यात्मस्वात्मविषयेऽनुभवत्वस्वीकारात्, त्वया च स्वसंवेदनांशेऽपि। विषयांशेऽनुभवव्यतिरिक्तत्वं स्मृतेरिति चेत्। तथाभूताऽपि स्वकार-

णानुभवात् स्वविषयमबाधितं व्यवस्थापयेत् अस्वातन्त्र्यादिविचार-स्त्वत्र प्रकृतानुपयुक्तः। न तृतीयः यथार्थस्मृतौ विरोधाभावात् सर्वाऽपि स्मृतिरयथार्था अतीतस्य वर्तमानतयाऽवभासादिति चेन्न। अतीततयाऽपि प्रायशः स्मृतिभिरर्थोल्लेखात् प्रच्युततदाकारस्य तद्रूतया भासनादयाथार्थ्यमिति चेन्न। स्मृतिप्रमोषे तदभावात् अतीतादिविषयानुमानानामपि तत्प्रसङ्गाच्च। तर्हि पाकरक्तेऽपि श्यामत्वधीर्यथार्था स्यादिति च मन्दम्। प्राचीनश्यामताबुद्धौ विरोधाभावात्। एतेन स्मृतिर्न बाह्यविषया नष्टेऽप्यर्थे स्मृतिदर्शनादिति वदन्तोऽपि निरस्ताः। एवम्प्रत्यभिज्ञा स्थिरविषयेति सिद्धे सोऽहमिति धीश्चात्मनः स्थिरत्वमुल्लेढि तदहं स्मरामीति स्मृतिमात्रेण चैतत्सिद्धम्। ननु विरुद्धानुपहितविषयेत्यसिद्धं कुर्वदकुर्वत्त्वणयोः शक्त्यशक्तिभ्यां वैजात्यादित्यत्राह। नैकस्मिन्निति। कुर्वतोऽकुर्वतश्चैकत्वेऽङ्गीक्रियमाणेऽपि शक्त्यशक्तिरूपविरुद्धधर्माध्यासो न स्यादित्यर्थः शक्तश्चेत्कुर्यादेव न करोति चेदं कुसूलनिहितं बीजमिति प्रसङ्गतद्विपर्ययाभ्यां शक्त्यशक्तिसिद्धिरिति चेन्न। शक्तस्यापि करणाकरणयोः सहकारिसन्निध्यसन्निधिप्रयुक्तत्वात् तदाह कृतितदितरयोरिति। साह्यं सहभावः कदाचित्पुष्कलैः सहकारिभिः साह्यं कदाचिद्विकलैरिति प्रयोजकभेदेनेत्यर्थः। अकुर्वत्स्वभावस्य कथं सहकारिभिरपि कुर्वत्ता कुर्वत्स्वभावस्य वा कथं तद्विरहात् तदभाव इति चेन्न। सहकारिसन्निधौ कुर्वत्तया तदभावे चाकुर्वत्तया स्वभावव्यवस्थासिद्धेः। परसापेक्षः कथं स्वभाव इति चेन्न। स्वहेतुसापेक्षत्ववदुपपत्तेः। अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारो विज्ञानोत्पत्तौ कारणमिति युष्मदुक्तिविरोधात् अर्थजत्वं च प्रामाण्यं ब्रूषे उपच्छन्दनार्थमुतानवाक्यमिति चेन्न। अतिप्रसक्त्या सिद्धान्त-

स्थितेर्दुर्निरूपत्वप्रसङ्गात् । शक्तं चेदन्त्यतन्तुसंयोगादिवदवश्यसिद्ध-सहकारिचक्रं स्वकार्यं कुर्यादिति चेन्न स्वकारणादापततां सहकारिणामेतदधीनत्वाभावात् पराधीनत्वेऽप्यवर्जनीयं तत्सन्निधानमिति चेन्न । अन्यथाऽपि दृष्टेः । अस्तु सहकारिसम्बन्धासम्बन्धादिकमेव विरुद्धत्वाद्भेदकमित्यत्राह । एकस्मिन्निति । आदिशब्देन प्रस्तुतकरणाकरणादिसंग्रहः कालभेदाद्विरुद्धस्वीकारे किं कुत्र नासीत् न स्याद्वेति सर्वत्राव्यवस्थितिरिति चेन्न । दर्शनादर्शननियमाभ्यामेव सम्भवासम्भवस्थितेः । एवमनभ्युपगममनुवदन्प्रतिबन्दिमाह । नो चेदिति। अत्रास्ति करोति च अन्यत्र नास्ति न करोति चेत्यादिनिर्देशभेदेन सत्त्वासत्त्वादिसमुच्चयः सुदुष्परिहरः स्यात् । अपिर्विषयभेदाद्यनुक्तसमुच्चये विषयादिभेदादपि हि विरोधः परिह्रियते क्वचिच्छक्तं क्वचिदशक्तं केनचिज्जन्यते व्यज्यते बाध्यते वा नान्येन कस्य चित् प्रतियोगी व्याप्यः व्यापकः पूर्वः परो वा नान्यस्येत्यादि । एवं विषयभेदादिभिरपि विरोधस्ते दुष्परिहरः । ततः किमित्यत्राह । तेनेति । विरुद्धानां देशकालाद्यसमाहितविरोधत्वेन स्वलक्षणस्यापि विरुद्धशतलक्षणतया नानात्वे तत्त्वोदानां च तथा तथा चोदे किंचिदप्येकं न सिद्ध्येत् तदभावे च कुतोऽनेकमिति माध्यमिकमतापातः सैव तर्हि सुगतमतकाष्ठेति तत्र तिष्ठाम इति चेत् तन्निष्ठेन त्वयाऽस्मन्मतबाधकानुपन्यासे विवादाभावः । तदुपन्यासे तु तत्र तत्र तद्बाधाबाधविकल्पदौःस्थ्यं दुष्परिहरमिति भावः ॥ २५ ॥ पुनरपि प्रकारान्तरेण प्रत्यभिज्ञाबाधकं विरुद्धधर्माध्यासं प्रतिबन्दिविशेषमप्याशङ्कते । तत्त्वेदंत्वे हीति ।

**मू० तत्त्वेदन्त्वे हि कालान्तरघटनमये नैककाले**
**घटेतां कालद्वैतेऽनवस्थाद्यत इह न मितिः**

**प्रत्यभिज्ञेति चेन्न । स्वस्य स्वाभावकाले विहतिनियमनात्त्वेन चात्रैककाल्पात्काले कालानपेक्षे कथमपि सुवचौ नानवस्थाविरोधौ ॥ २६ ॥**

अतीतकालसम्बन्धस्तत्त्वं वर्तमानकालसम्बन्ध इदन्त्वं न ह्यतीतं वर्तेत इति सम्भवति सर्वेषां नित्यत्वप्रसङ्गात् वर्तमानं च यद्यतीतं कथमस्मदादिप्रत्यक्षेण गृह्येत किं च कालद्वयान्वयरूपयोः तत्त्वेदन्त्वयोरेकवस्तुसम्बन्ध एकस्मिन्काले भिन्ने वा पूर्वेच विरोधः तस्मिन्नेतस्मिंस्तदुभयपूर्वापरे वा क्वचिदपि काले कालान्तरसम्भेदायोगात् अन्यथा त्रैकाल्ययौगपद्यप्रसङ्गात् एतेन विरुद्धानुपहितविषयेति विशेषणं चासिद्धम् । उत्तरच कालद्वयनिर्वाहककालभेदाश्रयणे तयोरपि तथेत्यनवस्थापातः । न चैवं दृष्टमिष्टं वा न च देशद्वयप्रतिबन्दिः अस्माभिस्तदनभ्युपगमात् तस्मात्कालद्वयविशिष्टे वस्तुनि प्रवृत्ता कृत्स्ना प्रत्यभिज्ञा न प्रमितिः विरुद्धविषयत्वात् शुक्तिरूप्यधीवत् प्रत्यभिज्ञात्वादेव वा दीपादिप्रत्यभिज्ञावदिति चेत् अत्र न कालद्वयमात्रं वस्तुनि विरुद्धं विरुद्धकालान्वयस्तु नास्तीत्यभिप्रायेण प्रतिवक्ति नेति ।

अततामनिदन्तां च तत्त्वेदन्त्वे निरस्यतः ।
अन्योन्यप्रतिषेधस्तु न ततः सेद्धुमर्हति ॥
एकस्य भिन्नकालाभ्यां वैशिष्ट्यं विहतं यदि ।
तथा स्यात् भिन्नदेशाभ्यां पुञ्जबुद्धिस्ततो न ते ॥

तर्हि कालद्वयविरोधः कुतस्त्यत्राह । स्वस्येति । नियमनात् यथाप्रमाणं व्यवस्थापनादित्यर्थः । अत एवातीतस्य वर्तमानत्वं वर्त-

मानस्य वा ऽतीतत्वमिह न प्रवर्तनीयं। ननु तत्त्वेदन्त्वे तावत् विरुद्धे अन्यथा यौगपद्ये विरोधाभावप्रसङ्गात् तत एव कालद्वयमप्येकस्य विरुद्धमिति तत्राह। स्वेनेति। पूर्वापरकालयोगोहि विरुद्धः स्वेनोपाधिना ऽवच्छिन्नस्यैकस्य कालस्यावान्तरोपाधिभिर्नानात्वेऽपि तत्तदुपाधीनामेव तत्तदवान्तरकालद्वयान्वयविरोधः अन्यापेक्षया पूर्वापरकालयोरन्यस्य विरुद्धत्वे क्षणकालस्याप्यन्यापेक्षया पौर्वापर्यात्तत्कालवर्तित्वमपि वस्तुनो विरुद्ध्येत क्षणकालसम्बन्धो वस्तुनः काल्पनिक इति चेत् ततोऽपि माध्यमिकोत्थानम्। ननु स्वरूपसत्यता क्षणसम्बन्धित्वं च साध्यते न केवलं क्षणकालमात्रसम्बन्धित्वम्। अतस्तुर्यबौद्धात् त्रयाणां विशेष इति तर्हि सिद्धसाधनम् अतः क्षणिकपक्षे स्थिरपक्षे वा स्वाभावकाले वृत्तिर्विरोधाद्वारणीया न तु स्वकालवृत्तिरिति भावः। अत्र च विरोधानवस्थयोः शङ्कापि नास्तीत्याह। काल इति। न ह्ययमपि काल एतस्मिन्काले किमुत कालान्तरं तत्कालोऽपि न तस्मिन्काले किमुतायम् अत एव तत्कालतत्कालौ वा कालान्तरं वाऽनपेक्ष्य एकस्मिन्वस्तुनि कालद्वयं सम्बध्यत इति स्थिते कथं चिदप्यनवस्थाविरोधयोर्नावकाशः तथाऽपि कालद्वयंपरस्पराभावनान्तरीयकं तदात्मकं वा कथमेकत्र स्यादिति चेन्न। कालद्वयस्यान्योन्यस्मिन्नभावेऽपि तदुभयसम्बन्धिनि वस्तुन्यभावाभावात् यस्तु तस्मिन्वस्तुन्यसम्बद्धः कालः तस्य तत्र सद्भावं न ब्रूमः न हि वयं नित्यानित्यविभागं निराकुर्मः॥ २६॥ अथ प्रत्यक्षेणैव प्रत्यभिज्ञाप्रत्यक्षस्य विरोधं भावानां क्षणिकत्वसिद्धिं च शङ्कते। प्रत्यक्षमिति।

**मू० प्रत्यक्षं वर्तमानं प्रथयति यदिहावर्तमानाद्विभक्तं तस्मात्तेनैव सिद्धं क्षणिकमिति न**

**सत्तावदित्यप्रतीतेः । तत्कालासत्त्वमेव ह्यपनयति सतो वर्तमानत्वबोधः कालेऽन्यत्रापि सत्त्वं प्रमितमिति कथं तद्विरोधप्रसङ्गः ॥ २१ ॥**

अस्मदादिप्रत्यक्षं तावद्वर्तमानमात्रविषयमिति सर्वसंमतम् । अन्यथा दृश्यमानानां पदार्थानां तत्त्वगापेक्षया पूर्वापरविशेषाणामपि प्रत्यक्षत्वप्रसङ्गात् तस्मादगृहीतपूर्वापरविशेषं वर्तमानग्राहि प्रत्यक्षमवर्तमानाद्व्यावृत्तमेव स्वविषयं गृह्णाति एतदेव च क्षणिकत्वं वस्तूनां यदपूर्वोत्तरत्वम् । अतस्संस्कारनिरपेक्षप्रत्यक्षबाधिता प्रत्यभिज्ञा देशान्तरस्थग्राहिशुक्तिरूप्यधीवत् संस्कारोपनीतकालान्तरस्थभेदसंवृत्या तस्मिन्निदन्त्वमस्मिन्वा तत्त्वमारोप्य कल्पितैक्यविषयेति अत्र प्रत्यक्षवृत्तान्तानभिज्ञोक्तिरियमित्यभिप्रायेण प्रतिवक्ति न सदिति । प्रत्यक्षस्य कालान्तरसम्बन्धप्रतिक्षेपकत्वाभावमाह । तावदिति । वर्तमानत्वविधिरेवावर्तमानत्वनिषेधात्मा तावन्मात्रकालवर्तित्वं नियच्छेदित्यत्राह । तत्कालेति । तत्कालसत्त्वविधिर्हि तदानीमसत्तां निरुन्ध्यात् न तु कालान्तरसत्तामित्यर्थः तथाऽपि इदङ्कारवता प्रत्यक्षेण कालान्तरसत्त्वस्यानालम्बनात् तत्प्रतिक्षेप इति चेत्तत्राह । कालेऽन्यत्रापीति । अयम्भावः यथेदमिति तत्कालसत्ता गृह्यते तथा तदिदमिति कालद्वयसत्त्वमपि प्रत्यक्षेणैव गृहीतम् । एवं सति न्यूनाधिकविषयतामात्रमिह प्रत्यक्षयोर्न विरुद्धविषयत्वम् । अन्यथातिप्रसङ्गादिति अल्पविषयस्य प्राबल्यमालम्भविधौ दृष्टमिति चेन्न विरोधे सत्येव बलाबलविमर्शात् इह तु विरोध एव न समस्ति अपि च प्रत्यक्षं किं वर्तमानत्वेन स्वविषयं गृह्णाति उत वस्तुवृत्त्या वर्तमानं नाद्यः त्वन्मते प्रत्यक्षतयाऽभिमतस्य निर्विकल्पकस्य

वि*शिष्टबोधनाशक्तेः सविकल्पकस्य तु प्रत्यक्षत्वानभ्युपगमात् । न द्वितीयः इन्द्रियसंयुक्तक्षणस्य तज्जन्यज्ञानकालेऽतीतत्वात् तदुत्तरक्षणस्य स्वपूर्वक्षणेन्द्रियसम्प्रयोगायोगेन तज्जन्यधीविषयत्वासंभवात् तदातनाक्षिसम्प्रयोगस्य तु तात्कालिकबुद्धिहेतुत्वासिद्धेः अतस्ते कथं प्रत्यक्षं वर्तमानग्राहि अस्मन्मते त्विन्द्रियसम्प्रयोगस्य तद्विशिष्टवस्तुनस्तदुपहितकालांशस्य च स्थायित्वेन धीक्षणानुवृत्तौ तद्विषयतया प्रत्यक्षोदयात् सम्प्रयोगानन्तरक्षणे धीरपि निर्वर्त्यते अतो नासम्प्रयुक्तं नास्थिरं नावर्तमानं वा प्रत्यक्षमिति ।

पूर्वापरबहुव्यक्तिव्याप्तिग्रहणसम्भवा ।

न काचिदपि युक्तिः स्यात् सर्वक्षणिकवादिनः ॥ २७ ॥

ननु जातस्य हि ध्रुवोमृत्युरिति प्रसिद्धम् अतस्सतां सत्तानुबन्धी विनाशः स्वरूपवन्न हेतुसापेक्षः झटित्येवापतेत् तस्मात् सर्वं क्षणिकमित्यनूद्य परिहरति । उत्पन्नानामिति ।

**मू० उत्पन्नानां विनाशे ध्रुवभवितृतया हेत्वपेक्षाविहीने जन्मन्येवापरोधात्क्षणिकमिह जगत्सर्वमित्यप्यसारम् । लिङ्गं ह्येष्यत्त्वमात्रं जननविधुरता तत्क्षणानुक्षणत्वे तत्त्वं तज्जन्यता वा तदिदमनियमासिद्धिबाधादिदूष्यम् ॥ २८ ॥**

असारं न्याय्यादन्यदित्यर्थः । तत्र हेतुं विकल्पयति । लिङ्गमिति । एवं विकल्पिते यथासम्भवं दोषानाह । तदिदमिति । तथा हि तत्रादौ तावद्यत् यस्य ध्रुवं भविष्यति न तत्तस्य हेतुसापेक्षं नाशश्च

* विकल्पेति पु० पा० ।

जातानां ध्रुवभावीत्युक्तं स्यात् तदा कस्यचिदङ्कुरस्य सामग्रीप्रवाहवशात् ध्रुवं भविष्यद्भिः पत्रपुष्पादिभिर्घटादीनां कपालादिभिरप्यनैकान्त्यं सर्वच चैकसन्तानोत्तरक्षणैः । न हि ते तन्निरपेक्षाः तथासति प्रागेवोपनिपाते कथं तत्र सन्तानत्वमपि पूर्वक्षणानामर्थक्रियाविरहात् असत्त्वं च स्यात् चार्वाकवादः । द्वितीये तु यद्यस्यानुत्पन्नमनुबन्धि न तद्धेत्वपेक्षं यथा गोरश्वापोह इति स्यात् तथाच हेत्वसिद्धिः प्रतियोगिवत्स्वोचितहेतुजन्यत्वात् मुद्गरादयोऽपि सभागसन्तानमात्रारम्भकाः न तु नाशजनका इति चेन्न दीपादिसन्तानान्ति*मध्वंसकेषु तदसिद्धेः । न हि तत्र विभक्तसूक्ष्मावस्थान्तरापत्तिमिच्छसि अन्वयव्यतिरेकाविशेषे व्यवस्थापकाभावात् निस्स्वभावतया तुच्छस्य हेत्वपेक्षाविरहो व्यवस्थापक इति चेन्न । प्रतियोगिवदेव नियतकालतया प्रमितस्यात्यन्ततुच्छत्वायोगात् खपुष्पवच्चानादित्वप्रसङ्गेन सर्वभावासिद्धिप्रसङ्गात् । ध्वंसस्य च तुच्छत्वे तत्कालेऽपि स्वकाल इव भावानां सत्त्वप्रसङ्गाच्च । तथा च क्षणभङ्गं प्रतिज्ञाय स्थिरवादं साधयसि कीदृशं च ध्वंसस्य निस्स्वभावत्वं यदि यत्किंचित्स्वभावविरहः तत्स्वलक्षणेऽपि समानं सर्वस्वभावविरहस्तु ध्वंसेप्यऽसिद्धः अन्यथा कथमस्य पक्षीकारः ध्वंसरूपतया सिद्धस्येति चेत् । तर्हि तत्स्वभावस्य कथं सर्वस्वभावविरहः अपि चास्य प्रागसत्त्वे हेत्वपेक्षा दुर्वारा प्राक्सत्त्वे तु भावापह्नवः तत एवाभावस्याप्यभाव इति सर्वाभावः स्यात् तृतीये च स एव क्षणो यस्य स तत्क्षणः तस्य भावस्तत्क्षणत्वं तदा ध्रुवभावि सहभावीत्यर्थः । अयमपि हेतुरसिद्ध एव न च प्रध्वंसप्रतियोगिनोर्योगपद्यसम्भवः सम्भवे वा भावः पश्चादपि किं न स्यात् । अनुक्षण-

* संतानानामन्तिमध्वंसकेष्विति पा० ।

शब्दोपचरितस्तु हेतुरनन्तरक्षणवर्तिनि तत्रापि भावोत्पत्त्यपेक्षया-नन्तर्यविवक्षायामसिद्धिः भावस्वरूपापेक्षया त्वानन्तर्यनियमे भाव-एव हेतुः स्यादिति कथं हेतुनैरपेक्ष्यं तदतिरिक्तनैरपेक्ष्यं विवक्षि-तमिति चेन्न । तद्धेतोः सहकारिणामप्यवर्जनीयत्वादिति पञ्चमे त्वसिद्धिर्व्याघातश्च । ननु कथं ध्रुवभाविशब्देन तत्त्वविवक्षा शङ्क्यते इत्थं यद्यतो भिद्यते न ततस्य ध्वंसः यथा रूपस्य रसः ध्वंसस्तु कस्यचिदेव भवतीति तदात्मकः । अतः स्वोत्पत्तावेव स्वात्मनि ध्वंसे सन्निहिते कथं क्षणान्तरं प्राप्नुयादिति तत्रेदं ब्रूमः ततो भिन्नस्यापि तत्प्रध्वंसत्वं यथादर्शनं स्यात् अन्यथा भिन्नस्य भिन्न-कालस्य च कारणत्वादिक्रमपि हीयेत । अविशेषात् । स्वात्मन एव स्वनाशात्मकत्वे पश्चाद्विवस्वकालेऽपि स्वाभावसिद्धेः स एव सर्वा-पह्नवस्स्यादिति तज्जन्यत्व हेतौ प्रतिज्ञाविरोधः तज्जन्यत्वं हि तद्धेतुकत्वं तेन कथं हेतुनैरपेक्ष्यसाधनं हेत्वन्तरनैरपेक्ष्यमपि च दुर्वचमित्युक्तम् । अतः क्रमभाविसहकारिविशेषात् कार्यान्तरमिव स्वनाशमपि स्वयमुत्पादयतु नाम न ततः क्षणिकत्वं सिद्ध्येदिति बाधश्चामीषां प्रागुक्तप्रत्यभिज्ञया स्पष्टः । आदिशब्दः प्रदर्शितयोरप-सिद्धान्तप्रतिज्ञाविरोधयोः संग्रहार्थः ॥ २८ ॥ प्रतिकूलतर्कप्रतिहृ-तिमप्याह । कालानन्तर्येति ॥

**मू० कालानन्तर्यसाम्ये क्षणिकवपुषि ते देशका-**
**लाद्युपाधौ सर्वे पूर्वे भवेयुस्तदुपरि भवतां**
**कारणानि क्षणानाम् । सन्तानैक्यव्यवस्था**
**निजफलनियतिर्वासनानां च न स्यात् का-**
**र्पासैरक्ततादिक्रमविपरिणमत्संस्कृतद्रव्यत-**
**स्स्यात् ॥ २९ ॥**

आदिशब्देन दिक्संग्रहः । अयमर्थः सर्वं क्षणिकमिति वदतस्ते कस्यचित्किञ्चित्प्रति कार्यत्वं किमनन्तरकालभावित्वमात्रात् उत तद्विशेषात् । आद्ये त्रैलोक्योदरवर्तिनः पूर्वक्षणास्सर्वे तदनन्तरभाविनां सर्वेषां क्षणानां कारणानि स्युः । द्वितीयेऽप्यसौ विशेषः किं देशाद्युपाधिनिरपेक्षः तत्सापेक्षो वा नाद्यः अतीन्द्रियस्य तु तस्यादर्शनात् दृश्यस्य तु वह्निधूमत्वादेरतिप्रसङ्गित्वात् । न द्वितीयः यस्मिन्देशादौ यद्वर्तते तस्मिन्जायमानस्य तत्कारणमिति नियमो न सम्भवति कार्यक्षणस्य कारणदेशादिवर्तित्वे कारणदेशादेः क्षणद्वयापत्तेः तथा चानन्तरक्षणयोगेऽपि को बाधः । अतः स्थिरदेशादिकमनभ्युपगच्छतस्तत्प्रयुक्तनियमायोगात् अतिप्रसङ्गस्तदवस्थ एव । ननु यद्देशादिक्षणवर्ती कारणक्षणः तत्कार्यदेशादिक्षणे स्वकार्यमारभत इति नियम इति चेन्न । देशादिक्षणद्वयेऽपि कार्यकारणव्यवस्थाया दुःसा*धत्वात् तदेतदभिप्रेत्याह । सन्तानैक्यव्यवस्था न स्यादिति । यदप्याहुः ।

यस्मिन्नेव हि सन्तान आहिता कर्मवासना ।
फलं तत्रैव बध्नाति कार्पासे रक्तता यथा ॥ इति ।

कर्मवासनेत्यनुभववासनाया उपलक्षणं तदपि दूषयति निजफलनियतिर्वासनानां च न स्यादिति । सन्तानैक्ये सिद्धे हि यस्मिन् तस्मिन्निति निर्देशः स्यादिति भावः । दृष्टान्तस्तर्हि कथमित्यत्राह । कार्पास इति । रञ्जकद्रव्यविशेषसंस्कृतबीजावयवानुवृत्त्या कार्यस्रोतोविशेषनियमे यथादर्शनं तत्र तादृशफलसिद्धिर्युक्ता त्वन्मते तु तदेतत् संततिव्यवस्थापकाभावात् तत्रैव फलं बध्ना-

* दुःस्थत्वात् ।

तीति दुश्शको नियम इति भावः ॥ २९ ॥ क्षणभङ्गसाधनान्तरं दूषयितुमनुवक्ति । मेयत्वाद्यैरिति ॥

**मू० मेयत्वाद्यैर्विगीतं क्षणिकमिह जगत्स्यात्क्षणोपाधिवच्चेद् बाधो दृष्टान्तहानिः स्थिर इति विदितो यत्क्षणस्याप्युपाधिः ॥ सामग्रीकार्यशून्या क्षण इयमपि तद्धेतुसंघो न चासौ हेतुर्नान्यः स्थिरास्ते क्रमवदुपधिवत्स्यात्क्षणत्वं स्थिरेऽपि ॥ ३० ॥**

इह पक्षदृष्टान्तविकल्पार्हे वस्तुजाते विगीतं क्षणिकं मेयत्वात् सत्त्वात् भासमानत्वाद्वा । अत्र स्यादित्यनेनाक्षणिकतायामसत्त्वप्रसङ्गः सूच्यते । अर्थक्रियाकारित्वं हि सत्त्वं तच्च कुर्वत्क्षणस्यैवास्ति अकुर्वत्क्षणस्य तु तदभावादसत्त्वं प्राप्तमिति घटजलधरादौ दृष्टान्तिते साध्यवैकल्यं क्रमेण कथंचित्परिहर्तव्यम् इह तु न तथेत्यभिप्रायेण क्षणोपाधिवचनम् इतिरौचित्यादाकृष्टव्यः । अत्र बाधोक्तिस्साध्यविकल्पेन बहुधा भाव्या तथा हि क्षणिकत्वं नाम क्षणसम्ब*न्धवत्त्वं वा क्षणकालसम्बन्धित्वं वा क्षणमात्रवर्तित्वं वा क्षणद्वयसम्बन्धशून्यत्वं वा क्षणकालत्वं वा तदुपाधित्वं वा नाद्यः सिद्धसाधनात् स्थिरमपि न स्सामग्र्या क्षणे सम्भवतीति । न द्वितीयः तत एव कालमेवानिच्छतस्ते कोऽसौ क्षणकालः कश्च तत्सम्बन्धः तदभ्युपगमे सिद्धान्तबाधः । अत एव न तृतीयोऽपि प्रत्यभिज्ञया च बाधः प्रागुक्तः । न चतुर्थः उक्तबाधादेव क्षणेतरस्य तथात्वे खपुष्पवदसत्त्वप्रसङ्गस्य दुर्वारत्वात् त्वन्मते च खपुष्पनिदर्शनेन प्रसञ्जनं युक्तम् एवमपि हि ब्रूथ ॥

* क्षणसंभवत्त्वमिति पाठान्तरं युज्यते ।

तस्माद्वैधर्म्यदृष्टान्ते नेष्टोऽवश्यमिहाश्रयः ।
तदभावे च तन्नेति वचनादेव तद्गतेरिति । अन्येऽपि केचिदाहुः ॥
यस्मिन्ननित्यता नास्ति कार्यताऽपि न विद्यते ।
तस्मिन्यथा खपुष्पादाविति शक्यं हि भाषितुम् ॥ इति ॥

न पञ्चमः तद्देशतद्वर्तिनोरिव कालतद्वर्तिनोरैक्यस्य प्रत्यक्षेण बाधात् । तत एव न षष्ठः यदा हि घटादयः स्वरूपेण क्षणोपाधयः स्युः कालतारतम्यधीः कुत्रापि न भवेत् तथा च स्थिरशङ्काया एवानुदयात् निर्विषयमनुमानं स्यात् सर्वस्य च त्रिलोकस्य स्वप्रयोजनेच्छया*ऽपि प्रवृत्तिः सा फलार्थिनः फलिनश्च भेदे बाध्यते ॥

न च त्वमपि कृत्येषु निरन्वयविनाशवत् ।
मत्सन्तानसमृद्ध्यर्थमिति मत्वा प्रवर्तसे ॥

तदिह स्वाभिप्रायादिबाधश्च आत्मदृष्टान्तेन च प्रत्यनुमानबाधः । तत्र साध्यवैकल्यं च घटादीन्निदर्शयद्भिः युष्माभिरिव क्रमात्प्रशमनीयम् ॥ अस्ति च सोऽहमिति प्रत्यभिज्ञयाऽस्माकं तत्सिद्धिः आलयविज्ञानसन्ततिविषयेयमिति चेत् इदमपि परिभाषामात्रं प्रमाणाभावात् । नान्यदृष्टं स्मरत्यन्य इति परिभाषाया निर्बाधत्वाच्च निरर्थकं चेदमालयविज्ञानसन्ततिकल्पनं तस्य प्रवृत्तिविज्ञानेन सह सर्वप्रकारसम्बन्धायोगादिति । अथ क्षणोपाधिवदित्युक्तं प्रतिवक्ति । दृष्टान्तहानिरिति । अक्षणिकत्वे कथं क्षणोपाधिरित्यत्र गूढाभिप्राय आह । सामग्रीति । कार्यशून्या कार्यप्रागभावसमन्वितेत्यर्थः । क्षणः क्षणोपाधिरिति यावत् तथाऽपि तस्य क्षणिकत्वं न प्रतिक्षिप्तमित्यत्राह । इयमपीति । ननु हेतूनां संघोऽपि हेत्वनति-

* प्रयोजनेच्छया हि पा० ।

रिक्तश्चेत् तेषां भवत्पक्षे स्थिरत्वात् न क्षणोपाधित्वम् । अतिरिक्तोऽप्यक्षणिकः क्षणोपाधिर्न स्यादित्यत्राह । न चेति । अयम्भावः संघशब्दो न सम्बन्धमात्रवाचकः संबन्धशब्दपर्यायत्वाप्रसिद्धेः न च तत्तत्सम्बन्धिस्वरूपवाचकः प्रत्येकमप्रयोगात् अतः केन चिदुपाधिना संगृहीतास्त एव संघशब्दार्थः । तत्र यदि त एव क्षणोपाधितया दृष्टान्तीक्रियन्ते तथा सति स्थिरास्त इति । ननु तत्संहतिहेतुरुपाधिदृष्टान्तः स्यात् मैवम् । न हि नः केवलनित्यात् केवलानित्याद्वा कस्यचिदपि कार्यस्योत्पत्तिः किन्तु तत्समुदायात् तत्र नित्यांशे तावत्क्षणिकशङ्काऽपि नास्ति अनित्येऽपि यतश्चिरोत्पन्नाद्धेतोस्संघभावः सोऽपि स्थिरतरः । यस्तु चरमस्सहकारी स च स्थिर एव सन् स्वकार्यप्रागभावोपहितरूपः कालमवच्छिन्दन् क्षणोपाधिरित्युच्यते तदुपधानं च तस्य प्रत्यक्षादिसिद्धम् । न चात्र क्षणिकं किंचित्सिध्यति अनवच्छिन्नस्य कालतत्त्वस्य कालपरिच्छेदलक्षणानित्यताभावात् ॥

क्रियादिश्च स्थिरोऽप्येवं क्षणोपाधिर्विशेषकैः ।
तत्प्रकर्षनिकर्षैस्तु तत्तत्कालप्रकल्पना ॥

इयं तावत्सर्वलोकसाक्षिकी क्षणकालावच्छेदकयोः प्रागूर्ध्वव्यापिनोरक्षणिकत्वात् तदवच्छिन्नस्य कालस्य तु क्षणत्वादेव न क्षणिकत्वमिति वस्तुस्थितिः । त्वत्पक्षे तु क्षणकालावच्छेदः क्षणोपाधिरसिद्धः कालस्यैवाभावात् न चासिद्धोऽपि साध्यः स्वमतविरोधात् । यथाहुः ।

योऽपि तावत्परासिद्धः स्वयं सिद्धोऽभिधीयते ।
भवेत्तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रियेति ॥

अनन्यावच्छेदार्थेन स्वरूपेणैव कश्चित् क्षणशब्दवाच्य इति चेत् तर्हि क्षणभङ्गसाधनात्पूर्वमसिद्धः कथं दृष्टान्तः स्यात् ।

उत्तरप्रागभावाग्रपूर्वध्वंसैककालतः ।
मध्यमक्षणतादृक्त्वं व्यवस्थाप्यं त्वयाऽप्यतः ॥

ननु क्षणक्षरणस्वभावा प्रकृतिरिति हि भवत्सिद्धान्तः अत्र प्रतिक्षणमुदयविलयिनो विकाराः क्षणिका एवेति तद्दृष्टान्तेनान्येषां युष्माभिः किं नानुमीयत इति चेत् अशक्यत्वादयं सुहृदुपदेशस्त्यज्यते सर्वक्षणिकत्वं साधयितुमुपक्रम्य स्थिरद्रव्यवृत्तिक्षणिकविकारवदिति कथं दृष्टान्तयेम तेषु च न त्वदभिमतं क्षणिकत्वं प्रदीपादिवदाशुतरविनाशित्वमात्रेण क्षणिकतोक्तेः तदेतदभिप्रेत्याह । क्रमवदिति । क्षणत्वं क्षणोपाधित्वमित्यर्थः ।

द्वयोरयुगपद्दृष्टिर्युगपच्च यथायथम् ।
अशक्यापह्नवा तस्मादस्मदुक्तैव पद्धतिः ॥

इह च प्रतिसंख्याप्रतिसंख्यानिरोधयोः निरन्वयविनाशत्वे परोक्तं निदर्शनं दूषयति । दीपादीनामिति ॥

**मू० दीपादीनां कदाचित्सदृशविसदृशाशेषसन्तत्यपेते ध्वंसे दृष्टेऽप्यशक्या तदितरविषयेऽनन्वयध्वंसक्लृप्तिः । बाधादेर्दर्शितत्वादपि च दृढमिते सान्वयेऽस्मिन्घटादौ दुर्दर्शावस्थया स्युः पयसि लवणवल्लीनदीपादिभागाः ॥ ३१ ॥**

आदिशब्देन क्षणरुचिबुद्बुदादिसंग्रहः ।

स निरन्वयनाशस्स्याद्धर्मो धर्म्यपि वा पुनः ।
पूर्वसंघातभागो वा यद्भावेनानुवर्तते ॥

उत्पत्तिश्च तथाभूता निरन्वयसमुद्भवा ।
तावुभौ सर्वभावानां नियताविति सौगताः ॥

यो विनाशस्स निरन्वयः यथाऽन्त्यदीपस्य, अस्ति च विनाशो जातानाम् अतस्सोऽपि निरन्वय इति निरन्वयध्वंसक्लृप्तिर्न शक्या तदुपपादयति बाधादेरिति । प्रत्यभिज्ञाबाधस्य प्रवृत्त्याद्यनुपपत्तीनां च दर्शितत्वात् विपरिवर्तश्च युक्त इत्याह । अपि चेति । अन्त्यदीपविनाशस्सान्वयः विनाशत्वात् पटादिविनाशवत् । साध्यविकलो दृष्टान्त इति चेन्न । संघातांशानां वा गन्धादिधर्माणां वा श्यामरक्तादिधर्मिणां वा यथासंभवमनुवृत्तेर्दृढोपलब्धत्वात् प्रत्यक्षबाधपरिहाराय दुर्दर्शावस्थत्वोक्तिः । स्युरित्यनेन दृश्यावस्थनिवृत्तावपि स्वरूपसत्त्वं सूच्यते । ननु पयसि लवणवदित्ययुक्तं तत्रापि निरन्वयविनाशात् तन्न रसेन सूक्ष्मावयवानुमानात् । दीपावयवेषु लिङ्गमपि नास्तीति चेन्न । दीपोर्ध्वदेशिनां किञ्चिदौष्ण्यायोपलब्ध्या दीपावयवसंक्रान्तेस्सुगमत्वात् प्रभूतदीपपार्श्ववर्तिनां च तापस्वेदादिस्तत एव एवमन्त्यदीपनाशेऽप्यदृश्यावयवविसर्पस्सिद्धः । अतो विनष्टदीपभागानुपलब्धेरदृश्यावस्थानिबन्धनत्वादनन्यथासिद्धप्रत्यक्षसिद्धः सान्वयविनाशदृष्टान्त एव साधीयान् । अन्त्यदीपादेश्च यदि न किञ्चिदुपादेयं ततोऽर्थक्रियाविरहादसत्त्वं स्यात् । बुद्ध्यादिरर्थक्रियाऽस्त्विति चेन्न । तस्यानियतत्वात् विनाशस्तर्ह्यर्थक्रियास्त्विति चेन्न । तस्य ते तुच्छत्वात् ध्रुवभावित्वेन वा अहेतुकत्वाभ्युपगमाच्च एवमन्त्यदीपासत्त्वे च तत्कारणपरम्पराया अपि तथात्वं स्यादिति ॥ २१ ॥ इति क्षणभङ्गनिरासः ॥

ननु साध्यसाधनभावे सिद्धे हि प्रस्तुतं पक्षचतुष्टयं सिद्ध्येत् स एव नास्तीति चार्वाक उत्तिष्ठते । सत्वे सत्व इति ।

सू० सत्त्वे सत्त्वेऽपि पूर्वं किमपि गगनतत्पुष्पवन्नैव साध्यं हेतुप्राप्तिर्न पश्चाद्भवितुरघटितोत्पादनेऽतिप्रसङ्गः । जन्यं जन्मान्यथा वा द्वयमसदनवस्थानकार्यत्वतिभ्यामित्याद्यैर्हेतुसाध्यं न किमपि यदि न स्वक्रियादेर्विरोधात् ॥ ३२ ॥

यदि कार्यं कारकव्यापारात्पूर्वमस्ति तदा पूर्वसिद्धगगनादिवत्किमपि न कार्यं स्यात् अथ तथा नास्ति तदाऽपि खपुष्पवन्न कार्यं न चासतः सत्त्वापादानसम्भवः । न हि नीलं शिल्पिसहस्रेणापि सितीकर्तुं शक्यम् इति कार्यं च कारणेन सह पूर्वं पश्चाद्वा जायते । आद्ये किं कस्य कारणं कार्यं वा स्यात् द्वितीयेऽपि ततः पूर्वस्य कथं तज्जन्यत्वं वैपरीत्यापातश्च लोकव्यवहारानुरोधात् । तृतीये हेतुः स्वेन प्राप्तं साधयेत् अप्राप्तं वा आद्ये प्राप्तत्वादेव पूर्वसिद्धेर्न साध्यत्वं, न चोत्तरकालीनस्य पूर्वकालीनेन प्राप्तिः उभयस्वरूपसिद्ध्यपेक्षत्वात्तस्याः । तदिदमाह । हेतुप्राप्तिरिति । द्वितीयमपि दूषयति । अघटितेति । अप्राप्तोत्पादने सर्वस्मात् सर्वमुत्पद्येत प्रकाश्यमप्राप्य वा दीपः प्रकाशयेत् दाह्यमप्राप्य वा दहनो दहेत् पुनर्विकल्पान्तरेण विहतिमाह । जन्यमिति । घटो जायत इत्येतौ तावन्न पर्यायौ सह प्रयोगात् यावद्विनाशं जायत इति प्रयोगप्रसङ्गाच्च पटो जायत इति प्रयोगश्च न स्यात् घटपटशब्दयोरपर्यायत्वात् अतः कार्यस्वरूपातिरिक्तं जन्म तच्च जन्यमजन्यं वेति विकल्प्य द्वयमप्ययुक्तमित्याह । द्वयमसदिति । क्रमात् बाधकमाह । अनवस्थानकार्यत्वतिभ्यामिति । जन्मनो जन्यत्वं हि जननकर्मतया अतस्तस्यापि जन्म स्वीकर्तव्यम् एवं तस्यापीत्यनवस्था । अजन्यत्वे तज्जन्मनोऽनादित्वात् तद्वतो

घटादेरपि तथात्वं स्यात् तथा च कार्यत्वक्षतिः स्यादिति। आदिशब्देन भिन्नाभिन्नत्वादिविकल्पक्षोभसंग्रहः। हेतुश्च साध्यं च हेतुसाध्यं हेतुना साध्यं वा ईदृशानां तर्काणां युक्ताङ्गहान्यादिकमभिप्रेत्याह। नेति। साधारणदुष्टत्वमाह। स्वक्रियादेरिति। इह तावदनिष्टकोटिभङ्गेन प्रत्याख्येयः अन्यत्रैवमुत्तरगतिः। यदत्र पूर्वमसत्त्वे कार्यत्वं न स्यादिति तद्विरुद्धभाषितं प्रागसत्त्वविशेषितं सत्त्वमेव हि कार्यत्वं तत्र च प्रागसत्त्वे प्रागसत्त्वमेव न स्यादिति वा तद्विशिष्टं न स्यादिति वा सत्त्वमात्रं न स्यादिति वा प्रसङ्गार्थस्स्यात् तत्र न प्रथमः कस्यापि स्वाभावेन व्याप्त्यभावात् अन्यथा शून्यवाद एव स्यात्। अनेकान्तवादो वा। न द्वितीयः तदसत्त्व एव तद्विशिष्टसिद्धेः न हि विशेषणसत्त्वं विशिष्टविरोधि। न तृतीयः असत्त्वस्य स्वकालसत्त्वेन विरोधग्रहणात् अन्यथा देशान्तरसत्त्वेऽपि विरोधप्रसङ्गेन स एवान्त्यबौद्धपक्षस्स्यात्। यत्तु पश्चाद्भाविनः कारणप्राप्तिर्नास्तीति तत्र पौर्वापर्यनियमलक्षणा प्राप्तिर्दृष्टत्वादनिवार्या। संयोगादिलक्षणा तु माभूदसङ्गत्वात्। ततश्च नातिप्रसङ्गः नियामकस्य सिद्धत्वात् प्रकाश्यदाह्यादिषु च यथादर्शनं कारणानां* मिथःप्राप्तिरेवाङ्गं न तु कार्येण ज्ञानेन सह भस्मादिना वा। यस्तु जन्मनो जन्यत्वाजन्यत्वविकल्पेनातिप्रसङ्ग उक्तः नासावस्मत्पक्षे युक्तदोषः न हि वयमभिव्यक्तिं वा कारणसमवायादिकं वा जन्मेति ब्रूमः किन्तूपादानावस्थाविशेषं तस्य कार्यावस्थासामानाधिकरण्यव्यपदेशः तादात्म्येन तदाश्रयवृत्तेः, एवं ध्वंसादिसामानाधिकरण्यमपि यथायथमूह्यम्। ईदृशस्य जन्मन उपादानावस्थान्तरसाध्यत्वे कारणानवस्थामात्रमापतति सा च न दोष इति सर्वाविगीतं, यच्च भिन्नत्वे

* कारकाणामिति पु॰ पा॰।

गवाश्वयोरिव कार्यकारणता न स्यात् अभिन्नत्वे च कथं सिद्धस्य साध्यत्वमिति, तन्न । कारणात्कार्यस्य भिन्नस्यैवोत्पत्तिदर्शनात् ॥

अन्यथा बुद्धिबोध्यादौ भिन्नत्वादिविकल्पतः ।
बोध्यत्वादिमतेर्न स्यात् स्वमतस्थापना ऽपि वः ॥

अथ किञ्चित्कारेणाकिञ्चित्कारेण वा कारणत्वं, पूर्वत्र हेतूनां किञ्चित्कारजनने ऽपि किंचित्कारान्तरापेक्षयाऽनवस्था, किञ्चित्कारस्यापि किञ्चित्कारजननापेक्षया उत्तरत्रातिप्रसङ्ग इति, अत्रापि ब्रूमः, यत्र किञ्चित्कारेण हेतुत्वं दृष्टम्, यथा काष्ठादेर्ज्वालादिना, तत्र तथा, न चानवस्था । हेतुसम्पत्तिपरम्पराया दोषत्वाभावात् अतिरिक्तस्याचानिरूपणात्, यत्र तु द्वारनिरपेक्षं हेतुत्वं तत्रापि दर्शनबलात् किञ्चित्कारान्तरं न जनयितव्यं यतोऽनवस्था स्यात्, न चातिप्रसङ्गः, नियतपूर्वत्वग्राहिणा प्रत्यक्षेणैव तन्निवारणात् अन्यथा तदपि ते प्रमाणं न स्यादिति विश्वापह्नवः । यच्च कार्यं कुर्वतोऽकुर्वतो वा कारणत्वम्, आद्ये कार्यस्यापि पूर्वसिद्धिप्रसक्त्या कार्यत्वाभावः द्वितीये विरोधातिप्रसङ्गाविति, तदप्यपष्ठु, भाविकार्यानुगुणव्यापारवत्त्वमेव कारणस्य कुर्वत्त्वम् तत्र कथं कार्यस्य स्वस्मात् पूर्वसिद्धिः कुर्वत्त्वनिरूपणात्तु भाविनाऽपि कार्येण बुद्ध्यारोहिणा सिद्ध्येत् । एतेन निर्व्यापारस्सव्यापारो वा हेतुरित्याद्यपि दत्तोत्तरम्, कार्यकारणत्वयोः स्वभावत्वे पटत्वनीलत्वादिवत् सर्वं प्रत्यपि स्याताम्, अस्वभावत्वे कस्यचिदपि न स्यातामित्यपि नियतप्रतिसम्बन्धिकस्वभावत एव तदुभयसिद्धेर्निरस्तम्, दण्डादिकार्यत्वं घटादिकारणत्वं वा नीलादिवदेव पुरुषभेदेऽप्यविपर्यस्तमेव । अथ स्यात्कार्यकारणभावस्य द्विष्ठत्वे द्वयोरपि द्वैरूप्यादविशेषविरोधभेदापत्तयस्स्युः, एकस्थत्वेऽपि यचैकस्मिंस्तत्रैवमिति, तत्र ब्रूमः, कार्ये कार्यत्वं कारणे कारणत्वं च

वर्तते तथाप्यन्योन्यनिरूप्यतया सम्बन्धव्यवहारादिसिद्धिरिति । स्यादेतत्, न तावद्दण्डादयो मृदाद्यवयवाश्च प्रत्येकं घटाद्युत्पादनशक्ताः अदर्शनात् । अत एव न समुदिता अपि, न हि नद्यस्समेत्यापि दहेयुः न च सिकतास्सम्भूय तैलं जनयेयुः शक्तानामेव सम्भूय करणे सर्वे कृतकरास्स्युः शक्तस्य कुर्वतोऽप्यन्याकाङ्क्षायां सर्वैरपि स्यात् तथा च देशादिव्यवहितानामसन्निधेः कथं कार्यारम्भः न हि कार्ये कारणानां साध्यांशभेदः विभक्तदशायां समुदाये वा तस्यादृष्टेः निरंशे गुणादौ च दुर्वचमेतदिति । अत्रोच्यते, समुदितानां कार्यकरत्वमेव हि प्रत्येकमपि हि शक्तिः कथमन्यथा वियुक्तैः कार्यकारणं कथं च समेतेषु कृतकरता । अतश्शक्तस्यापि सहकार्याकाङ्क्षायामतिप्रसङ्गश्च निरस्तः । यावत्कार्यसिद्धिनियतविषयत्वात्तस्या इति । ननु पूर्वं कारणमित्युक्ते नष्टं कारणमित्युक्तं स्याद् दृष्टा च मृदिते मृत्पिण्डे घटोत्पत्तिः तथा च स्वात्मानमलभमानस्य कथं परसाधकत्वम् अन्यथा चिरातिक्रान्तस्य च स्यादेव कारणत्वं तुच्छस्य च कारणत्वे कार्यमपि तुच्छं स्यात् नित्यं वेति । तदपि, न पूर्वक्षणसत्त्वमेव हि कारणस्य कार्योपयोगि । न च तत्तदा नास्ति कार्यक्षणे तु कस्यचित् असत्त्वं न कारणत्वविरोधि । पूर्वं नष्टमित्यप्यसाधु, स्थिरवादे तदयोगात्, पिण्डस्य तु न साक्षात्कारणत्वम् । न च पिण्डस्तत्प्रध्वंसो वाऽत्यन्ततुच्छः स्वकाले सद्भावात्, कालान्तरासत्त्वेन तुच्छत्वे प्रत्यक्षविषयोऽपि तथा स्यात् तथा चेयं माध्यमिकगतिः । अथ ब्रूषे पूर्वत्वमेव कारणस्य दुर्निरूपं पूर्वकालवृत्तित्वं हि तत्, काले च पूर्वत्वमुपाधिकृतं, स चोपाधिर्यद्ययमेव तदा तदधीनं कालस्य पूर्वत्वं कालाधीनं चोपाधेरित्यन्योन्याश्रयः अन्यापेक्षायां चक्रकम् अनवस्थाऽपि । कालस्य

क्रमवदुपाधिसम्बन्धभेदाद्भेदश्च कृत्स्नैकदेशविकल्पदुःस्थ इति । एवं ब्रुवता किं पौर्वापर्यमेव न दृष्टं दृष्टमपि वा बाधितं नाद्यः स्वाभ्युपेतलोकव्यवहारविरोधात् । न द्वितीयः सर्वेषां नित्यत्वतुच्छत्वयोरन्यतरप्रसङ्गात् अतः काले सत्यसति वा क्रमस्तावद् दुरपह्नवः ॥

क्रमेणोपाधिभिर्योगस्साकल्येनांशतोऽपि वा ।
कालस्य न घटेतेति स्थिरवादी कथं वदेत् ॥
प्रत्यक्षप्रतिरुद्धश्च क्षणभङ्गपरिग्रहः ।
अपसिद्धान्तमादध्यान्मानमन्यदनिच्छतः ॥
अथ लोकायतान्तस्थमनुमानं च मन्यसे ।
आगमोऽप्यविसंवादी तदन्तस्स्थातुमर्हति ॥
यच्च प्रवृत्तिसामर्थ्यं न लोकादुपलभ्यते ।
अनुमीयेत तत्रापि प्रामाण्यमविशेषतः ॥

अस्त्वेवम्, तस्य नियमो न शक्यः अस्मादेवेदमनन्तरमिति, तदेतन्नियतपूर्वत्वं हि न जातेर्जातिमपेक्ष्य, द्वयोरपि त्रैकालिकत्वान्न च जातेर्व्यक्तिमपेक्ष्य सर्वासां जातीनां पूर्वत्वेन कारणनियमासिद्धेः जात्यन्तरापेक्षया कार्यत्वं न दृष्टमिति चेत् किमतः पूर्वमेतज्जातिकार्यत्वमपि दृष्टम् । एकव्यक्तेश्च नियमो दुर्ग्रहः अननुवृत्तेः, कृत्तिकारोहिण्योरपि ह्युदयभेदेष्वेव व्याप्तिर्गृह्यते एतेन व्यक्तेर्जात्यपेक्षया वा व्यक्त्यपेक्षया वा पूर्वत्वनियमोऽपि प्रत्युक्त इति अयमप्यनुक्तोपालम्भः । एतद्धर्मकादेतद्धर्मकमुपजातमिति जात्युपाधिक्रोडीकृतरूपेण व्यक्तिषु नियमसिद्धेः यथादर्शनं चेयत्तानियमरहितनिरुपाधिनिर्व्यभिचारभूयोदर्शनबलेन व्याप्तिसिद्धिश्चानुमाने वक्ष्यते । न च सर्वस्मात्तादृशात्तादृशं सर्वमनियतं वा स्यादिति शङ्कनीयम् तथा व्याप्त्यग्रहणात्, तद्वि-

रुद्धा च* ते प्रार्थना मोघैव, तृणारणिमण्यादिषु च वह्न्याद्युत्पत्तौ सामान्यतोविशेषतश्च हेतुकार्यभावो मन्तव्यः तत्र कार्यवैजात्यं न दृश्यत इति चेन्न अनुपलब्धवैषम्याणामप्यायुर्वेदादिषु शक्तिभेदसिद्धेरवान्तरवैजात्यस्य स्वीकार्यत्वादिति ।

सांख्यसौगतचार्वाकैरन्येऽप्येवमुपप्लवाः ।
प्रयुक्ताः प्रतिवक्तव्याः प्रतिष्ठितनयस्थितैः ॥
यदत्र माध्यमिकम्मं† तस्थैरुच्यते ।
पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ ॥
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ।

इति तत्रोच्यते ।

प्राक्कालनियतत्वेन कारणं प्रमितं न वा ।
आद्ये तदेव तत्सत्त्वमन्यथा नियमोऽपि न ॥

अन्यदपि यदुक्तम् ।

अन्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः ।
नान्तर्भावितसत्त्वञ्चेत्कारणं तदसत्तत इति ॥

अत्र तदसत्तत इति स्थाने सदिदं तत इति पाठ्यम् विशेषणतयोपलक्षणतया वा सत्तासम्बन्धिनि नासत्त्वारोपः शक्यत इति ।

सत्त्वञ्च सदसद्वेति विकल्प्यानिष्टकल्पने ।
असत्त्वं सदसद्वेति विकल्प्योत्तरमूह्यताम् ॥

---

* अत्रत्यचकारस्य भिन्नक्रमेणान्वयितया न च वा हा हैव योगे इति पाणिनीयेन सूत्रेण ते आदेशो न स्यादिति न शङ्कनीयम् ।

† माध्यमिकमतमास्थाय पूर्वकालवृत्तित्वज्ञानमात्रस्य कारणत्वे तन्त्रतां निरूपयद्भिः खण्डनकारैः श्रीहर्षमिश्रैः पूर्ववृत्तित्वस्य कारणत्वेऽतन्त्रताऽभिधानात् ।

स्वक्रियादिविरोधश्च सूचप्रभृतिदुस्तरः ।
गुरुशिष्यादिवाक्यानाम्परबोधार्थता यतः ॥
तेभ्यश्चैतन्यमित्यादि वदता गुरुणा स्वयम् ।
क्रियवादिभ्यः प्रसिद्धयन्ती मद्शक्तिर्निदर्शिता ॥
प्रत्यक्षाल्लोकशब्दोक्तादधिकञ्च तदायतम् ।
अभाष्यत भवत्पूर्वैः प्रत्यक्षञ्चार्थसाधकम् ॥
अर्थकामौ पुमर्थौ च दृष्टोपायैरुदीरितौ ।
प्रीयसे दूयसे च त्वं बिभेषि च ततस्ततः ॥
इष्टं प्राप्तुमनिष्टञ्च निवर्तयितुमुद्यतः ।
तत्सिद्धौ चरितार्थस्त्वं लोकवत्किं न मन्यसे ॥
बुभुक्षुरन्नमादत्से श्वभक्ष्यादि जहासि च ।
परोक्त्या प्रतिपद्यार्थमप्रतिज्ञे जिगीषया ॥
तत्त्वावधारणार्थं वा वादे किं न प्रवर्तसे ।
स्वयं वा मानतर्काभ्यां किं न किञ्चित्परीक्षसे ॥ ३२ ॥

ननु परिवेषादिषु नियतपूर्वसत्किञ्चिन्न दृश्यते न च घटादिदृष्टान्तेन तदनुमेयम् विपरिवर्तस्य दुर्वारत्वात् अतो दृश्यमाना अप्यवधयः केषुचिद्रसोत्पत्तौ रूपादिवद्यदृच्छासिद्धा इत्यत्राह । कादाचित्कस्येति ।

**मू० कादाचित्कस्य कालावधिनियतिकरं पूर्वसत्कारणं स्यात् भावोपष्टम्भशून्यो न खलु तदवधिं प्रागभावोऽपि कुर्यात् । कार्यं निर्हेतुकं चेत्कथमिव न भवेन्नित्यता तुच्छता वा कादाचित्कस्वभावाद्यदि न नियमनादन्यथातिप्रसङ्गात् ॥ ३३ ॥**

अयम्भावः यदि परिवेषादीनामपि कादाचित्कत्वं दृष्टं तच निपुणं निरूपयतां देशकालादृष्टविशेषादातपादिकारणविशेषसिद्धः तदनुपलम्भेऽपि सन्दिग्धपरिवेषादिदृष्टान्तेन नान्यच हेत्वभावश्शक्योऽनुमातुम् । अनिश्चितसाध्यस्य दृष्टान्तत्वायोगात्, निश्चितसाध्यविपर्ययस्य पक्षत्वाद्यतिपातात्, निश्चितनिदर्शनादनिश्चितानुमानं युक्तमेव न च त्वद्विवादमाचेण घटादिषु सर्वलोकसम्मतः कारणसद्भावस्सन्दिह्यते । एतेनाहेतुतो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् इत्यादि च प्रत्युक्तम्, अस्तु हेतुनिरपेक्षो नियतकालः प्रागभाव एव कार्यस्य पूर्वावधिः न हि स्वभावविरुद्धत कार्यकालमनश्नुवानस्तत्पूर्वया एवेति सिद्धम् । अतः किमन्यैरित्यचाह । "भावोपमृम्भेति" । भावान्तरमभाव इति स्थापयिष्यते, इह त्वपिना पक्षान्तरान्वारोहस्सूच्यते । अयम्भावः यदि कार्येण प्रागभाव एव केवलोऽपेक्षणीयस्तद्वदेतेनाप्यनादिना भाव्यम् । अतः प्रागवधिः सन्नप्यभावस्ततद्भावशेखरित एव स्वात्मानमवधित्वेन नियच्छेदिति । नित्यस्वभाववत् कादाचित्कस्वभावस्यापि हेतुनैरपेक्ष्यं स्यादित्यचाह "कार्यं निर्हेतुकं चेति" । विषयं निदर्शनमित्याकूतम् । तदेवानिष्टप्रसङ्गेन व्यनक्ति "कथमिति" । निरवधित्वे गत्यन्तरं न सम्भवतीति भावः । कार्यस्य निर्हेतुकत्वं सतोऽसतो वेति विकल्पे पूर्वच नित्यता अन्यच तुच्छता स्यादिति* विभाव्यम् पूर्वावधिवदुत्तरावधेरप्यसत्कल्पत्वान्नित्यत्वं न हीतः परं न भवितव्यमनेनेत्यपि नियमोऽस्ति । ननु कादाचित्कत्वं स्वभावो न वा आद्ये नित्यस्वभाववन्निरपेक्ष एव स्यात् द्वितीये कथमतत्स्वभावः कारणसहस्रेणापि तत्स्वभावतां नेतुं शक्यः स्वभावस्य च हेतु-

* विभाज्यमिति पुस्तकान्तरस्थः पाठः ।

मत्त्वे निर्हेतुकमिति किंचिन्न स्यात् अतो नित्यस्वभाववन्नियतकालस्वभावता स्यादिति शङ्कते "कादाचित्केति"। कादाचित्कस्वभावत्वेऽपि हेत्वधीनतां तत एव नित्यस्वभाववैषम्यं चाभिप्रेत्याह । "न नियमनादिति"। न हि यतः कुतश्चिदनन्तरमनेन भवितव्यमिति कादाचित्कत्वम् अनियमादृष्टेः अस्मादनन्तरमेवेदमिति कालविशेषव्यवस्थादृष्टेरित्यर्थः । उक्तनियमानभ्युपगमे सर्वत्र सर्वदा सर्वतः कार्यं स्यादिति तर्कबाधं व्यनक्ति "अन्यथेति" न हि धूमादिना यदा कदाचिद्भवितव्यमित्यस्य कादाचित्कत्वं नियम्यते तथा सति गर्दभादेरनन्तरं तदुपलब्धिर्वा सामग्र्यनन्तरमनुपलब्धिर्वा स्यादिति ॥ ३३ ॥

कार्यकारणभावादिसमर्थनम् । प्रकृतस्य प्रकृत्यादिकारणवादस्य प्रतिपक्षा निरस्ताः तत्र देहादिवदिन्द्रियाणामपि भौतिकत्वं वदतः प्रतिवक्ति । "नेत्रादेरिति" ॥

**मू० नेत्रादेर्दीपिकादेरिव नियमयुतं तैजसत्वादिसाध्ये रूपादिग्राहकत्वं यदि करणतया स्यादसाधारणत्वम् । तत्साहाय्यन्त्वसिद्धं भवति गमकतामात्रमप्यञ्जनाद्यावल्लाहङ्कारिकत्वं श्रुतिपथनिपुणैर्घोषितं नैव बाध्यम् ॥ ३४ ॥**

नियमयुतं सावधारणं, रूपादिषु मध्ये रसाद्यग्राहकत्वेन विशेषितमित्यर्थः । चक्षुस्तैजसं रसाद्यग्राहकत्वे सति रूपग्राहकद्रव्यत्वात् दीपवदिति, एवं त्वगिन्द्रियं वायवीयं स्पर्शादिषु मध्ये स्पर्शस्यैव ग्राहकद्रव्यत्वात् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकवायुवत् रसनस्याप्यत्वे रसस्यैवेति दन्तान्तस्तोयदृष्टान्तः घ्राणस्य पार्थिवत्वे

गन्धस्यैवेति चन्दनकुङ्कुमादिगन्धाभिव्यञ्जकनिम्बत्वगादिनिदर्शनम् श्रोतस्य तु नभस्त्वे श्रोत्रं गुणावान्तरजात्या स्वगुणसजातीयगुणग्राहकं बाह्येन्द्रियत्वात् चक्षुरादिवदिति शब्दो गुणावान्तरजात्या सजातीयगुणवतेन्द्रियेण गृह्यते बहिरिन्द्रियव्यवस्थापकगुणत्वाद्रूपादिवत् शब्दो भूतेन्द्रियग्राह्य इति वा बहिरिन्द्रियव्यवस्थापकत्वादित्येव हेतुः तथा श्रोत्रं भौतिकं बाह्येन्द्रियत्वात् चक्षुरादिवत् आकाश इन्द्रियारम्भकः भूतत्वात् भूतान्तरवदिति । शब्दोपलब्धिर्वा भूतेन्द्रियकरणिका बाह्येन्द्रियव्यवस्थापकोपलब्धित्वात् रूपोपलब्धिवत् । तत्राद्येषु चतुर्ष्वनुमानेषु हेतुविकल्पमनूद्य दूषयति यदि करणतयेत्यादिभिः" । यस्मिन्सति कार्यं भवत्येव तत्करणम् तच्च सन्निकर्षविशेषविशिष्टतयेन्द्रियाणाम् ।

ननु

उद्विग्नो ह्यन्धकारेण कश्चिदेवं ब्रवीत्यपि ।
किं चक्षुषा ममैतेन दृष्टं दीपेन यन्मया ॥

इति दीपादिषु साधकतमत्वं कश्चिद् ब्रूयात् अतस्सपक्षवृत्तेर्हेतोः कथमसाधारणत्वम्, इत्यम् आलोकेन विनापि जन्तुभेदेषु चक्षुषो रूपादिग्राहकत्वं सिद्धम् अन्धकारे च मनुष्यादीनां तत्त्वतोऽन्यथा वा अत ईदृशं प्राधान्यमपेक्ष्य इन्द्रियेषु करणत्वं दीपादिषु सहकारित्वं च प्रख्यातमनुरुध्य विकल्पप्रवृत्तेरविरोधः कोट्यन्तरं दूषयति । "तत्साहाय्यं त्वसिद्धमिति" । करणभूतेन्द्रियापेक्षया तेषामेव दीपादिवत्सहकारित्वमनुपपन्नमित्यर्थः दीपादीन्प्रति सहकारित्वान्नासिद्धिरिति चेत्तर्हि प्रमातृप्रमेययोरपि तथात्वात्तत्सिद्धिः स्यात् तयोः सतोरपि कदाचित्कार्यं नास्तीति चेत्तावता करणत्वं माभूत् तत्सहकारित्वन्तु सिद्धमेव दीपे च सति भावएवेति नियमो

नास्ति सम्प्रयोगविशेषसाहित्यात्स्यादिति चेत्तर्हि तयोरपि ततस्स्यादेवेत्यनैकान्त्यम् एतेन करणत्वादिविकल्पानादरेण रूपादिबोधकद्रव्यत्वमात्रं हेतुरित्यपि निरस्तम् । तद्व्यनक्ति "भवतीत्यादिना" । आदिशब्देन प्रमात्रादिसङ्ग्रहः अञ्जनस्य शक्ये प्रतिबन्धकनिवर्तकत्वमात्रमिति चेन्न । अशक्ये गूढनिदर्शनादौ शक्त्याधानेन सहकारित्वदृष्टेः, शक्त्याधानं हि सहकारीति चेन्न । दीपादावपि तथा क्लृप्तिप्रसङ्गात् सत्तयैव हेतुत्वं तत्र दृष्टमिति चेदत्रापि तथाऽस्तु अविशेषात् । ये च तत्तदिन्द्रियदोषैरपि रूपादिधीरस्तीति मत्वा शरीरयोगे सत्येव साक्षात्प्रमितिसाधनमिति लक्षयन्ति तन्मते तत्तद्दोषैरप्यनैकान्त्यम् तेषां तैजसत्वानभ्युपगमात् दन्तान्तस्तोयदृष्टान्तश्चायुक्तः विषयसंस्कारस्य व्यञ्जकत्वायोगात् । न हि ग्रस्यमानं किंचिदसंस्कृत्य दन्तान्तस्तोयस्योपकारकत्वं तावता च रसव्यञ्जकत्वे रसगन्धाद्युद्भवहेतोरग्न्यादेरपि किन्तन्न स्यात् वायुश्च वेगेनाभिघ्नन् सूक्ष्मान्सलिलकणानन्तश्शरीरं प्रवेशयति शैत्यन्तु तेषां त्वगिन्द्रयप्रवेशवैषम्याद्विशदमनुभूयते तावता स्पर्शव्यञ्जकत्वे गन्धोपहारकस्य तस्य तद्व्यञ्जकत्वमपि किं नेष्यते तथा च घ्राणपार्थिवत्वानुमानं दुःस्थमिति । एवं चतुर्णां भौतिकत्वासिद्धौ तद्दृष्टान्तेन श्रोत्रभौतिकत्वानुमानान्यपि च्छिन्नमूलानि, आकाश इन्द्रियारम्भक इति चायुक्तम् श्रोत्रस्य त्वन्मते तदारब्धत्वाभावात् भूतत्वादिति च घटादिभिरनैकान्तिकम् । किञ्चात्र लोकसिद्धनयनबुद्बुदादिपक्षीकारे रूपादिविशेषैस्तेषां पार्थिवत्वसिद्धेः कालात्ययापदेशः, अनुमानतस्त्विन्द्रियसिद्धिरशक्येति वक्ष्यते सामान्यतो दृष्टादधिष्ठानादतिरिक्तेन्द्रियसिद्धावपि तदाहङ्कारिकत्वं श्रौतमबाध्यम् इन्द्रियाण्यहङ्कारविशेषा इति हैरण्यगर्भोक्तिरपि तदाहङ्कारिकत्वानुगुणा, अतः श्रुतिसिद्ध-

पञ्चीकारेऽपि बाध एव प्रतिप्रयोगाश्च, बाह्येन्द्रियाण्यभौतिकानि इन्द्रियत्वात् मनोवत् प्रत्येकपञ्चीकारेण वा चक्षुरतैजसमित्यादितावेव हेतुदृष्टान्तौ परस्परं वा घ्राणादयो दृष्टान्ताः विपक्षे बाधकसदसद्भावश्च समः। यत्किंचिद्दृष्टान्तमात्रानुसारेण प्रसङ्गस्य सुलभत्वादिति। परोक्तानुमानानामागमबाधमभिप्रेत्याह। "अक्षाऽहङ्कारिकत्वमिति" श्रुतिपथनिपुणैः—मनुपराशरपाराशर्य्यादिभिः घोषितं बहुषु प्रदेशेषु स्पष्टोक्तं नैव बाध्यमशक्तैरनुमानैरन्यपरैश्च वाक्यैरिति शेषः॥ ३४॥ नन्विन्द्रियाणि तन्मात्रेष्विति श्रुत्या भौतिकत्वममीषां भातीत्यत्राह। तन्मात्रेष्विति।

**मू० तन्मात्रेष्विन्द्रियाणि श्रुतिरिह न लयं वक्ति**
**किन्तु प्रवेशं नो चेत्पृथ्व्यादिवाक्येष्विव हि लयपदं व्योम्नि चाक्षेषु च स्यात्॥**
**भूतैराप्यायितत्वात्क्वचिदुपचरिता भौतिकत्वोक्तिरेषामन्नाप्तेजोमयत्वं श्रुतिरपि हि मनःप्राणवाचामुवाच॥ ३५॥**

पूर्वापरपर्यायेष्विव आकाशेन्द्रियादिपर्याययोर्लयो न पठ्यते न चात्रानुषङ्गः कार्यः सति गत्यन्तरेऽध्याहारवत्तस्याप्ययोगात् अन्यथा द्वितीयादिषु सर्वेषु पर्यायेष्वप्यनुषङ्गेण भाव्यम् वैरूप्यायोगात्। इन्द्रियाणामाकाशप्रकृतित्वञ्च सर्वोपबृंहणविरुद्धम् अस्याञ्चोपनिषदि भूतादेराकाश आकाशाद्वायुरित्यादिः सृष्टिक्रम उक्तः षोडश विकारा इति श्रुतेश्चासामञ्जस्यं स्यात् अतोवरमधिकरणत्वोक्तिमात्रानुसारादाकाशस्येन्द्रियेषु तेषाञ्चाकाशारम्भकतन्मात्रेषु प्रवेशविशेषाभिधानमित्यभिप्रायेणाह। "किन्तु प्रवेशमिति"। अयम्भावः

यद्यप्याकाशस्येन्द्रियैः प्रागपि सम्बन्धः तथापि तत्तदिन्द्रियाप्यायकभूतांशानां स्वकारणलयक्रमात् आकाशदशापन्नत्वात्तदानीमिन्द्रियेष्वाकाशस्यैव संसर्गः अनन्तरमाकाशे च शब्दतन्मात्रावस्थे तानीन्द्रियाणि शब्दतन्मात्रसंसर्गीणि भवन्ति अतस्तन्मात्रान्तराणामपि तदवस्थापत्त्या तत्तदंशभेदविवक्षया बहुवचनोपपत्तिः अतस्तन्मात्राणि भूतादौ लीयन्त इत्यपि बहुवचनङ्गतार्थम् अत्रैवं व्याख्यातम् इन्द्रियाप्यायकभूतांशानां सर्वेषामाकाशतापन्नत्वादाकाशस्यैव इन्द्रियसंसर्ग आसीत् पश्चानामपि भूतानां शब्दतन्मात्रापन्नत्वादिन्द्रियाणि शब्दतन्मात्रांशभेदेषु संसृष्टान्यासन्निति एवमनभ्युपगमे वाक्यवैरूप्यदोषं व्यनक्ति "नो चेदिति"। ननु श्रोत्रं न भो घ्राणयुक्तं पृथिव्या इत्यारभ्य वाय्वात्मकं स्पर्शनमामनन्ति इत्युच्यते नभः श्रोत्रं च तन्मयम् इत्यादि च अत आहङ्कारिकत्ववाक्यं परम्परया नेयमित्यत्राह । भूतैरिति । तदिदं व्यवस्थापितम् वेदार्थसंग्रहे, भूतैस्त्वाप्यायनं महाभारत उच्यते इति । इममेव न्यायम् अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक् इत्यादिष्वपि योजयितुमाह । "अन्नाप्तेजोमयत्वमिति"। न खलु हेतुकैरपि मनसः पार्थिवत्वं कल्प्यते वायुरूपस्य प्राणस्याप्यत्वं तस्माद्वाप्यायनपरत्वमेव तत्र वाच्यमेवमन्यत्रापि, अग्निर्वाग्भूत्वा मुखं प्राविशत् आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदित्यादिषु तत्तद्देवताधिष्ठाने तात्पर्यम्, अग्निं वागप्येति इत्यप्ययश्रुतिश्चाधिष्ठातृदेवतांशापक्रमणपरेत्यभाष्यत ओषधीर्लोमानीत्यादिना अनपियद्भिर्लोमादिभिस्सह पाठात् ॥ ३५ ॥ इतीन्द्रियाणामभौतिकत्वाहङ्कारित्वे ॥

अथ मनष्षष्ठान्येवेन्द्रियाणि वागादिष्विन्द्रियशब्दो भाक्त इति वदतः प्रतिबन्दिपूर्वकेण प्रमाणेन प्रतिक्षिपति । "रूपादीति" ॥

सू० रूपादिज्ञानसिद्धौ यदि करणतया कल्पनं धीन्द्रियाणां तद्वद्वत्यादिकर्मस्वपि करणतया सन्तु कर्मेन्द्रियाणि ॥ कर्मज्ञानाक्षहेत्वोस्समपरिहरणा ह्यन्यथासिद्धिशङ्का तस्मादेकादशाक्षाण्यपि निगमविदो मन्वते न्यायपूर्वम् ॥ ३६ ॥

अयम्भावः यद्यागमः प्रधानीक्रियेत तदा इन्द्रियाणि दशैकं चेति व्यवतिष्ठेत यदा तु क्रिया करणपूर्विकेति व्याप्त्या रूपादेः सुखादेश्चोपलब्धिः स्मृतिश्च क्रियात्वात्करणपूर्विकेति कल्प्येत तदा वचनादानक्रियाऽपि तत्पूर्विका कल्प्या स्यात् । अथ तावताऽधिष्ठानातिरिक्तं न सिद्ध्यतीति मन्यसे ज्ञानेन्द्रियेष्वपि तथैवालोकादिभिरधिष्ठानैश्च सिद्धसाध्यता । गोलकादिसद्भावेऽपि कदाचित् कार्यं न जायते इत्यतिरिक्तसिद्धिरिति चेत् समं वागादावपि । सामग्रीवैकल्यात् प्रतिबन्धकाच्च तत्र तथेति चेत् चक्षुरादावपि तथैव । सत्यप्यालोकादौ दोषादर्शनेऽपि गोलकादितः कदाचित्कार्यं न जायत इति चेत्तदपि समम् । दोषस्सूक्ष्मस्तत्रेति चेत् अन्यत्राप्येवमस्तु ज्वालाघ्रातबीजन्यायेन विशेषादर्शनेऽपि दोषस्य कल्प्यत्वात्, कल्पिते ऽपि ह्यतीन्द्रिये तदानीं तद्भ्रंशहेतुस्सूक्ष्मो दोषस्त्वयाऽप्यङ्गीकार्यः अन्यथा कथं कर्मेन्द्रियकॢप्तेरन्यथासिद्धिः । ननु च यदि चक्षुर्गोलक एवेन्द्रियं कथं तर्हि दूरस्थं व्यवहितं वा न प्रकाशयति इत्थम् यथाऽयस्कान्तादेरव्यवहितानतिविप्रकृष्टाकर्षकत्वं तथेह प्रकाशकत्वम् आभिमुख्यविशेष एव च बाह्यैरक्षसम्बन्धोऽस्तु । नन्वयस्कान्तादिवदाभिमुख्याभावेऽपि दर्पणादिभिः

स्वमुखादेः पश्चाद्भागवर्तिनां च दर्शनं कथं स्यात् भवतो वा कथम्, चाक्षुषस्य तेजसः प्रतिलोमवृत्त्येति चेत् सा कुड्यपाषाणादौ कथं न जायते मणिसलिलदर्पणादिषु च कथं भवति अपर्यनुयोज्यत-तद्वस्तुस्वभावविशेषादिति चेत् अस्तु तर्हि स एव सन्निधिविशेष-सामर्थ्यादनभिमुखवस्तुनिदर्शनस्य हेतुः द्रव्यान्तरकल्पनाद्वरं सिद्ध-द्रव्यसामर्थ्यविशेषस्य प्रतिफलनादौ सम्मन्तव्यस्य कार्यान्तरयोज-नामात्रम् अतो धीन्द्रियाणां कल्प्यत्वे कर्मेन्द्रियाणामपि क्लृप्तिरनि-वार्या अन्यथासिद्धिशङ्कापरिहारौ च समाविति तदेतत्सर्वमभि-प्रेत्याह । "कर्मेति" । त्यज्यतां तर्हि वर्गद्वयमिति चार्वाकोत्थानं प्रतिरुणद्धि । "तस्मादिति" । अतीन्द्रियेन्द्रियकल्प्यत्वासंभवादप्राप्ते च शास्त्रस्यार्थवत्त्वादिति भावः । निगमविद इत्यनेन श्रुतिस्मृत्य-नुविधानसूचनम्, एका कन्या दशेन्द्रियाणि इत्यादेर्न हि कश्चिद्बाधो दृश्यते न च कणभक्षाक्षपादाद्यनुसारेण षड्भावच्छिन्नेन्द्रियलक्षणक्लृ-प्तिर्युक्ता यथाहुः ।

> सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः ।
> न सर्वलोकसिद्धस्य लक्षणेन निवर्तनमिति ॥

वक्ष्यते चानुवृत्तं तल्लक्षणं सात्त्विकाहङ्कारोपादानत्वं न च कर्मेन्द्रियाणां तत्त्वान्तरसिद्धं राजसत्वमनुमन्तव्यम् शब्दप्रमाणके यथाशब्दं व्यवस्थापनात् सांख्यैरप्यत्र शास्त्रमेवानुसृतम् "सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारादिति" साधितञ्च सप्तगत्यधिक-रणसिद्धान्ते हस्तादीनामपि तादृशमिन्द्रियत्वं न्यायपूर्वं क्रियाकर-णपूर्विकेति व्याप्त्यनुसारेण तत्तत्करणमात्रानुमानेऽपि अलौकिकवि-शेषप्रतिपत्तिश्शास्त्रत एवेति भावः । एवं च शास्त्रयोन्यधिकरणे भाष्यम् अतीन्द्रियेऽर्थे शास्त्रमेव प्रमाणमिति चन्द्रबिम्बपरभागादिषु

व्यवधानविप्रकर्षादिभिरस्मदादीन्द्रियग्रहणानर्हेषु नानुमानं तस्य पक्षाश्रयहेतुधर्मव्यापकान्वयमात्रातिरिक्तेषु प्रवृत्त्ययोगात् साध्यसामान्यस्य तु विवक्षितविशेषविरुद्धव्याप्तत्वेन तदाकर्षकत्वायोगात् अतोऽतीन्द्रियधर्मकल्पनाद्वरं दृष्टेषु केषुचिद्वैषम्यमात्रस्वीकार इति तात्पर्यम् ॥ ३६ ॥ इत्येकादशेन्द्रियसिद्धिः ॥

उक्तेष्विन्द्रियेषु एकमेवान्तःकरणमिति तत्त्वं सांख्यास्त्वाहुः "करणं त्रयोदशविधमिति" । "अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यमिति" । अन्ये तु चित्ताख्यमन्तःकरणमन्यदाहुः तदनुभाषते । "सांख्यैरिति" ॥

**मू० सांख्यैस्त्रेधोक्तमन्तःकरणमिह मनोबुद्ध्यहङ्कारभेदाच्चित्तं चान्ये चतुर्थं विदुरुभयमसत्तादृशश्रुत्यभावात् । तत्तत्त्वोक्तिमात्रं न हि करणभिदामाह कॢप्तिस्तु गुर्वी बुद्ध्याद्याख्यानिरूढा क्वचिदिह मनसो वृत्तिवैचित्र्य*योगात् ॥ ३७ ॥**

तदिदं मतद्वयं निष्प्रामाणिकमित्याह । "उभयमसदिति", कार्यमित्यत्र श्रुत्या कल्पनया वा तत्सिद्धिरिति विकल्पे प्रथमस्यासिद्धिमाह । "तादृशेति" । ननु तान्यपि त्रीणि सुबालोपनिषदि पृथिव्यादितत्त्वपङ्क्तौ मनसोऽनन्तरं पठ्यन्त इत्यत्राह "तत्तदिति" । अयम्भावः न हि तत्त्वपङ्क्तिपाठमात्रान्मनस्सहपाठमात्राद्वा करणत्वं सिद्ध्येत् तथा सत्यव्यक्तादीनामपि तत्प्रसङ्गात् इति । द्वितीयं दूषयति "कॢप्तिरिति" । एकस्यैव हि मनसः स्मृत्यनुभवभेदेन वा

* वैचित्र्यमात्रादिति पाठान्तरम् ।

संकल्पविकल्पभेदेन वा वृत्तिभेदमन्येऽप्याहुः श्रूयते च कामस्सं-कल्प इत्यादावेतत्सर्वं मन एवेति अचायुर्घृतमित्यादिवत्सामानाधिकरण्यं पुरुषधर्मा एव हि वस्तुतः कामादयोऽध्यवसायादयश्च तदिह पुरुषबुद्धिभेदनियतसामग्रीभेदव्यवस्थितं वृत्तिभेदमा न करणभेदकल्पकमिति भावः । ननु चक्षुश्च द्रष्टव्यञ्च नारायण इत्यादिना पञ्चज्ञानेन्द्रियाण्युक्त्वा मनश्च मन्तव्यं च नारायणः बुद्धिश्च बोद्धव्यं च नारायण ऽहङ्कारोऽहङ्कर्तव्यञ्च नारायणः चित्तञ्च चेतव्यञ्च नारायण इत्याम्नातम् अनन्तरञ्चैवं कर्मेन्द्रियाण्यधीतानि अतः करणगणमध्यपाठादग्यप्रायनयेन बुद्ध्यादीन्यपि करणानि स्युरित्यचाह । "बुद्ध्याद्याख्येति" । तथा च भाष्यम् अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यते इति । अतस्तत्त्ववर्गमध्ये मनोऽनन्तरं बुद्ध्यादिचित्तान्तपाठोऽपि मनस एव हि वृत्तिभेदविशिष्टस्येति नेतुं शक्यम्, न च चि॰ नाम तत्त्वान्तरं सृष्टिप्रलयप्रकरणेषु पठ्यते अयमेव त्वहङ्कार उत्कृष्टजनावमानहेतुरित्यादि प्रथमसूत्रभाष्यमहमर्थहेयत्वनिरासपरतयाऽन्यार्थम्, अन्वरुह्याप्युपपत्तेः, अनुग्राहकत्वमात्रेण परम्परया वा गर्वहेतुत्वोक्तेरनिरोधादिति ॥ ३७ ॥ इत्यन्तःकरणवैविध्यभङ्गः ॥

नन्वेवं बाह्यकरणभेदोऽप्यपोहितुं शक्यः मनोवदेकस्य वृत्तिभेदात्पृथक्कार्यव्यपदेशोपपत्तेः । आहुश्च बाह्यैकदेशिनः एकैकदेहेष्वेकमेवेन्द्रियं प्रदेशभेदैस्तु रूपादिप्रकाशनशक्तिनियमः षडायतनागमोऽपि तथैव स्याप्यः स्वरूपभेदप्रयोजनाभावात् ।

कल्प्यते शक्तिभेदश्चेच्छक्तिरेवेन्द्रियम्भवेत् ।

इति चायुक्तम्, धर्मिकल्पनातो वरं हि धर्मकल्पनम् प्रदेशानामेव तत्तत्करणत्वोपपत्तौ प्रदेशकॢप्तिरनर्थिकेति चेन्न । देहव्यापिनः

स्पर्शस्योभयसंमतेः, तस्य च करतलप्रकोष्ठ नेत्रादिषु स्पर्शग्रहणशक्तिवैषम्यदृष्टेः । अतश्चैकस्यैव सर्वत्र देहे स्पर्शनत्वं तत्र तत्र चक्षुरादित्वं चेति तदेतदाह । "एकमिति" ।

**मू० एकं तत्तत्प्रदेशप्रतिनियततया शक्तिभेदं प्रपन्नं देहव्यापीन्द्रियं चेत्प्रथममिह भवेदागमेनैव बाधः ॥ नो चेत्स्याद्देहभेदप्रतिनियततया सर्वजन्तोस्तदेकं भेदाम्नानादक्लृप्तेरपि न च भजते देह एवेन्द्रियत्वम् ॥ ३८ ॥**

किमेकेन्द्रियस्य श्रुतस्य कल्पितस्य वा शक्तिभेदव्यवस्थापनमिति विकल्पमभिप्रेत्याद्यं दूषयति । "प्रथममिति" । बाधस्य दूषणान्तराद्दौर्बल्यसूचनाय प्राथम्योक्तिः । आगमेनैव धर्मिग्राहकेणैवेत्यर्थः । गौरवदोषश्च क्लृप्तिपक्षे वक्तव्यः नास्मत्पक्ष इति च भिप्रेतम् इन्द्रियक्लृप्तिः प्रागेव निरस्ता । अथ तदेकत्वक्लृप्तावतिप्रसङ्गमाह । "नो चेदिति" । यथैकमेवाकाशं तत्तत्पुरुषादृष्टोपार्जितकर्णशष्कुल्यवच्छेदभेदैः प्रतिपुरुषं व्यवस्थितोपकारकमिति वैशेषिकादिभिः कल्प्यते तथा त्वयाऽप्येकमेवेन्द्रियं तत्तद्भोगायतनभेदनियतशक्तिकं सर्वोपकारकं कल्प्यमिति भावः । न चैवमस्त्विति वाच्यम् अपसिद्धान्तात् । ननु च नानादेहमध्येषु वसतः कथमेकत्वमिति चेत् चक्षुर्गोलकाद्यवच्छिन्नानामिन्द्रियप्रदेशभेदानां कथम् न कथञ्चिदिति चेत्तर्ह्यनेकेन्द्रियवादः । गुञ्जैकत्वमस्त्विति चेत् किमतः ग्राहकांशानां मिथो विभक्तत्वात् ।

न च तत्ता तदन्यस्य न च तस्य ततोऽन्यता ।
सत्ताद्यैर्जैनवद्वाच्या सर्वमानविरोधतः ॥

स्पर्शनस्य पुञ्जस्य भागाश्चक्षुरादय इत्यप्यसत् नियामकाभावात् अवयविसामान्यसादृश्यापोहादिभिरैक्यकल्पने अपसिद्धान्तातिप्रसङ्गौ, देहातिरिक्तेन्द्रियकल्पनञ्चास्मिन्पक्षे अपार्थम् । न ह्यत्र दृष्टहानिरदृष्टकल्पना वा कुतस्तद्गौरवम् । अतिरिक्तेन्द्रियकल्पनेऽपि देहावयवानां नियतोपकारकत्वमिष्यते । अस्तु तर्ह्ययमेव पक्ष इत्यत्राह । भेदाम्नानादिति । अयं भावः भौतिकाद्देहात् इन्द्रियाणां सात्विकाहङ्कारोपादानकत्वेन भेदाम्नानात्—कॢप्तिप्रसङ्गाभावात् बाधाच्च मुधाऽत्र लघुपक्षोक्तिरिति ॥ ३८ ॥

इत्येकेन्द्रियवादभङ्गः ॥

यदेतेष्विन्द्रियेषु मनसः कैश्चिन्नित्यत्वमुक्तम् । तदिन्द्रियोत्पत्तिश्रुत्यैव निरस्तम् । प्रकृत्येकदेशपरिणतिमेन इति सिद्धे विभुत्वानुमानानि च बाधितानि, यत्तु मनो विभु सर्वदा स्पर्शरहितद्रव्यत्वात्, ज्ञानासमवायिसंयोगाधारत्वात् नित्यत्वे सति द्रव्यानारम्भकद्रव्यत्वात् आत्मादिवदित्यादि तदेतत्सर्वमात्माणुत्ववादिनम्प्रति न शोभते ज्ञानासमवायिसंयोगाधारत्वञ्चात्ममनसोरसिद्धम् । ज्ञाननित्यत्वस्य साधयिष्यमाणत्वात् नित्यत्वे सति द्रव्यानारम्भकद्रव्यत्वादित्येतच्चोत्पत्तिश्रुत्याऽपहृतविशेषणम् । द्रव्यानारम्भकत्वं च भवतामवयव्यनारम्भकत्वं, तच्चास्माकमणुष्वपि विद्यते । यदपि सर्वदा विशेषगुणशून्यद्रव्यत्वात् कालवदिति । असिद्धमिदमौपनिषदानाम्, त्रिगुणद्रव्ये मनसि सत्वादिविशेषगुणसम्मतेः, दूरस्थस्मृत्या मनोविभुत्वं कल्प्यमिति चेन्न । अनुभवसंस्कारप्रत्यासत्त्यैव तदुपपत्तेः । एवमन्यदपि, तदिहैकादशानामणवश्चेति सूत्राभिप्रेतमविभुत्वमातिष्ठते । "सूक्ष्माणीति" ॥

**मू० सूक्ष्माण्येकादशाक्षाण्यपि न यदि कथं देह-
तो निष्क्रमादिश्चित्ताणुत्वे तु सर्वेन्द्रियसमुद-
यने धीक्रमोऽप्यस्तु मानम् ॥ वृत्त्याढ्यादे-
र्दवीयः प्रमितिजनकता वृत्तिराप्यायनार्थैः
भूतैर्जातप्रसर्पः श्रुतिमितमपि चानन्त्यमेषां
स्वकार्यैः ॥ ३९ ॥**

विपक्षे बाधकं वदन्नेवाच प्रमाणमाह । "न यदीति" । परोक्षानुमानानाञ्च विपक्षे दण्डश्च नास्ति सर्वत्र कार्योपलब्धेरिन्द्रियान्तराणामिव सञ्चारादप्युपपत्तेः, तमुत्क्रामन्तं शरीरं यदवाप्नोति इति श्रुतिस्मृतिसंवादाच्च, आदिशब्देन देहान्तरावाप्तिगत्यागतिसङ्ग्रहः न चैतेषां जीववदणुत्वं विशेषतोदृश्यते तथा सति श्रोत्रादीनामनेकाधिष्ठानवर्तित्वं स्पर्शनरसनयोश्च पृथुप्रदेशव्यापित्वं न स्यात् सिद्धेऽपि ह्यणुत्वे वि*कासतया वृत्तिविशेषद्वाराप्यायकप्रचयाद्वा पृथुत्वमङ्गीकार्यम् । अन्यथा पिपीलिकादिशरीरस्थस्य स्पर्शनस्य गजादिशरीरप्रवेशे तादृशपृथुत्वासिद्धिप्रसङ्गात् गजादिभ्यः कीटादिशरीरप्रवेशे तु तादृशस्सङ्कोचः । मनसस्तु परमाणुत्वेऽपि सद्वारकविषयसम्बन्धसिद्धेरविरोधः । तत्र "युगपज्ज्ञानानुत्पत्तिर्मनसोलिङ्गमिति" परोक्तं मनोविभुत्ववादप्रतिषेधोपयोगादनुमन्यते । "चित्ताणुत्वे त्विति" । अयम्भावः व्यासङ्गदशायां समग्रैरपि बाह्येन्द्रियैर्युगपज्ज्ञानानि नोत्पद्यन्ते दीर्घशष्कुलीभक्षणादिषु च व्यासङ्गदृष्टान्तेन धीक्रमोऽनुमेयः क्रमभाविकारणान्तरसापेक्षो ह्यसौ, न चादृष्टभेदोऽपेक्ष्यः तस्य दृष्टोपहारेण चरितार्थत्वात् अन्यथाऽतिप्रसङ्गात् प्रतिबन्धकाभावे ह्यदृष्टोप-

* विकासशक्त्येति पाठान्तरम् ।

नीतदृष्टसामग्र्यैव कार्यसिद्धिर्नियता तदिह कारणान्तरं यदि विभु स्यात् युगपदनेकेन्द्रियसम्बन्धितया युगपत्पञ्चविषयज्ञानोत्पत्तिप्रसङ्गः, एवं देहपरिमाणत्वेऽपि । न च मनसस्ततोऽपि सूक्ष्ममध्यमपरिमाणत्वे प्रमाणमस्ति विभुनोऽपि मनसः केनचिच्छरीरावयवेनावच्छिन्नतयैव कार्यकरत्वमिति चेन्न । तस्य निष्कम्पत्वेऽन्यत्र कारणाभावप्रसङ्गात् सञ्चारित्वे तु तादृशवेगवतस्तस्य देहातिरिक्तत्वमणुत्वं च साधीयः किमन्तर्गडुना व्यापकेन मनसा । यस्तु सर्वेषां देहावयवानां यथासम्भवमवच्छेदकत्वं ब्रूयात् तस्य प्रागुक्तप्रसङ्गानतिवृत्तिः, अतिगौरवञ्च यद्येवमिन्द्रियाणि देहान्तस्थानि तथा कथं चक्षुश्श्रोत्रयोर्दूरस्थग्राहकत्वमित्यत्राह । "वृत्त्येति" । वृत्तिद्वारा सम्बन्धादित्यर्थः । ननु वृत्तिर्यदि स्वरूपं देहपरिच्छिन्नत्वान्न दूरस्थे वृत्तिः धर्मोऽपि न धर्मिणमतिवर्ततेत्यत्राह । "वृत्तिरिति" । भूतैः सहेति वा चारैः पश्यन्तीतिवद्वा योज्यम् । यद्यप्यप्राप्यकारित्वं हेतुकगत्या हठा*त्कारेण वक्तुं शक्यम् । तथाऽपि दिवीव चक्षुराततमित्याद्यागमिकव्यवहारस्वारस्यबाधाभावाद्वृत्तिद्वारा प्राप्त्युक्तिः । नयनरश्मिगतितत्प्रतिघातादिकञ्च भाष्योक्तम् । ननु प्राणशब्दनिर्दिष्टानीन्द्रियाणि प्रक्रम्य सर्व एवानन्ता इति श्रुत्या सर्वेषामिन्द्रियाणां विभुत्वं ग्राह्यमित्यत्राह । "श्रुतिमितमिति" । यथोक्तं भाष्ये हृदयस्थानाञ्चेन्द्रियाणां तत्तन्नाडीभेदैस्तत्तत्प्रदेशविशेषप्रसर्पात् तत्रतत्र कार्यकरत्वञ्चावधातव्यम् । अत्र सर्वे प्राणा अनूत्क्रामन्तीति श्रुतेस्सङ्कोचकाभावात् मनष्षष्ठानीत्यादेश्च न्यूनसंख्याव्यवच्छेदमात्रेणाप्युपपत्तेः कर्मेन्द्रियाणां प्रतिशरीरमुत्पत्तिविनाशं व्यष्टिसमष्टिभावराहित्यञ्च वदन्तः प्रत्युक्ताः ॥ ३८ ॥ इतीन्द्रियाणां सूक्ष्मत्वम् ॥

* हठात्कारेणेति पाठश्चिन्तनीयः हठादित्यानुपूर्वीकस्याव्ययस्यानुपलभ्यमानत्वात् । बलात्कारेणेतिवद्वा साधुभावः समर्थनीयः ।

यदुक्तं "वृत्त्यात्त्यादेर्देवीयः प्रमितिजनकतेति," तत्र बाह्यै रेवमुच्यते वृत्तिप्रसरणे क्रमयौगपद्यविकल्पायोगाद् दूरस्थविषया प्राप्तिर्न भवतीति अतो यद्रूपग्राहकं यच्छब्दग्राहकमिन्द्रियं तदप्राप्य ग्राहि यथा मन इति तत्र तावत् प्रत्यनुमानमाह । "प्राप्येति" ।

**मू० प्राप्यग्राहीन्द्रियत्वाद्विमतमितरवत्प्राप्तिरुक्तप्रकारा वृत्तिं दृष्टेर्निरुन्द्धे विरलपटनयादम्बुकाचादिरच्छः । नो चेद्गृह्येत योग्यं सममिह निखिलं निष्फले छादकादौ स्थैर्ये तद्योग्यभावो न हि गलति समा सन्ततिस्त्वन्मतेऽपि ॥ ४७ ॥**

ननु गृह्यमाणस्य वर्तमानक्षणस्य पूर्वक्षणवर्तीन्द्रियसम्बन्धायोगादिन्द्रियान्तराणामप्यसम्बन्धग्राहकतया साध्यविकलो दृष्टान्तः । मैवम् क्षणभङ्गकु*सृतेः प्रागेव निरासात् ॥

अतिप्रसङ्गोऽसम्बन्धग्रहणे स्यात्समन्त्विदम् ।
सम्बन्धग्रहणेऽपीति न सद्योग्यान्वितग्रहात् ॥
गृहीतस्येष्यते कश्चित्सम्बन्धोऽव्यभिचारतः ।
न सम्बन्धस्य सर्वस्य ग्रहणं व्यभिचारतः ॥

नात्र कर्मेन्द्रियैरनैकान्त्यं यथा स्वं व्यापारेण स्पृष्टग्राहिशब्देन विवक्षितत्वात् तस्य च सर्वत्र प्राप्तविषयत्वात् न च मनसा तस्यापि बाह्येन्द्रियद्वारा बहिर्विषयप्राप्तेः, यद्वा बाह्यज्ञानेन्द्रियत्वादिति मनः कर्मेन्द्रियव्यवच्छेदः । ननु उन्मिषितमात्रं चक्षुश्चन्द्रं गम-

* दुर्मार्गस्येत्यर्थः ।

यति । न चैकस्मिन्क्षणे तावान्देशो वृत्त्या लङ्घयितुं क्षमः क्रमे तु प्रतिपरमाण्ववच्छेदं विलम्ब्य गमनात् प्रतीतिरपि विलम्बेत दूरासन्नग्रहणकालतारतम्यं च स्यात् । मैवम् उदयत्येव सवितरि सकलदिग्व्यापिन्यां प्रभायामिव इन्द्रियवृत्तेस्तादृशवेगातिशयस्याविस्मयनीयतया पद्मपत्रशतवेधनीत्या यौगपद्याभिमानोपपत्तेः । ननु सिद्धे गमने यौगपद्याभिमानक्लृप्तिः नात्र तत्सिद्ध्यतीति चेन्न स्वाभ्युपगतसाम्यात् बुद्धिसन्ततेश्शरीरान्तरगमनं दीपालोकादिगमनञ्च दृष्टं कल्प्यं वा नाद्यः, त्वयाऽप्यनभ्युपगमात्, द्वितीये तु तथेहापि किं न स्यात् न देहान्तरादौ गतिः प्राप्तिर्वा किन्तु तत्र तत्र देशकालनैरन्तर्येणोत्पत्तिमात्रमिति चेत्तथेहापि त्वया कल्प्यताम् अविशेषात् । ननु प्राप्तिः कल्प्या तदभावस्त्वनुपलम्भमात्रेण सिद्ध्यतीति चेन्न । योग्यानुपलब्धेरभावात् अतीन्द्रियस्य हि प्राप्तिरपि तथैव अतो नात्र बाधशङ्का । ननु दूरस्थत्वाद्विषयेन्द्रिययोः प्राप्तिर्बाधितेत्यत्राह । "प्राप्तिरिति" । वृत्तिद्वारेति शेषः । उक्तप्रकारेति पुनरनुवचनं वाद्यन्तरोक्तप्राप्तिप्रकारनिरासार्थम् । अथापि क्वचिद्व्यवहितग्रहणदर्शनात्प्रमाणतस्तर्कतश्च बाधः स्यादित्यत्राह । "वृत्तिमिति" । अच्छः—आलोकाद्यनुप्रवेशानुगुणसन्निवेशवानित्यर्थः । दृश्यते ह्यनाविलसलिलमूलप्रविष्टस्सूर्यालोकः तत्रत्यं च तत्प्रतिफलनदीप्तं शिलाविशेषादि यथावत्प्रसरमत्यन्तनिरोधं च परिहर्तुं विरलपटनिदर्शनम् । अत एव हि तत्राविशदप्रतिभासः सरन्ध्रत्वे स्फटिकादिषु सलिलगलनादिप्रसक्तिः स्यादिति चेन्न । आलो*कप्रकाशवत्सु सर्वेषु सलिलप्रवेशस्य त्वया दुर्वचत्वात् अच्छिद्रपस्त्रकसंपुटस्थगितकर्पूरकस्तूरिकादिगन्धनिस्सरणन्यायाच्च द्रव्यविशेषप्रवेशानुगुणसन्निवेशवत्त्वं काचादेरङ्गीकार्यम्

* प्रवेशवत्स्विति पाठान्तरम् ।

अप्राप्यग्रहणेऽपि हि कुड्यादिव्यवहितं न ग्राह्यं काचादिव्यवहितन्तु ग्राह्यमिति वस्तुस्वभाववैचित्र्यं त्वयाऽपि स्वीकृतम् ।

नीरन्ध्रेऽप्यम्बुकाचादौ दृक्प्रभादेः प्रवेशनम् ।
वस्तुस्वभाववैचित्र्यादिति केचित्प्रचक्षते ॥

सर्वत्र स्वरूपयोग्यत्वायोग्यत्वाभ्यामेव ग्रहणाग्रहणे । तत्र च्छादकतदभावौ निरर्थकौ इति वदतां बाधकं स्वोक्तानुमानस्य विपक्षे बाधकम् अयस्कान्तनिदर्शनेऽपि च्छादकनैष्फल्येऽतिप्रसङ्गमभिप्रेत्याह । "नो चेदिति" । इह योग्यं निखिलं सर्वस्मिन्जगति स्वरूपयोग्यं सर्वं समं गृह्येत अविशेषाद्युगपदेवेत्यर्थः । आदिशब्देन अतिदूरत्वकालविप्रकर्षादिकं दृष्टान्ततया गृह्णाति । छादकाभावः स्वरूपतस्सहकारि न तु प्राप्तिविरोधिप्रत्यनीकतयेति चेन्न । आलोकादिप्राप्तिविरोधिच्छत्रादिन्यायस्यात्रानपायात् । न च यत्र क्वचिच्छादकाभावः सह कुर्यात् अतिप्रसङ्गात् किन्तु नयनार्जवदेशे अयं च नियमः प्राप्तिविरोधिनिवृत्तिरूपतयेति युक्तमुत्पश्य । रूपग्रहणसामग्र्यामेव प्रदीपादि च्छादकं प्रभाप्रतिघातार्थं दृष्टम् । उन्मीलितनिमीलितचक्षुषः पिठरकावृतदीपप्रभान्यायेन पूर्वप्रसृतनयनप्रभाया विनाशादतिक्रमाद्वा ग्राह्यग्रहणाभावः अत्र गृहीतच्छन्नमपि गृह्येतेति प्रसङ्गारूढम् । तदा सममिति पूर्वमिवेत्यर्थः तच्च क्षणभङ्गेन योग्यायोग्यभेदकल्पनया परिजिहीर्षतः सर्वलोकप्रसिद्ध्यनुसारिणा स्वमतेनोत्तरमाह । स्थैर्यं इति । अयम्भावः छादनदशायां पूर्वगृहीतस्य स्वरूपयोग्यत्वं स्थितं नष्टं वा । आद्ये कथं न गृह्येत प्राप्तेरप्रयोजकत्वात् । द्वितीये नाशकं न दृष्टं छादकमेव स्वरूपयोग्यतानाशकमिति चेन्न । अव्यवहितदेशस्थैरप्यग्रहप्रसङ्गात् यं प्रति व्यवधिस्तम्प्रति योग्यता नष्टेति चेत् छादकापगमेऽप्यग्रहप्रसङ्गात्

तदपगमात्पुनरुत्पद्यत इति चेन्न हन्त अदृश्यमानानन्तोत्पत्तिनाश-कल्पनात् प्रतिपुरुषनियतानन्तयोग्यताभेदकल्पनाच्च वरं प्रदीपप्रभा-न्यायेन प्राप्तिविघातकतया छादकसाफल्यस्वीकारः । परपक्षेणाऽपि प्रस-ङ्गस्थैर्यमाह । समेति । अपिरन्वारोहद्योतकः क्षणभङ्गपक्षेऽपि योग्य-क्षणादयोग्यक्षणोत्पत्तौ कारणक्षणस्य सर्वैरदृष्टस्तत्तत्स्वरूपातिरिक्त-शक्तिभेदो वा सहकारिभेदो वा कल्प्यः उभयमपि स्वमतबाधकं दृष्टं छादकमेवायोग्यक्षणोत्पादनसहकारीति चेन्न अपसिद्धान्तात् छादकस्य किञ्चित्करत्वानपायात् तोयादिव्यवहितेऽप्यग्रहप्रसङ्गात् छन्नस्य च सर्वादृश्यत्वप्रसङ्गात् नेत्रसन्निकृष्टेन पद्मकरतलादिना दवीयस्तरदिवाकरे क्षणोत्पत्तेरत्यद्भुतत्वाच्च तस्मादस्मदुक्तमेव छाद-कसाफल्यम् उक्तातिप्रसङ्गस्सांख्यादिपक्षेऽपि समः । यदि ह्यहङ्कारविका-रयोश्चक्षुश्श्रोत्रयोर्यावद्देशस्थविषयग्राहित्वं दृष्टं तावत्पृथुत्वं तत्तच्छ-रीरोत्पत्तिसमयसिद्धं तत्राधिष्ठानाद्बहिरवस्थितांशो वृत्तिरित्युच्यत इति तदा निमीलनाद्यवस्थायामपि ग्राहकत्वप्रसङ्गः प्राप्तेरनपायात् । अथ पृथ्वग्रा संतताऽपि बहिर्वृत्तिर्दीपप्रभान्यायेन विनश्यति अत एव च्छन्न-ग्रहणाभाव इति तथात्वेऽप्येकस्यादृश्यमानपृथुत्वाणुत्वाद्यनन्तावस्था । स्वतोभिन्नाभिन्नवृत्त्यंशनाशः तन्नाशेऽपि स्वरूपावस्थानमित्यादिबहु-विधकल्पनापात इति । यत्तु कैश्चिदुच्यते निष्क्रान्तमात्रमेव चाक्षुषं तेजो बाह्येन बहुदेशव्यापिना चन्द्रसूर्यादिज्योतिषा सम्बलितं तावत्प्रथिमानमवयविनमारभते तेन च सम्बन्धादुन्मिषितस्य दूरस्थग्रहणं दूरासन्नयोर्युगपद्ग्रहणं च सिध्येदिति तदयुक्तं निष्क्रम-णकल्पनस्य गुरुत्वात् । अनिष्क्रान्तमेव किं नावयविनमारभेत आन्तरनिष्क्रमणवद्बाह्यप्रवेशोपपत्तेः । अपि चास्मिन्पक्षे त्रिभुवनविव-रव्यापिना तेजसा सह चाक्षुषतेजस्संवलनात्तेन सम्बद्धं सर्वं युगप-

द्ग्रासेत पश्चाद्भागादिस्थितं च । अथार्जवावस्थानमपेक्षणीयमित्यु-च्येत तदाऽस्मद्व्याप्तेस्सिद्धत्वात् अन्यथा दर्पणतरङ्गादिसन्निधाने स्वमुखादिग्रहणं न स्यात् । किं च निमीलिताक्षस्यापि प्राङ्निष्ठ्यूतनयनमहस्सम्भवबाह्यालोकानुवृत्त्या दृश्यदर्शनानुवृत्तिः स्यात् अतः प्रागुक्तप्रकारैव प्राप्तिरिति ॥ ४० ॥ इति चक्षुरादेः प्राप्यकारित्वम् ॥

भवतु चक्षुषस्तैजसाप्यायितत्वान्मणिप्रभान्यायेन काचिद्वृत्तिः श्रोत्रस्य त्वाकाशाप्यायितस्य सा कथमित्यत्राह । शब्दमिति ॥

**मू० शब्दं गृह्णाति दूराभ्युदितमपि बहिस्सन्तता श्रोत्रवृत्तिर्दिग्भेदासन्नतादिग्रहणमपि तदा तत्र तत्सन्निधानात् । इत्येकेऽन्ये तु दूरान्तिकगतजनताशब्दधीकालभेदात् श्रोत्रायातस्य तस्य ग्रहमनुमितिमप्याहुरस्मिन्दिगादेः ॥४१॥**

विकारिद्रव्यस्य तावत्स्वरूपत आप्यायकद्वारा वा तत्र तत्र वृत्तिरविरुद्धा न चानुपलम्भविरोधः योग्यत्वाभावात् अन्यथा स्वेष्टमपि भज्येत । तत्रापि हि बुद्धिसन्ततेः शरीरान्तरगमनमालोकादिगमनं च दृष्टं कल्प्यं वा । नाद्यः अशक्यत्वादनभ्युपगमाच्च । न द्वितीयः तद्वदत्रापि कल्पनोपपत्तेः, न हि तत्र गतिः प्राप्तिर्वा कल्प्यते किन्तु तत्र तत्रोत्पत्तिमात्रमिति चेत्तथात्रापि त्वया कल्प्यतां अविशेषात् न च शब्दात्मकाः पुद्गलाः श्रवणदेशमायाता दृश्यन्त इति युक्तं शब्दस्य रूपादिवद्गुणत्वोपपत्तेः पुद्गलत्वायोगात् । नापि शब्दस्यैवागमनं बाह्यैकेन्द्रियग्राह्यतया श्रुत्यादिभिश्च रूपादेरिवाद्रव्यस्य क्रियानुपपत्तेः । न च शब्दस्य तद्व्यञ्जकस्य वा वीचीतरङ्गन्यायकल्पना अत्यन्तगौरवात्, न च व्याप्तं श्रोत्रं युगपत्सार्वत्रिकशब्दोपलम्भप्रस-

ङ्गात्, न च प्रतिनियतैः प्रदेशैश्शक्तं नियामकाभावात् श्रोत्रसमवायेन शब्दो गृह्यत इति पक्षस्तु इन्द्रियाणामभौतिकत्वस्थापनयाऽपास्तः अतो यथोपलम्भं तत्तज्जन्तुषु स्ववृत्त्या तावद्देशव्याप्तं श्रोत्रं तत्तद्देशे शब्दं गृह्णातीति । एवमनभ्युपगमे दोषमभिप्रेत्याह । दिग्भेदेति । यदि श्रोत्रवृत्तिस्तत्रतत्र न स्यात् कथं तद्विशिष्टः शब्दो गृह्येत न ह्यत्र प्राच्यादिप्रतिनियतं लिङ्गं दृश्यते । नापि दूरासन्नत्वनियतम्, अतश्शब्दस्वरूप इव तदुत्पत्तिदेशविशेषेष्वपि श्रोत्रवृत्तेः शक्तिः कार्यकल्प्या। आसत्तितारतम्यानुरोधेन विशदाविशदावभासश्च चक्षुर्वृत्तिनयेन नेतव्यः । अत्र पक्षान्तरं स्थापयितुं सांख्यानुसारिणां पक्षोऽयमिति निगमयति । इत्येक इति । बुद्ध्यन्तरानुगुणमतान्तरमाह । अन्ये त्विति । दूरस्थस्ताड्यमानभेर्या दण्डकोणाभिघातात्पश्चाद्विलम्बेन शब्दं शृणोति वादकास्तदासन्नाश्च विलम्बितं तदेतद्गन्धाश्रयविपर्यन्यायमन्तरेण कथं स्यात् अत एवानुवातप्रतिवातयोरतिदूरानतिदूरश्च शब्दो गृह्यते बहिरन्तर्गृहगतानाञ्च दूरस्थशब्दग्रहणे स्फुटास्फुटधीश्च अतः श्रोत्रप्रदेशायातभूतधर्मस्य शब्दस्य ग्रहणं तस्यायातत्वमाश्रयद्वारकं शब्दगन्धसूर्यालोकरत्नप्रभादयो धर्म्यतिवर्तिनो गतिमन्तश्च इत्यात्मसिद्धिवाक्ये शब्दशब्दो गन्धशब्दवदाश्रयलक्षकः ।

गुहासौधादिसंक्षोभः प्रतिशब्दश्च जृम्भते ।
निस्साणादिप्रणादेन तदेतत्पक्षसङ्गतम् ॥

नन्वेवं दिगादिविशिष्टोपलम्भः कथमित्यत्राह । अनुमितिमिति । आदिशब्देन दूरासन्नत्वग्रहः दृष्टान्तप्रदर्शनं च ।

यथा मयूरवीणादेः शब्दोऽयमिति गृह्यते ।
तथा प्राच्यादिजातोऽयमिति लिङ्गानयाविधात् ॥

तत्र यद्यपि शब्दस्य विशेषः कोऽपि दुर्वचः ।
तथाऽपि विदितस्तैस्तैर्लिङ्गं स्यात्सम्मतेष्विव ॥

नन्विमौ द्वावपि पक्षौ हाठि*कौ पूर्वत्र दिगादिषु श्रोत्रस्य शक्तिकल्पनागौरवात् उत्तरत्र दुर्वचलिङ्गदर्शनक्लृप्तिरिति । हन्त एवं वदन् किं शब्दग्रहे दिगादिग्रहणमेव नास्तीति मन्यते सदपि वा निष्कारणकं सकारणमपि वा कारणान्तरसिद्धमिति । नाद्यः सर्वलोकधीविरोधात् सामग्रीवैकल्यात् कदाचिद्दिगादिरहितधीः न द्वितीयः आगन्तोरहेतुकत्वविरोधात्, न तृतीयः आगमादेरत्रासम्भवात् । भ्रान्त्याऽत्र दिगादिरिति चेन्न । प्रतिपुरुषनियतद्विगध्यासहेतुभूतधर्मविशेषग्रहाभावात्, भावेऽत्रा तत एव तत्तदनुमानोपपत्तेः तद्वदेव च दिगादेरपि उपलम्भोपपत्तेः । न चाबाधितांशे भ्रान्तिक्लृप्तिर्युक्ता अतःप्रत्यक्षतोऽनुमानतोवा च दिगादि ग्रह इत्यन्यतरपक्षोऽनतिक्रमणीयः । शब्दस्य नित्यविभुत्वात्तदाश्रितत्वाद्वा श्रोत्रेण नित्यसम्बन्ध इति वादस्त्वदूव्यसरे निरसिष्यत इति ॥ ४१ ॥ इति श्रोत्रवृत्तिशब्दाश्रयागमनपक्षो ॥

इन्द्रियचिन्तानन्तरं भूतचिन्ता प्राप्ता प्रथममाकाशे चार्वाकैरपि सम्मन्तव्यं प्रमाणविशेषं पुरस्करोति । प्रत्यक्षमिति ॥

**मू० प्रत्यक्षं व्योम नीलं नभ इति हि मतिश्चक्षुषैवास्मदादेः कूपोऽसौ रन्ध्रमेतत्पतति खग इहेत्यादिधीश्चात्र मानम् । आधारोऽत्रातपादिर्यदि भवति कथं तस्य चेहेति बोधस्तस्यांशैश्च त्वयौ तच्छिथिलगति न च व्योमवागातपादौ ॥ ४२ ॥**

* हठपरिगृहीतावित्यर्थः ।

कथमित्यत्राह । नीलमिति धूम्रादेरुपलक्षणमेतत् आरोपितं नभसि तलत्वादिवन्मलिनत्वादिकमिति चेत् असावारोपश्चाक्षुषोऽन्यो वा । आद्येऽधिष्ठानमपि चाक्षुषमेष्टव्यम्, अन्यथाऽतिप्रसङ्गात् द्वितीयस्त्वसम्भवी निमीलिताक्षस्य तादृशारोपादृष्टेः, अत एव अनुमिते नभसि नैल्यारोप इत्यपि निरस्तम् । न च नीलं नभ इति धीरेव नास्ति विश्वविसंवादात् नाप्यसावचाक्षुषः अस्मदादिचक्षुर्व्यापारानुविधानात्, नभसि विततानां पार्थिवावयवानां कृष्णगुणमात्रं चक्षुषा गृह्यत इति चेन्न । नीलं नभ इति धर्मिपर्यन्तबुद्धेः, गुणिलिङ्गत्वाच्चात्र नीलादिशब्दानां एतेन नीलरूपस्मृतिप्रमोषोऽयमिति पक्षोऽपि निरस्तः । ननु नभसि स्वतो नैल्याभावात् पञ्चीकृतेऽप्यस्मिन्नैल्यस्य पार्थिवांशमात्रनिष्ठत्वात् तस्मिन्नेवांशे स्यादसौ चाक्षुषधीः । मैवम् । तस्य नभश्शब्दार्थत्वायोगात् नीलपटन्यायस्य चात्र ग्राह्यत्वात् बालातपसन्निधावरुणं नभ इत्यादिबुद्धेः । तत्राप्यरुणातपग्रहणमात्रमिति चेत्कस्तर्हि तत्र नभश्शब्दार्थः । न ह्यनेकार्थोऽयं शब्द अनुवृत्तमनतिप्रसक्ति च निमित्तं दुर्लभं पृथिव्यूर्ध्वत्वादेस्तथात्वाभावात् चन्द्रिकादिविशेषानादरेण विरलावस्थितद्रव्यमात्रं नभ इति चेन्न वियति विरला चन्द्रिकेत्यादिपृथग्व्यपदेशात् । वैरल्यदर्शनमपि नभःप्रत्यक्षतामन्तरेण न घटते तत्तन्मध्यप्रदेशानां तैस्तैरस्पृष्टता हि विरलता । तथा च मध्यदेशभूतं नभः प्रत्यक्षम् । परस्परासंयोगमात्रं वैरल्यमिति चेन्न भिन्नकालेषु गुणादिषु च विरलधीप्रसङ्गात् वर्तमानानामासन्नदेशस्थानां द्रव्याणामसंयोगो विरलतेति चेन्न । चन्द्रिकादिष्वसंयुक्ततेज कणानाम् आसन्नदेशतया नभस एव ग्राह्यत्वात् विरलविरलतरादिबुद्धौ असंयोगाविशेषे मध्यदेशाल्पत्वभूयस्त्वग्रहणमन्तरेण का गतिः । दूरदूरतरादिस्थितिरिति चेत् तथाऽपि दूरासन्नदेशतया नभः प्रत्यक्षमेव ।

दिशस्तत्र देशत्वं स्यादिति चेत्, उपाध्यतिरेकिण्यामपि तस्यां प्रत्यक्षत्वस्य नभस्समानचर्चत्वात् दीर्घेण ह्रस्वेन च सृष्टं योग्यत्वमेव दूरत्वमासन्नत्वं च अतोनात्र प्रदेशबुद्ध्यपेक्षेति चेन्न। तयोस्ततत्स्वरूपत्वेऽतिप्रसङ्गात्। अतिरेके तु देशविशेषस्थित्युपलम्भमन्तरेण तदसिद्धेः। अत्र चानुपमेयोपलम्भान्तरमप्युदाहरति। कूपोऽसाविति। कूपरन्ध्रादयोहि तत्तद्देशविशेषतया सर्वलोकप्रत्यक्षसिद्धाः आवरणाभावमात्रं तु निरसिष्यते। पक्षिणश्च पतनदेशतया नभः प्रत्यक्षयामः तत्र इहप्रत्ययस्यान्यथासिद्धिमाशङ्कते आधार इति। इहेति प्रतीयमानत्वमात्रमिहाधारत्वम्। परिहरति। कथमिति। इह नभस्यातपादिरिति व्यतिरेकनिर्देशान्नातपादिरिह शब्दार्थः स्यादिति भावः अचोदयनाद्युक्तमाशङ्कते। तस्यांशैरिति। आतपाद्यंशास्तदाधारीकृत्यर्थः। दूषयति। त्र्यणुकाविति। परैस्त्र्यणुकानामप्रत्यक्षद्व्यणुकाश्रितत्वस्वीकारादंशैरिह प्रतीतिनिर्वाहस्तत्र कुण्ठित इत्यर्थः। माभूत्स्वांशैः त्र्यणुकानामिहेति धीः त्र्यणुकसमुदायमिहेति निर्दिश्य प्रत्येकं तदाधेयतयोपचर्यतामित्यत्र क्लिष्टगतौ लोकव्यवहारं प्रतिपत्स्यति। न चेति। इह नभसि त्र्यणुकम् इह व्योम्न्यातपः इत्यादि व्यवहारे त्र्यणुकतत्समुदायादिव्यतिरिक्ते कुत्रचिन्नभःपर्यायाणां प्रयोगः प्रसिद्धः सर्वलोकप्रतीतिव्यवहारोल्लङ्घनं तु सर्वक्षोभकं साहसमिति भावः। चशङ्काद्योतकोऽवधारणार्थो वा ॥ ४२ ॥ आकाशस्य प्रत्यक्षत्वे परोक्तं बाधकं शङ्कते। रूपेति ॥

**सू० रूपस्पर्शाविभक्तत्वान्न भवति गगनं दर्शनस्पर्शनार्हं घ्राणश्रोत्रे रसज्ञाऽप्यवगमयति न द्रव्यमन्यत्त्वबाह्यम्। तस्मान्नाध्यक्षवेद्यं वियदिति यदि न प्रत्ययस्यापरोक्ष्यात् पङ्क्तीका-**

**रेण नैल्यं पटमलिनिमवद्वाषितं वोपकुर्यात् ॥ ४३ ॥**

नभो न चाक्षुषं रूपशून्यद्रव्यत्वात् नापि स्पार्शनं स्पर्शशून्यद्रव्यत्वादिति हेतुद्वयविभागः । अन्येषां तु बाह्येन्द्रियाणामत्रासंभवमाह । घ्राणेति । घ्राणादीनि हि स्ववेद्यगुणाश्रयमपि नावगमयन्ति किं पुनर्द्रव्यान्तरमिति भावः । मानसप्रत्यक्षमिह दूरनिरस्तमित्याह । अन्यदिति तुशब्दोऽत्रात्यन्तासम्भवपरः । अबाह्यम् आत्मतद्धर्मव्यतिरिक्तेषु न स्वातन्त्र्येण प्रवर्तत इत्यर्थः । संकलितमाह । तस्मादिति । अस्मदादीति विशेषणीयं चोद्यस्य दत्तोत्तरत्वाभिप्रायेण प्रतिवक्ति । नेति । अभिप्रेतं व्यनक्ति प्रत्ययस्येति । अयम्भावः न रूपादिविरहाच्चाक्षुषत्वहानिः रूपादिप्रत्यक्षत्ववद्यथादर्शनं व्यवस्थोपपत्तेः । प्रतिप्रयोगश्च विगीतमस्मदादिबाह्येन्द्रियग्राह्यं बाह्यत्वे सत्यस्मदाद्यपरोक्षधीविषयत्वात् अविगीतवत् । नात्र हेतुरसिद्धः परिशेषप्राप्तेः । न तावदवागमिकी नभःप्रतीतिः तदनभिज्ञानामपि सम्भवात् । नाप्यानुमानिकी सिद्धेऽपि तदनुमाने अनधिगततादृशानुमानानां नभःप्रतीतेः । तदेवमाकाशस्यागमानुमानादिविषयत्वायोगात् आबालपण्डितमनुभूयमानत्वाच्च तद्बुद्धिरपरोक्षेति सिद्धम् । नन्वसिद्धस्य सिद्धस्य वा नभसः प्रत्यक्षत्वसाधनं नाद्यः अनुमानकथाबाह्यत्वात्, न द्वितीयः अनुमानतस्तत्सिद्धेस्त्वदनभ्युपगमात् प्रत्यक्षतस्तत्सिद्धेरस्मदनभ्युपगमादिति मैवम् उभयसम्मतादागमतोऽपि तत्सिद्धेः । आस्तामागमः पृथिव्याद्यतिरिक्तस्य नभःप्रतीतिविषयस्य कस्य चिदुभयसंमत्या पक्षीकारोपपत्तेः । अन्यथा कथमन्यत्र त्वदुक्तप्रत्यक्षत्वानुमानं जीवेत् सर्वलोकप्रत्यक्षविरुद्धं च तत् । तथापि तत्स्वीकारे बुद्धिव्यतिरिक्ततया बाह्यार्थस्सर्वोऽप्यप्र-

त्यक्ष इति वदन्सोऽयान्तिक एव समर्थः स्यात् । तदेवं नीरूपस्यापि नभसश्चाक्षुषत्वं निर्व्याघातं भाष्ये त्वस्य पञ्चीकरणेन रूपवत्तया चाक्षुषत्वाविरोधवचनं वैभ*वात्स्यात् । यथाहुरूपरूपिरूपसमवेतरूपैकार्थसमवेतानां चाक्षुषत्वमविशिष्टमङ्गीक्रियते तथा रूपिद्रव्यसम्वलितस्यापि क्वचित्स्यात् न चातिप्रसङ्गः समचर्चत्वात्, न हि रूपिद्रव्यं रूपैकार्थसमवेतं वा चक्षुर्ग्राह्यं योग्यतानियमस्य दुर्लङ्घत्वादिति । तदेतदभिप्रेत्याह । पञ्चीकारेणेति ॥ ४३ ॥ इत्याकाशस्यास्मदादिप्रत्यक्षत्वम् ॥

अथाकाशस्यानुमानतस्सिद्धिं निराकरोति । शब्दस्येति ॥

**मू० शब्दस्याधारभूतं कथमपि गगनं शक्यते नानुमातुं स्वेच्छातः पारिशेष्यक्रम इह कथितोऽतिप्रसङ्गादिदुःस्थः ॥ निष्क्रान्त्यादेर्न तद्धीस्सति नभसि यतो नास्ति कुड्यादिकेऽसौ रोधस्स्वावारकैश्चेत्तदभवनवशान्निष्क्रमादिश्च सिद्ध्येत् ॥ ४४ ॥**

शब्दः क्वचिदाश्रितो गुणत्वादित्येतावता तावन्न पृथिव्याद्यतिरिक्तशब्दाश्रयसिद्धिः सर्वस्य किञ्चिद्भावात् परिशेषहेतूनां तु विपक्षे बाधकाभावात् न हि शब्दस्य पृथिव्याद्याश्रितत्वे किञ्चिदनिष्टं स्यात् पुष्पादिगन्ध इतिवद्भेर्यादिशब्द इति सर्वलोकबुद्ध्यनुविधाने कल्पना च लघ्वी । शब्दो विभुगुणो न भवति बाह्येन्द्रियग्राह्यगुणत्वादिति विपरीतपरिशेषस्यापि सुशकत्वात् स्पर्शोन पृथिव्यादिधर्मः नीरूपेन्द्रियग्राह्यत्वादित्यादिभिः पृथिव्याद्यतिरिक्तस्पर्शना-

* विदुषां किमशोभनमिति रीत्या विस्तरवाक्पाटवकृतं स्यादित्यर्थः ।

धारकल्पनप्रसङ्गाच्च । तदेतदभिप्रेत्याह । स्वेच्छात इति । आदिशब्देन विपरीतप्रसङ्गसंग्रहः । निष्क्रमणं प्रवेशनमित्याकाशलिङ्गमिति परोक्तं प्रतिवक्ति । निष्क्रान्त्यादेरिति । उपपादयति । सतीति । यद्याका-शस्तत्र सर्वत्र निष्क्रमणादिकं न सिद्ध्यतीति आकाशव्याप्ते कुड्यादौ निष्क्रमणादेरशक्यत्वात् । न च कुड्यादिष्वाकाशोनास्तीति वाच्यम् तस्य सच्छिद्रत्वाभावत्वप्रसङ्गादिति भावः । सहकारिवैकल्यात्कुड्या-दिषु निष्क्रमणादिकार्यप्रतिरोध इति शङ्कते । रोध । इति । तुशब्दः केवलाकाशाद्विशेषद्योतकः । एवं सति निष्क्रमणादेरन्यथासिद्धत्वा निर्मूलं नभःकल्पनमित्यभिप्रायेणाह । तदभवनेति । न हि निष्क्र-मणादेराकाशं समवायि देहादिक्रियाया नभोनिष्ठत्वाभावात् नाप्य-समवायि । द्रव्यस्य तथात्वानभ्युपगमात् समवायिकारणप्रत्यासन्न-त्वायोगाच्च । निमित्तं तु ईश्वराद्यतिरिक्तमपूर्वमिह नापेक्ष्यमिति भावः ॥ ४४ ॥ इत्याकाशानुमेयत्वभङ्गः ॥

ननु शरीरादिष्वाकाशोऽवकाशदानेनोपकरोतीति तत्तच्छा-स्त्रसिद्धमतोऽस्य निष्क्रमणादिलिङ्गत्वं ग्राह्यं तदिदमनुभाषते । य-त्विति ॥

**मू० यत्त्वाकाशोऽवकाशप्रद इति कथितं शास्त्रत-**
**स्तत्र याऽसावन्योन्यस्पर्शभाजां विहतिरिह**
**न सा प्राच्यतत्त्वेष्विव स्यात् ॥ इत्यैदम्पर्य-**
**मूह्यं न यदि कथमिवान्येषु लभ्योऽवकाशः**
**सिद्धादेः स्वप्रभावाज्जल इव कथितो युज्यते**
**मज्जनादिः ॥ ४५ ॥**

शास्त्राभिप्रेतमस्योपकारकत्वं शिक्षयति । तत्रेति । पृथि-

व्यादिचतुष्कस्येव स्पर्शवत्प्रतिघातित्वमाकाशस्य नास्ति तत्पूर्वेषा-मिवाहङ्कारादितत्त्वानाम् अतः प्राणिसङ्घारादिप्रतिघातकत्वाभावाद-स्योपकारकत्वकथनमिति तात्पर्यं निपुणनिरूपणीयम् । न ह्याकाशेन देयमवकाशाख्यं द्रव्यान्तरमस्तीति भावः । आकाश एव तर्ह्यवकाशः स्यादित्यत्राह । न यदीति । अस्पर्शत्वविशेषान्महदादिप्रदेशानाम-प्यवकाशत्वं ग्राह्यम् । ननु स्पर्शवतां मिथःप्रतिघातकत्वनियमो नास्ति भूमावुन्मज्जति निमज्जतीत्यादिसिद्धप्रतिपादनादित्यत्राह । सिद्धा-देरिति । अनेन जन्मौषधिमन्त्रतपस्समाधिभूतसिद्धिमतां तत्तदुप-गृह्यानां च संग्रहः । जलदृष्टान्तेन विभज्य प्रवेशनं पुनश्शीघ्रसंभे-दश्च सूच्यते । केचित्तु सिद्धादीनां प्रभावविशेषेण भूम्यादिषु प्रवेश-प्रतिघात एव नास्तीति मन्यन्ते काचादिषु नीरन्ध्रेषु नयनप्रभादेरि-वेति ॥ ४५ ॥ इत्यवकाशनिरूपणम् ॥

अथ केचिच्चार्वाकास्सौगताश्च प्राहुः चत्वार्येव भूतानि आकाशस्त्वावरणाभाव एव स च निस्स्वभावः तुच्छतयैवोपलम्भात् यत्र चावरणं न तत्राकाशः अभित्वा दुर्दर्शत्वात्, भेदे त्वावरणाभा-वस्यैव सिद्धेः । यदि तत्राकाशः स्यात् निरवकाशं न किंचित्स्यात् अतो घटतदभावन्यायादावरणेष्वसत्त्वादयमावरणाभावस्तदिह शून्य-धातुसंज्ञिते च निस्तत्त्वेऽप्यावरणाभावे खपुष्पादिषु तत्तच्छ*ब्दादिव-न्मिथ्याजले मृगतृष्णिकादिशब्दवच्च व्यामोहैकनिबन्धना व्योमादिश-ब्दाः । अत्र नञुपश्लेषाभावादसद्रूपतातिरस्कारः, अत्र च तलत्ववि-पुलत्वमलिनत्वादिकमध्यासमन्तरेण न कथंचिदप्युपपद्यते प्रतियो-गिगतानां च स्मर्यमाणानां गृह्यमाणेऽस्मिन्नध्यासः । अस्ति चासौ

* तत्तच्छब्दवदिति पा० ।

सिद्धः दुःखाभावे सुखाभिमानात् आलोकाभावे च नीलत्वबहुलत्वाद्यध्यासस्य वैशेषिकादिभिरङ्गीकारात् शशशृङ्गं तीक्ष्णमित्यादिशब्दजन्याध्यासदृष्टेश्च । वदन्ति च शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति एष बन्ध्यासुतो यातीत्यादिषु अतो नास्त्येव नभ इति तत्राह । सद्रूपेणेति ॥

**मू० सद्रूपेणैव भानान्न भवति वरणाभावमात्रं विहायः संसर्गाभावमात्रं न च भवति यतो नास्ति संसर्गबोधः । अत्यन्ताभावनाशावजननिरपि वा सत्सु तेष्वेव न स्युस्तादात्म्याभावसिद्धिः कथमपि च भवेत्तं तमर्थं विहाय ॥ ४६ ॥**

अयम्भावः, सर्वं हि वस्तुजातं संविद्व्यवस्थाप्यं, संविद्यते च भावरूपतयैव नभः, भावान्तरमेवाभाव इति स्थापयिष्यते । अन्यथाऽपि ब्रूमः, नाभावस्य निस्स्वभावता, अभावस्वभावतयैव तत्सिद्धेः स्वान्यस्वभावतया सिद्धिस्तु न कस्यापि । न च स्वेन स्वभावेन सिद्धस्य परस्वभावविरहादसत्त्वमतिप्रसङ्गात् । उक्तं च न्यायभाष्ये असच्चासदिति गृह्यमाणं तथाभूतं विद्यमानमविपरीतं च तत्त्वमिति । तुच्छतयैवोपलब्ध्यापि निरस्तं निस्स्वभावत्वं, तुच्छता ह्यभावप्रतियोगित्वम्, अभावत्वं वस्त्वन्तरशून्यत्वमन्यद्वा किञ्चित् । न प्रथमः, स्वकालादिषु सतामभावप्रतियोगिनां यथाप्रमाणं तत्तत्स्वभावविशिष्टत्वात् । न द्वितीयः,दत्तोत्तरत्वात् । न तृतीयः,ईदृशतुच्छत्वस्य स्वरूपाविरोधिनस्सर्वेष सुलभत्वात् । न चतुर्थः, अस्मन्मतविरोधिनस्त्वदिष्टस्य कस्यचित्कुतश्चिदप्यसिद्धेरिति । यत्त्वावरणेष्वाकाशो नास्तीति, तदसत्,

स्वदुक्तियुक्त्यैव तत्सिद्धेः। अभित्त्वा दुर्दर्शत्वं हि व्यवहितत्वात्। अत एव तत्र नास्तीति न निश्चाय्यम्। भित्त्वा तु प्रेक्षणे नभस्तत्र दृश्यत एव। न चात्रावरणाभावमात्रोपलम्भः इहावरणं नास्तीति साधिकरणस्य तस्योपलम्भात् इहाकाश इतिवत्स्वात्मन्येव भेदोपचारात्स्यादिति चेन्न। बाधकाभावात्। अधिकरणानवस्थाप्रसङ्गो बाधक इति चेन्न। आकाशादेस्साधिकरणतयैवोपलम्भ इत्यनभ्युपगमात्। इहाकाश इतिवदित्यत्र चाकाशशब्देनावरणाभावविवक्षायां पक्षदृष्टान्तभेदाभावः, त्वदनभ्युपगतस्य परमतसिद्धस्य त्वया दृष्टान्तीकर्तुमयोग्यत्वात्, प्रतिबन्दिग्रहणमात्रमिदमिति चेन्न इह मूर्ते वस्तुनि आकाशसम्बन्ध इति प्रतीतौ विरोधाभावात् आवरणाभावधीरपि तथैव स्यादिति चेत्, अस्त्वेवं, तथाऽपि कदाचिदिह तारकेत्यादिवन्निरधिकरणतया गगनोपलम्भे तदतिरिक्तनभस्सिद्धिनिषेधः। आवरणेषु निरवकाशत्वं च विशेषणराहित्यात्, आवरणरहितमेव ह्याकाशमन्यद्वा किञ्चिदवकाशः, न त्वाकाशमात्रमावरणेष्वविद्यमानतया तदभाव आकाश इति चायुक्तं सर्वेषां स्वस्मिन्नविद्यमानतया स्वाभावत्वप्रसङ्गात्। यत्तु व्योमादिशब्दा व्यामोहैकनिबन्धना इति तदसत् प्रमाणसिद्धे क्वचिद्वस्तुन्येव सर्वशब्दानां व्युत्पत्तेः तद्विषयतयैव च व्यवहारात् खपुष्पादिषु त्वयोग्यसमभिव्याहारादन्यथा धीः। मृगतृष्णादिशब्दा अपि जलाध्यासादिकरणाहमरीचिव्यूहादिविषयाः। यद्यपि तलत्वादिकमाकाशेऽध्यस्तम् अल्पत्वविपुलत्वादिकं त्ववच्छेदकभेदायत्तं तथाऽपि सत्येवारोपः यत्त्वसति दुःखाभावे सुखाध्यासोदृष्ट इति तदभेकवाक्यं सत्येव दुःखाभावे सुखारोपात् अभावस्य भावान्यत्वमात्रमेव ह्यसत्त्वं सिद्धं तेन च स्वरूपसन्नेवासौ। आलोकाभावे नीलत्वाध्यासस्त्वस्मात्प्रति नोदाहर्तव्यः। अत एवाध्यस्तनैल्यमालोकाभावमात्रमेव नीलं नभ इति

भातीति निरस्तम् । आलोकदेशे च नभःप्रतीत्यनुवृत्तेः । नन्वस्मदि- ष्टक्षणिकत्वादिकं क्वचित्ते सिद्धमसिद्धं वा उभयथापि कथं तत्प्रति- क्षेपः कथं वा तस्मिन्केषां चित्सत्यताभ्रमं निर्वहि*ष्यसि इत्यत्र एत- दुत्तरक्षणवृत्तित्वाभावो हि यत्र क्वचिदन्यत्र सिद्धः स सर्वस्मिन्कुतश्चि- दारोप्यते प्रतिक्षिप्यते चेति सुस्थमेतत् । एवमन्यत्सर्वमपि चिन्त्यम् । शशशृङ्गं तीक्ष्णमित्यादिषु च प्रमिते शशादौ शृङ्गवत्त्वारोपः शृङ्गादौ च प्रमिते सत्या ऽसत्या वा तीक्ष्णधीः इत्येतावत्सहृदयहृदयारूढं नाचासति किञ्चिदारोप्यते । एवमनभ्युपगमे वर्णक्रमनिर्देशवत्स्यात् एतेन शशस्तीक्ष्णशृङ्गवानित्यपि निरूढम् । भूतेषु भाविषु च कथं भ्रम- इति चेत् कथं वर्तमानेषु । तेषां सत्त्वादिति चेन्न । स्वकालसत्त्वस्य कालान्तरासत्त्वस्य च साधारणत्वात् इति आवरणाभावश्च सत्यो- ऽसत्योर्वा संसर्गाभावादिविभागं नातिक्रामेदिति मत्वा तत्र तत्र दूष- णमाह । संसर्गेत्यादिना पद्यशेषेण । संसर्गाभावस्तावन्निरूप्यमाणः संसर्गिनिरूप्यसंसर्गप्रतियोगिकतया ऽधिकरणप्रतियोगिभूतसंसर्गिबोधा- भावे कथं बुद्ध्येत । अत्यन्ताभावोऽपि संसर्गाभावभेद एव यथा अश्वे गोत्वस्य शशे वा शृङ्गस्य तथा च अत्रावरणं नास्तीति साधिकरणभू- ताभावधीरनिवार्या । खपुष्पवदावरणानामत्यन्तासत्त्वे तु शून्यवा- दशरणम् । वर्तमानेषु चावरणेषु तत्प्रध्वंसप्रागभावौ दुर्वचौ । तौ हि किमन्यत्र विद्यमानानामुताविद्यमानानाम् । नाद्यः तेषां तदुभययो- गात् । न द्वितीयः तत एव, न हि शशे शृङ्गस्य नाशप्रागभावौ तदिह

* अत्र वहधातोरनिट्कत्वेन निर्वक्ष्यसीत्येव पाठो युक्तो न त्वान्ध्राक्षरपुस्त- कस्थः सेट्कपाठः । दहित्वा च वहित्वा चेत्यादौ तु सेट्कपाठः स्मार्त इति न स दृष्टान्तकोटिनिविष्टः । संज्ञापूर्वकविधेरनित्यत्वमाश्रित्य तथा पाठसमर्थनं तु तथाप्र- योगसत्त्वनिश्चयनिबन्धनमित्यकिंचिदेतत् । अन्तर्भावितणिच्कत्वेनार्थसमर्थनसंभवेऽपि पदसमर्थनं सर्वथाऽसंभव्येवेति विचारयन्तु विद्वांसः स्वयमेवेति कृतमधिकप्रयत्नेन । नि- र्वाहयिष्यसीत्येव वा पाठः स्वार्थे च णिजिति न बहु चोद्यावतार इति युक्ततरमुत्प्रेक्षामहे।

सर्वावरणनाशादिकं दुर्वचमसम्भवात् कतिपयावरणनाशादिकं चावरणादेशेऽप्यस्ति इति तत्रापि निष्क्रमणादिप्रसङ्गः । ननु संसर्गे तु विधिरेकेनापि तन्निषेधस्तु सर्वप्रतियोगिकः तद्वदत्रापि सर्वावरणाभावे व्योमधीः स्यात् । न असम्भवस्योक्तत्वात् । एवं सति च संसर्गाभाव एव नामान्तरेणोच्यते तत्र च दत्तमेवोत्तरम् । अस्तु तर्ह्यावरणतादात्म्याभावोऽसौ स्यात् । स ह्यसिद्धप्रतियोगिकतया स्वयमप्यसिद्धः तदात्मनश्चाकाशस्य तुच्छत्वं युक्तमिति तत्राह । तादात्म्येति । चो दूष्यसमुच्चये श्रुत्यादिविरोधरूपदूषणसमुच्चये वा । असिद्धप्रतियोगिकत्वमस्य क्वचिदपि तादात्म्यपदार्थाभावाद्वा । आवरणद्वयस्य तदभावाद्वा । नाद्यः अभावप्रतियोगित्वेन तत्कल्पनस्यासिद्धिप्रसङ्गात् । न हि क्वचित्सिद्धिमन*पेक्षकस्य क्वचिदपि कल्पना माध्यमिकमतोत्थाप†नप्रसङ्गात् । नोत्तरः संसर्गाभावस्याप्यसिद्धप्रतियोगिकत्वापातात् न ह्येतत्कालीन एतद्भूतलघटसंसर्गो निषिध्यमान इहान्यत्र च सिद्धः घटसंसर्गमात्रं यत्र क्वचित्सिद्धमिति चेत् घटतादात्म्यमपि तथैवास्तु तर्ह्युभयत्राप्यसिद्धप्रतियोगिकत्वं किं नश्छिन्नमिति चेन्न । अतिप्रसङ्गस्योक्तत्वात् अत्यन्ताभावोऽप्यसिद्धप्रतियोगिक इति पक्षश्च निरस्तः ।

तत्तत्र स्वतादात्म्यं सिद्धमन्यत्र कल्प्यते ।
बाधकैः छिप्यते चेति नास्माकमिह विप्लवः ॥

सर्वत्र तादात्म्याभावस्तत्तद्वस्तुनिष्ठतयैव सिद्ध्येत् न तु तन्मध्यादिदेशतया यथा मिथस्संयुक्ते वियुक्ते वा सिंहे गजान्यत्वं गजे च सिंहान्यत्वमिति । इदमावरणं न भवतीति तादात्म्यनिषेधश्च कस्यचिदावरणस्य वा अनावरणस्य वा आद्ये विरोधः

* क्वचित्सिद्धिमनपेक्ष्य कस्यचिदिति पाठोयुक्तः ।
† मतोत्थानप्रसङ्गादिति पाठान्तरं युक्तम् ।

आवरणान्तरं न भवतीति विवक्षायामविरोध इति चेत् सत्यं तथाऽपि न तत्राकाशप्रतीतिविषयावरणाभावसिद्धिः । द्वितीये त्वावरणान्यद्रव्यमिदङ्कारास्पदं सिद्ध्यत्येव । नन्वावरणाभाव एवेदंकारगृहीतः आवरणतादात्म्याभावाधिकरणतया बुध्यतां, न हि तत्तदभावयोस्तादात्म्यमिति मैवं न ह्यावरणतादात्म्याभावस्यावरणान्यत्वं बुध्वा कश्चित्तत्र नभःपर्यायान्प्रयुङ्क्ते निष्क्रमणादौ वा प्रयतत इति अलमतिविस्तरेण । आकाशे चाविशेषादिति सूत्रभाष्ये चैतत्सर्वमनुसन्धेयमिति ॥ ४६ ॥ इत्याकाशस्यावरणाभावमात्रत्वभङ्गः ॥

सोऽयमाकाशस्सर्वव्यापी नित्यश्चेति वैशेषिकादयः । जैनास्तु तत्र लोकाकाशः आलोकाकाशश्चेति विभागमप्याहुः । मूलप्रकृतिर्विभ्वीति सांख्याः । मनोविभ्वीति बौद्धाः । तेषां पक्षं सहेतुकमनुभाषते । नित्यत्वादीति ।

**सू० नित्यत्वाद्यम्बरादेर्यदि निरवयवद्रव्यताद्यैः प्रसाध्यं कः स्याद्बाधो विपक्षे कथमिव निगमे बाधकेऽत्रानुमा स्यात् । बाधस्सामान्यदृष्ट्या श्रुतिसमधिगते नैव कुत्रापि शक्यस्तेनामूर्तत्वलिङ्गान्न सृजति विमतो मूर्तमित्याद्यपास्तम् ॥ ४७ ॥**

नित्यत्वं व्यापित्वं च पृथक्साध्यं प्रत्येकं तयोरेते हेतवः विगीतं नित्यं विभु च निरवयवत्वे सति महत्त्वात् सर्वदा निष्प*न्दत्वे सति महत्त्वात् सर्वदा स्पर्शरहितद्रव्यत्वात् इत्यादयः निरवयवेन्द्रियग्राह्यगुणत्वादित्याकाशस्यैव । ज्ञानासमवायिसंयोगाधारत्वात्

* निःस्पन्दत्वे सतीत्येव पाठोयुक्तो न तु मूर्द्धन्यघटितस्तस्यापाणिनीयत्वात् ।

इति मनस एव । एतेषां साधारणमप्रयोजकत्वमभिप्रेत्याह । कः स्यादिति । न ह्येतेषामनित्यत्वादौ किञ्चिदनिष्टं स्यात् स्वाच्छन्द्येनानिष्टकल्पने विपरीतकल्पनस्यापि शक्यत्वात् । अन्योन्यं दूषणान्तरमाह । कथमिवेति । येष्वनित्यत्वम् अविभुत्वं चेति सृष्ट्यादिवादैस्तत्त्वान्तरावृतत्वादिवाक्यैश्च सिद्धं तेषु तद्विरुद्धसाधनमागमबाधितमित्यर्थः । उक्तेषु च हेतुषु निरवयवत्वादिकं पञ्चीकरणवादिशास्त्रविरुद्धं सर्वदा स्पर्शरहितद्रव्यत्वादिति विभुत्वसाधने अणुत्वेन श्रुतिसिद्धैर्जीवैरनैकान्त्यं ज्ञानासमवायिसंयोगाधारत्वम् आत्ममनसोरसिद्धं च । ज्ञानद्रव्यत्वादेर्वक्ष्यमाणत्वात् ज्ञानावस्थानां चात्ममनस्संयोगासमवायिकारणकत्वाभावात् । किं चात्र नित्यत्वसाधनमाकाशादिद्रव्यपक्षीकारेण वा । आकाशत्वाद्यवस्थापक्षीकारेण वा । आद्ये सिद्धसाध्यता द्वितीये तु स्वानभ्युपगतपक्षीकारोन युक्तः श्रुत्यैव तदङ्गीकारे तयैव बाधः । अनुमानेन श्रुतिबाधे तु हेतुकप्रलापैश्श्रुतिप्रमाणस्य निश्शेषोच्छेदप्रसङ्गमभिप्रेत्याह । बाधइति । प्रत्यक्षविरोधरहितानन्यपरश्रुत्या यथावदधिगतेऽर्थे येन केनचित्सामान्यतोदृष्टेन बाधशङ्कायां श्रौतहिंसा न धर्मः हिंसात्वात् सम्मतवत् विगीतमस्थि पवित्रम् । अस्थित्वात् शङ्खवत् । इत्यादेरपि प्रसङ्गः स्यादिति भावः । उक्तं दूषणं प्रस्तुते पक्षे साध्यान्तरविषयहेत्वन्तरेष्वपि दर्शयति । तेनेति । आकाशो न स्पर्शवदुपादानं स्पर्शशून्यत्वात् । एवं वाय्वादिकमपि न तेजःप्रभृत्युपादानं रूपशून्यत्वात् रसशून्यत्वात् इत्यनुमानजातं श्रुत्यादिविरोधादपास्तमित्यर्थः ॥ ४७ ॥

इत्याकाशादेरनित्यत्वाव्यापित्वादि ॥

अथ पराभिमतां विश्वव्यापिनीं दिशमनभ्युपगच्छंस्तत्कल्पकानामन्यथासिद्धिमाह । प्रागिति ।

**मू० प्राक्प्रत्यक्त्वादिभेदं भजतु वियदिदं भानुयोगादिभेदादस्यैवोपाधिभेदादधिकदिश इव स्तां परत्वापरत्वे ॥ व्योमोत्तीर्णेऽपि देशे प्रभवतु तदुपाध्यन्वितैस्तत्तदर्थैर्दूरत्वादिव्यवस्था स्वयमुत विभुना ब्रह्मणा किं परैर्नः ॥ ४८ ॥**

यदि प्रागादिधीव्यवहारसिद्ध्यै दिक् तत्त्वं कल्प्यते तत्सम्प्रतिपन्नं व्योमैव भवतु । सूर्योदयाद्युपाधिभेदेन तद्विभागात् पूर्वदक्षिणपश्चिमाद्युपाधिक्लृप्तिश्चाधिकेऽनधिकेऽपि समाना । अप्रत्यक्षायां च दिशि प्रत्यक्षैरुपाधिभिरवच्छेदधीर्दुर्लभा । सूर्योदयादिविशेषितातपादिभिरेव प्रागादिधीव्यवहारसिद्धौ किं तदन्यकल्पनया । शाखाचन्द्रनयाच्चातपादेस्सूर्योदयादेश्च सम्बन्धधीर्युज्येत उपहितस्य शब्दार्थत्वान्न दिक्शब्दस्य व्योमातपादिपर्यायता स्यात् । ननु साक्षात्सम्बन्धरहितसंयुक्तसंयोगभूयस्त्वाल्पत्वनिबन्धने दूरासन्नपरत्वापरत्वे तत्तत्सम्बन्धोपनायकव्यापकद्रव्ययोगमन्तरेण कथं स्यातामित्यत्राह । अस्यैवेति । न हि त्वया कल्प्यमानमपि दिक् तत्त्वं तदुपाधियोगमन्तरेण परत्वापरत्वे जनयेत् । तथा सति तैरेवोपाधिभिरुपहितं व्योमाद्येव परत्वादिसिद्धौ पर्याप्तम् । अधिकशब्देन कल्पनागौरवं सूच्यते । नन्वाकाशः परिच्छिन्न इति भवत्सिद्धान्तः तथा च कथमाकाशरहितप्रदेशे दूरत्वादिक्लृप्तिरित्यत्राह । व्योमेति । दूरत्वादिसिद्ध्यनुगुणोपाधिमद्भिर्महदादिभिस्तत्सिद्धिः स्यात् व्योमोत्तीर्ण इत्युपलक्षणं व्योमसम्पृक्तद्रव्यादिभिरपि तदुपपत्तेः । अनियमेन बहूनां दिक्त्वकल्पने गौरवं स्यादिति चेन्न । असिद्धकल्पनादनेकै-

रपि सिद्धेरेव निर्वाहस्य लघुत्वात् । यद्येकमेव सर्वत्र दिग्व्यवहार-कारणमिष्यते तदा सर्वव्यापिना सर्वहेतुभूतेन परमात्मनैव सर्वं सिद्ध्येत् तस्यैव सन्तु उपाधिभेदास्सहकारिणः । अथ वा तत्तदुपाधयस्तावत्प्रत्यक्षाः तत्सम्बन्धोऽपि साक्षात्परम्परया वा दूरासन्नादेर्दृष्ट एव तद्दृष्ट्या च परत्वादिसिद्धौ किं तदुपहितगवेषणया कार्यविशेषाणामन्यतस्सम्भवे च न क्वचित्तदतिरिक्तं कल्प्यमित्यभिप्रायेणाह । किं परैर्नं इति । परैर्व्यापकेश्वरव्यतिरिक्तैः उपाधिमात्रव्यतिरिक्तैर्वेत्यर्थः । नः ईश्वरमिच्छतां गौरवभीतानां चेति यावत् ॥ ४८ ॥

ननु यद्याकाशादयः परधर्मं परत्र घटयेयुः ततः पाण्ड्यदेशस्थितेन जपाकुसुमेन पाटलीपुत्रस्थितं स्फटिकमणिमुपरञ्जयेयुः । विश्वमपि व्यामिश्रसर्वस्वभावं स्यादिति प्रसक्तिमुद्भाव्य परिहरति । अन्यस्मिन्निति ॥

मू० **अन्यस्मिन्नन्यधर्मान् घटयतु वियदाद्यत्र नातिप्रसक्तिः सिद्ध्यत्कार्योपयुक्तोपनयननियमोपेततच्छक्तिक्लृप्तेः । एवं ह्येवाधिकायामपि दिशि भवतोऽतिप्रसङ्गो निषेध्यो धर्मी धर्मश्च कल्प्यौ तव तदितरता स्यात्तु काले स्वमानात् ॥ ४९ ॥**

हेतुमाह । सिद्ध्यदिति । यथा कलमबीजस्याङ्कुरजननशक्तिकल्पनेऽपि न कोद्रवाङ्कुरजनकत्वं दृश्यमानकार्यानुगुणकारणशक्तिकल्पनात् । तथा वियदादिष्वपि परत्वादिसिद्ध्युपयुक्तोपनायकतयैव तच्छक्तिक्लृप्तेरित्यर्थः । अत्र प्रतिबन्दिमभिप्रेत्याह । एवं हीति । नन्वधिकाया दिशस्तावदर्थतया धर्मिग्राहकेण सिद्धिः न तथा

वियदादेः तत्स्वरूपस्यान्यतस्सिद्धत्वादिति चोद्यं विपरीतफलमित्यभिप्रायेणाह । धर्मीति । नावश्यं धर्मिग्राहकेणैव सर्वत्र शक्तिसिद्धिः गृहीतेष्वपि धर्मिषु तत्तत्कार्यदर्शनेन तन्नियतशक्तिक्लृप्तेः अतएव नातिप्रसङ्गः अयस्कान्तादिवत्तन्नियमात् यन्निबन्धनस्त्वतिप्रसङ्गः स सिद्धौ कल्प्येऽपि समसमाधिः । एवं स्थिते वरमुभयकल्पनादेककल्पनम् । ननु शक्तिरपि कल्प्यमाना न निराधारा कल्प्यते तस्मात्साधारशक्तिकल्पने शक्तिविशिष्टाधारकल्पने वा समं गौरवं तन्न । यद्यपि शक्तितद्वन्तौ मिथोऽवच्छिन्नौ तथाऽपि सिद्धांशस्य कल्प्यत्वायोगादसिद्धांशनियतैव क्लृप्तिरिति विशेषसिद्धिः स्यादिति भावः । नन्वेवं वियदादेरेव सूर्यपरिस्पन्दाद्युपनायकत्वसम्भवात्तदन्यः कालो न सिद्ध्येदित्यत्राह । तदितरतेति । न हि वयं परत्वादिलिङ्गैराकाशाद्यतिरिक्तं कल्पयामः किन्त्वागमिकमभ्युपेमः अतो न तस्यासिद्धिरिति भावः ॥ ४६ ॥ यदि पृथक्त्वेन लोकवेदादिप्रसिद्धा दिगपन्हूयेत तथा वायुरपि । अस्य ह्युपलभ्यमानः स्पर्श उष्णश्शीतोऽनुष्णाशीतो वा त्रेधापि न च्छान्दोग्याधीततेजोऽवन्नातिरेकस्सिद्ध्येत् तिर्यक्पवनमप्यदृष्टवशात्तेषामेव स्यात् शब्दधृतिकम्पैरपि नातिरिक्तमनुमातव्यं तैरेव तत्सम्भवात् ।

वातोपनीततत्तद्भूतान्तरावयवन्यायादनुद्भूतरूपतया दुर्दर्शत्वं स्यादित्यत्राह । संख्यानमिति ॥

**मू० संख्यानं तत्त्वपङ्क्तौ क्वचिदपि न दिशः**
**कालवद्वा न भेदः कण्ठोक्तौ व्याक्रिया-**
**दिव्यवहरणमपि ह्यन्यथैवोपपन्नम् । श्रो-**
**त्रादुक्तस्तु लोकप्रभृतिवदुदयस्तस्य तत्रा-**

**प्ययोवा नैतावत्तत्त्वभेदं गमयति न च तच्छ्रोत्रतामान्यपर्यात् ॥ ५० ॥**

अयम्भावः न हि वयमप्रत्यक्षस्य वायोः स्पर्शशब्दधृतिकम्पलिङ्गैस्सिद्धिरिति वदामः येन तेषामन्यथासिद्धिरुच्येत किन्तु तेषु तेषु शास्त्रेषु तत्त्वपङ्क्तौ परिगणनात् नैवं दिक्तत्त्वं गण्यत इति। तत्र कालप्रतिबन्दिं निस्तरति। कालवद्धेति। अस्ति हि रूपान्तरं तद् द्विजकालसंज्ञम् इत्यादि। ननु दिग्देशकालेष्ववस्तातिः इत्यादिषु देशाद्भिन्ना दिक् कालवच्छास्त्रेषु व्यवह्रियत इत्यत्राह। व्याक्रियेति। प्रमाणसिद्धदिक्तत्त्वानुसारेण तत्कार्यविशेषविधायिनां शास्त्राणां तत्स्वरूपनिष्कर्षे तात्पर्याभावान्न ततस्त्वदिष्टसिद्धिरित्याशयः। अथ स्यात् प्राणाद्वायुरजायत इत्यादौ वाय्वादितत्त्वैस्सह दिशः पृथक्सृष्टिरुच्यते अतस्तद्वद्दिशोऽपि तत्त्वान्तरत्वं स्यात्। एवं दिशः श्रोत्रम् इति तद्वदप्ययोऽपि श्रूयत इत्यत्राह। श्रोत्रादिति। लोकप्रभृतिवदिति प्रतिबन्दिवचनम्। अत्र हि नाभ्यादासीदन्तरिक्षम्। इत्यादिभिर्न तत्त्वतस्सृष्टिश्श्रूयते किन्तु ब्राह्मणक्षत्रियचन्द्रसूर्यादिव्यष्टिसृष्टिप्रकरणे अन्तरिक्षस्वर्गादिकल्पनम्। अतोदिक्सृष्टिरपि व्यष्टिविषया न तत्त्वान्तरं कल्पयितुं शक्नुयादित्याह। नैतावदिति। अथापि दिशः श्रोत्रोपात्तस्य व्यष्टिविशेषत्वं स्यादित्यत्राह। न चेति। श्रोत्रतां—श्रोत्रोपादानतामित्यर्थः। न हीन्द्रियाणि कस्य चिदुपादानानीति प्रागेवोक्तम्। गत्यभावादत्र विशेषः कल्प्यतामित्यत्राह। आन्यपर्यादिति। अत्र हि दिगुपाधीनां तद्देवतानां वा भगवतः श्रोत्रात् चन्द्रादेरिव सृष्टिः स्यात् अतस्तत्त्वान्तरकल्पनं निर्मूलमित्यर्थः ॥ ५० ॥ इति दिश आकाशादावन्तर्भावः ॥

आकाशे चिन्तिते प्रसङ्गाद्दिगन्तर्भाव उक्तः। अथाकाशानन्तरभाविनि वायोस्स्वरूपतस्सम्प्रतिपन्ने प्रमाणविप्रतिपत्तिं निरस्यति। वातो वातीति॥

मू० वातोवातीति साक्षान्मतिरितरसमा स्पर्शतोऽनानुमा नासावन्धेऽन्येषु प्रसङ्गान्न पुनरगमकं स्पर्शनं रूपशून्ये ॥ अन्याक्षग्राह्यताद्विविधगुणविरहो ह्यन्यदक्षं न रुन्द्धे निर्गन्धो नीरसोऽपि स्फुरति यदनलो दर्शनस्पर्शनाभ्याम् ॥ ५१ ॥

त्वगिन्द्रियपवनसंयोगे इति सावधानस्य वातो वातीति धीस्तावद् दुरपलपा सा साक्षात्काररूपा क्षित्यादिधीसमत्वादित्यर्थः । यदत्र गुणेन गुण्यनुमानमाहुः तत्प्रतिषेधति । स्पर्शत इति । न हि गन्धादिवदिह गुणमात्रोपलम्भ इति भावः । अन्यथाऽतिप्रसङ्गमाह । अन्ध इति । अन्धे पुरुषे अन्येषु पृथिव्यादिषु भूतेषु त्वगिन्द्रियेण या स्पर्शधीस्सा स्पर्शमात्रविषया तत्तद्रव्यानुमितिहेतुस्स्यात् अन्धोक्तिश्चक्षुषा द्रव्यग्रहणनिवृत्त्यर्था उपलक्षणमेतदन्धतमसमध्यस्थस्य । सा ऽऽलोकेऽपि निमीलितचक्षुषः, न चैतद्युक्तं दर्शनस्पर्शनाभ्यामेकार्थग्रहणाभ्युपगमात् अन्यथा द्रव्यापन्हवप्रसङ्गाच्च । ननु नीरूपं कथं प्रत्यक्षम् आत्मादीन् पश्य कथं बाह्याक्षग्राह्यं रूपादीन्निरूपय, कथं स्पर्शनवेद्यं स्पर्शमेव परामृश, इत्यभिप्रायेणाह । न पुनरिति । तथाऽपि नीरूपद्रव्यं कथं बाह्येन्द्रियग्राह्यं त्वगिन्द्रियग्राह्यं वेत्यत्राह । अन्याक्ष इति । इन्द्रियाणां स्वग्राह्यविशेषगुणोपधानेन हि द्रव्यग्राहकत्वमितिवदकल्पना । ततश्चेन्द्रियान्तरग्राह्यविशेषगुणविरहेऽपि वायोस्त्वगिन्द्रियग्राह्यत्वमविरुद्धमित्यर्थः । यदि रूपशून्यद्रव्यत्वाद्वायुरप्रत्यक्ष इत्युच्येत तदा रसशून्यद्रव्यत्वात्तेजोऽपि किं तथा गन्धशून्यद्रव्यत्वाद्वा अतोऽवादि इन्द्रियान्तरग्राह्यविशेषगुणविरहो नेन्द्रियान्तर-

वेद्यत्वविरोधीति । अत्राविगीतमुदाहरणमाह । निर्गन्ध इति ॥ ५१ ॥
वायुप्रत्यक्षतायां परोक्तमनिष्टं शङ्कते । संख्येति ॥

**मू० संख्याद्यास्स्पर्शनास्स्युस्तदधिकरणकास्स्पर्शने गन्धवाहे तेषां द्रव्योपलम्भप्रतिनियतनिजाध्यक्षयोग्यत्वतश्चेत् ॥ इ*ष्टस्त्वंशेन चात्मप्रभृतिषु सहते तैः प्रसिद्ध्यन्ति सर्वे तद्बाह्ये व्याप्तिरिष्टा यदि सततगतेरप्यसावस्तु बाह्ये ॥ ५२ ॥**

वायौ त्वगिन्द्रियग्राह्ये तन्निष्ठसंख्यापरिमाणादिद्वीन्द्रियग्राह्यवर्गोऽपि तेन सह त्वचा गृह्येत तेषां संख्यादीनां स्वाधारद्रव्योपलब्धियोग्यतासमानयोग्यताकत्वादित्यर्थः । अत्रांशत इष्टप्रसङ्गतामाह । इष्टमिति । उपलभ्यते ह्येका वह्निशिखा एका वारिधारेत्यादिवत् एकोऽयं वायुरिति । रन्ध्रभेदनिष्क्रान्तेषु च वायुषु सावधानं स्पृशतो द्वित्वद्विपृथक्त्वादयोभान्ति यावता च त्वगिन्द्रियभागेन वायुस्सम्बध्यते तावदवच्छिन्नं तत्परिमाणं च गृह्यत एव न हि घटादावपि त्वगिन्द्रियसम्बद्धप्रदेशाभ्यधिकवर्तिपरिमाणं तेन गृह्यते, स्पृष्टापसृते वायौ संयोगविभागौ स्फुटौ एकस्मिन् शरीरे अनेकैर्वंशरन्ध्रादिभिरनेकेषु वायुस्रोतस्सु प्रवर्तितेषु तत्तदपेक्षया परत्वापरत्वे अपि सुलभे कर्म च वातीति प्रत्ययात् । अन्यथा सरित्प्रवाहे स्यन्दनं च त्वचा न गृह्येत यस्तु वायोः संमूर्च्छनाद्यवस्थासु संख्यादेरग्रहः स तोयादावपि समः । प्रसङ्गस्य व्याप्तिभङ्गमप्याह । न चेति । आत्मनि तावदद्याप्यहमेक इति धीस्स्यात् तथाऽपि तत्परिमाणं न गृह्यते अत

* दृष्टं त्वंशेनेति पा० ।

एव न ह्यणुत्वविभुत्वदेहपरिमाणत्वसन्देहः । एवमन्यदपि । तथा बाह्येष्वपि द्रव्योपलम्भेऽपि द्वित्वचित्वाद्यग्रहो दृष्टः । उक्तव्यतिरिक्तेष्वयं नियम इति शङ्कते । तद्ग्राह्य । इति । सान्तर्हासमाह । सततगतेरिति । यथादर्शनं व्यवस्था त्वयाऽपि दुस्त्यजेति भावः ॥ ५२ ॥ इति वायुप्रत्यक्षत्वम् ।

अथ राजसमहान् प्राण इति वदतः प्रतिवक्तुं प्राणस्य वायुविशेषतां विवक्षुस्तच्च विशेषापह्नवं प्रतिषेधति । न प्राण इति ॥

**मू० न प्राणो वायुमात्रं सह परिपठनान्न क्रिया द्रव्यतोक्तेस्तेजोवद्वा न तत्त्वान्तरमगणनतो वायुताऽनुज्ज्ञनाच्च ॥ तस्माद्वातो विशेषं घनजलकरकान्यायतः प्राप्य कंचिद्देहान्तर्दाशविध्यं भजति बहुविधोपक्रियोवृत्तिभेदैः ॥ ५३ ॥**

वायुत्वप्रसिद्ध्याऽसौ वायुमात्रमिति चेन्न । सर्वत्र सामान्यप्रसिद्ध्या विशेषत्यागप्रसङ्गात् । अयोग्ये च नानुपलम्भबाधः । श्रुतिप्राप्तं हेतुमाह । सहेति । एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः इति सृष्टिवाक्ये वायुप्राणयोस्सह पाठात् । न चात्र प्राणशब्दोऽन्यार्थः । अबाधे प्रसिद्धत्यागायोगात् । न च वायुसामान्ये प्राणशब्दप्रसिद्धिः । जगत्प्राण इति समाख्या तु न तदंशस्य शक्तिं गमयेत् देहावच्छेदमात्रेण विशेषात्पृथगुक्तिरिति चेन्न । तत्सृष्ट्युक्तेः प्रयोजनमान्द्यात् । अस्तु तर्हि वायोः क्रियाविशेषः प्राणः । स्तिमितवायौ प्राणशब्दप्रयोगाभावात् उच्छ्वासादौ प्रयोगाच्चेत्यत्राह । न क्रियेति । हेतुमाह । द्रव्यतोक्तेरिति । वायुर्द्रव्यमिति ताव-

त्सिद्धं प्राणे च तदुक्तिस्सार्वत्रिकी प्राणस्स्पन्दत इति च पृथग्व्यपदि-शन्ति । उक्तश्च सह पाठो न तत्क्रियायाः अग्न्यप्रायनयविरोधात् । न च मनःप्रभृतीनां क्रिया तैस्सहात्र पठ्यत इति भावः । यद्यसौ वायु-विकारविशेषः वह्निरिव तत्त्वान्तरं स्यादित्यत्राह । तेजोवदिति । यदि तत्त्वपङ्क्तौ निविष्टः प्राणः भूतान्तरवत् पृथक्संख्यायेत न ह्येवमसावित्याह । अगणनत इति । तत्त्वपरिगणनं च पूर्वपूर्वनि-यतस्वभावपरित्यागेन विकारान्तरसृष्टौ न तु विकारमात्रे पृथिव्या ओषधय इत्यादिषु प्रसङ्गात् प्राणे च वायुत्वं न निवृत्तम् । अतश्च न तत्त्वान्तरमित्याह । वायुताऽनुवृत्तेश्चेति । तथाऽपि देहोपादान-त्वावस्थापन्नोवायुः प्राणस्स्यात् किमधिककल्पनयेत्यत्राह । तस्मा-दिति । अयम्भावः यावद्ध्यस्मिन् शरीरे प्राणोवसति तावदायुः अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः प्राणापानसमायुक्तः पचा-मीत्यादिषु देहात्पृथक्त्वेन प्राणवायुः प्रसिद्धः । अतो न देहोपादानवा-युरसौ । किन्तु योगाद्युपयुक्तशास्त्रवेद्यविशेषवान् कश्चिद्वायुरयमिति वायुत्वानुवृत्तिव्यक्त्यै जलमयकरकानिदर्शनम् । दाशविध्यं प्राणापानादि-भेदैर्नागकूर्मादिभेदैश्च दशविधत्वं, तत्तद्वृत्तिभिरुपकारप्रपञ्चस्तत्तदा-गमेषु ग्राह्यः । अयं चार्थो न वायुक्रिये पृथगुपदेशादित्यधिकरणसिद्धः आपोमयः प्राण इति तु अन्नमयं हि सोम्य मनस्तेजोमयी वागिति वदाप्यायनपरम् अन्यथाऽनेकशास्त्रविरोधात् ॥ ५३ ॥ इति प्राणस्य वायुविशेषत्वम् ।

अत्र कश्चिदाह प्राणसंवादादिष्विन्द्रियैस्सह प्राणः पठितः प्राणशब्दश्च साधारणः प्रयुक्तः क्षेत्रज्ञोपकरणत्वं च समानम् ॥ अतः प्राण इन्द्रियमिति । एतदनूद्य परिहरति । प्राण इति ॥

मू० प्राणोऽक्षं प्राणशब्दादुपकरणतया नेत्रिणः-
प्रचेत्ययुक्तं शब्दैक्यं ह्यैकजात्यं व्यभिच-
रति न च प्राणताऽक्षेषु मुख्या ॥ देहस्या-
नक्षभावेऽप्युपकृतिरधिका तत्समाक्षोक्त्यदृ-
ष्टिर्न प्राणे सात्त्विकाहंकरणविकृतिता
लक्षणं तद्धि तेषाम् ॥ ५४ ॥

सहपाठमात्रं न तज्जातीयत्वसाधकमित्यभिप्रायः । प्राणशब्द-वाच्यत्वं नेन्द्रियत्वसाधकमित्याह शब्दैक्यमिति । अन्यथा अनेकार्थशब्दलोपप्रसङ्ग इति भावः । अत्र च प्राणशब्दः क्वचिन्मुख्यः क्वचिद्गौणः । एवमप्येकशब्दप्रयोगमात्रात्साजात्ये वैजात्यमेव जगति लुप्येतेत्यभिप्रायेणाह । न चेति । चक्षुरुपकरणत्वस्य व्यभिचारमाह । देहस्येति । चक्षुरुपकारकत्वं देहे संदृश्यते न तत्रेन्द्रियत्वमिष्यते । इन्द्रियशब्दप्रयोगाभावात्तत्रानिन्द्रियत्वमित्यत्राह । तत्समेति । इन्द्रियत्वोक्तेरदर्शनं देहे प्राणेऽपि समम् । अतः प्राणोऽपि नेन्द्रियमित्यर्थः । इन्द्रियलक्षणनिवृत्त्या च प्राणे तच्छब्दवाच्यत्वनिवृत्तिरित्यभिप्रायेणाह । न प्राण इति । सात्त्विकाहङ्कारोपादानकत्वमेवेन्द्रियलक्षणं परोक्तलक्षणानुपपत्तेरित्यभिप्रायेणाह । लक्षणमिति । यत्तु शरीरयोगे सत्येव साक्षात्प्रमितिसाधनम् इन्द्रियमिति । अत्र कर्मेन्द्रियेष्वव्याप्तिस्तावदास्तां स्वेदादिशैत्याभिव्यञ्जकव्यजनवातादेरुक्तलक्षणयोगादतिव्याप्तिर्दुर्वारा शरीरसंयुक्तमतीन्द्रियमिति विशेषणेऽपि चाक्षुषतेजःकणानां चूर्णविक्षेपवद्विसर्पे मूलस्कन्धस्य प्रमितिसाधनत्वाभावात् अग्रस्कन्धस्य शरीरसंयुक्तत्वायोगात् नोभयत्राप्येतद्विशिष्टमिन्द्रियलक्षणमस्ति परम्परया सम्बन्धस्त्वतिप्रसञ्जकः । आ द्रष्टुरा-

चन्द्रमसश्च कश्चिच्चक्षुरिन्द्रियावयवी तदानीमेव निष्पन्न इत्यत्र न किञ्चित्प्रमाणमन्यत्र सम्प्रदायात् । इन्द्रियदोषवदिन्द्रियगुणाश्च शरीरसंयुक्तास्साक्षात्प्रमितिसाधकास्सन्ति तैश्चानैकान्त्यं सुवचं शुद्धेष्वपि परोक्तलक्षणेषु न प्रस्तुते तत्सिद्धिरिति ॥ ५४ ॥ इति प्राणस्यानिन्द्रियत्वम् ॥

वायोरनन्तरं वह्निनिरूपणे प्राप्ते प्राणसङ्गत्या वैश्वानरं तावच्छिक्षयति । प्राणेति ॥

**सू० प्राणापानाख्यभस्त्रारभसविसृमरः प्राप्य वैश्वानराख्यां मध्ये देहं हुताशो वसति जलनिधावौर्ववत्सर्वभक्षः । तत्तद्विद्यासु वेद्यं त्वन इव हि परज्योतिषः सोऽपि रूपं नात्मानौ तौ जडत्वाज्जनिविलयमुखैर्भेदकण्ठोक्तिभिश्च ॥ ५५ ॥**

तस्य मध्ये महानग्निरित्यादिकमिहानुसन्धेयं वारिनिर्वाप्यत्वनिवृत्त्यै वाडवनिदर्शनं प्राणवैश्वानरविचारस्य प्रधानशास्त्रार्थोपयोगमभिप्रेत्याह । तत्तदिति । अतः प्राणः । अथ यदतः परो दिवो ज्योतिर्दीप्यत इत्यारभ्य इदं वाव तत् यदिदमस्मिन्नन्तः पुरुषे ज्योतिरित्याद्यामनन्ति छन्दोगाः । प्रसङ्गान्नास्तिकयोगिजननिरासाय द्वितीयसरवक्तव्यमुपक्षिपति । नात्मानाविति । अजडो नित्यो भूतभौतिकविलक्षणश्चात्मा स्थापयिष्यते ॥ ५५ ॥ इति प्राणवैश्वानराग्न्योस्साङ्गत्यमनात्मत्वं च ॥

अथात्र धर्मधर्मिणोः सजातीयत्वे निदर्शनार्थे लोकबुद्ध्यनुगुणं भाष्यस्थं प्रभानिरूपणं प्रदर्शयति । धर्म इति ॥

मू० धर्मो भाति प्रभैका बहलविरलताद्यत्र दृष्टानुसारात् सा दीपांशा विशीर्णा इति यदि बहुधा कल्पनागौरवादिः । रत्नादीनां स्थिराणां विशरणविहतेर्निष्प्रभत्वादि च स्यात् तेजस्त्वप्रभाकं तिमिरहरतया सापि तेजोविशेषः ॥ ५६ ॥

प्रदीपादिधर्मभूता तद्गतस्वयमप्येका विष्वक्प्रसृता सूक्ष्मांशुक-न्यायेन सुघटितसङ्घातलक्षणा प्रभा सर्वेषां भाति तत्र मूलाग्रयोर्बहलत्वविरलत्वोष्णत्वानुष्णत्वाद्युपलम्भस्तत्तद्गतस्वन्तरेष्विव नैक्यबाधक इत्यभिप्रायेणाह । बहलेति । अन्यथा स्थूलमूलत्वादिना दीपादिष्वपि नैक्यं सिद्ध्येदिति भावः । अवयवविशरणवादमनूद्य प्रतिषेधति । सेति । विशरणक्रिया तत्स्वभावानां वेगवतां तेजोऽवयवानामनुपशान्तवेगानामेव संभूय किञ्चिदुद्गमनेन दीपाद्यवयव्यारम्भणं घनीभूतानामनन्तरक्षणे विशरणम् । ऊर्ध्वगमनशीलानां च तेषां तत्तदंशतश्च तिर्यगूर्ध्वमधश्च प्रसरणं तादृशप्रसरणहेतुवैचित्र्यं बहलविरलत्वादिसिद्धै केषांचिद्वेगातिशयः इत्याद्यनुपलब्धविविधार्थकल्पनागौरवं प्रसज्यते । आदिशब्देन सर्वलोकोपलम्भशास्त्रविरोधसङ्ग्रहः । बाधकान्तरमाह । रत्नादीनामिति । प्रत्यभिज्ञाविषयप्रथानोदाहरणतया प्रसिद्धेषु स्थिरतरेषु रत्नादिषु प्रतिक्षणविनाशोऽवयवविशरणं च न कल्पयितुं शक्यम् । अतस्तेषु त्वदुक्तप्रकारेण प्रभोत्पत्तिकल्पनायोगान्निष्प्रभत्वप्रसङ्ग इत्यर्थः । परिशेषतः स्वाभिमतमाह । तेज इति । उक्तानुपपत्त्या । दीपादितेजः प्रभाविशिष्टमेवोत्पद्यते इत्यर्थः । ननु प्रभा द्रव्यं न सत्त्वाद्गुणो गण्यते तद्बहिर्भावश्चा-

पसिद्धान्तः । अन्तर्भावश्च न वायुपर्यन्तेषु रूपवत्त्वात् । न तोयपृथिव्यो रसगन्धादिरहितत्वान्न तेजसि तद्धर्मतयाऽभ्युपगमादः, अतो विशीर्णतेजोऽतिरिक्ता प्रभा नास्तीत्यत्राह । तिमिरहरतयेति । तिमिरहरत्वं तेजस्त्वमात्रे हेतुः विशेषशब्दस्तु प्रतीतिसिद्धावान्तरवैषम्यव्यक्त्यर्थः । तिमिरहरत्वं चात्र भास्वररूपविशिष्टतया न तेजस्त्वमात्रेण अतो न साध्याविशेषशङ्का । एवं नीरसत्वे सति रूपवत्त्वादित्यपि हेतुः ॥ ५६ ॥ इति प्रभायाः प्रभावदवयवातिरेकतेजस्त्वे ॥

अथ ग्रन्थान्तरसिद्धमतान्तरमाह । भाष्य इति ॥

**मू० भाष्ये भास्वत्प्रभादौ प्रतिहतिबहलीभावपूर्वं यदुक्तं तेन स्रोतस्समाधिं परमतनयतः प्राहुरेके प्रभायाम् ॥ वस्तुन्यन्ते विकल्पैः स्फुटविघटनयोर्वक्तुराप्तस्य वाचोस्तात्पर्यं तर्कमानानुगुणमधिगुणैश्चिन्त्यमन्ते वसद्भिः ॥ ५७ ॥**

करतलेनाहिमकररश्मीनां गतिप्रतिहतिः । तथैव तत्र बहलतया स्फुटोपलम्भश्चाभाष्यत । प्रतिबिम्बनिरूपणे च नयनरश्मीनां दर्पणे प्रतिहतिरुक्ता तदेतत्प्रभाप्रभावतां सहोत्पत्तिनाशपक्षे नोपपद्यते । दृश्यते च रत्नप्रभादेरपि प्रतिघातकसन्निधौ सङ्कोचस्तदपगमे विकासश्च । अतः पाञ्चभौतिकस्य रत्नादेः पार्थिवाद्यंशेन दृढावस्थितस्यापि तेजोंऽशेन गन्धादिन्यायवता विशरणप्रसरणादिकं युज्यते आतपवारणादिवृत्तान्तश्च वर्षवारणादिन्यायात्किरणगतितत्प्रतिघातावनुमापयति निवृत्ते चातपे विनिवलयोरौष्ण्योपलम्भातेजोंऽशविशरणसङ्क्रमणे गम्येते । प्रभातद्वतोराश्रयाश्रयित्वादि

भाषणं तु परसम्मत्येव तन्मतनिदर्शनं प्रभा हि प्रदीपादिना सह जनिध्वंसिनीति केचित् । तथाऽपि सांख्या इन्द्रियवृत्तिनिदर्शनतया आहुः ।

'दीपप्रभा यथा तस्मिन्विनश्यति विनश्यति ।
तथा बहिर्गताऽप्येषा मूलच्छेदाद्विनश्यति ॥ इति ॥

ननु विरुद्धभाषणादुभयं त्यक्त्वा सौगतगतिरिह संग्राह्येत्यत्राह । वस्तुनीति । न तावदिह सिद्धे वस्तुनि विकल्पः । न च वाक्ययोरैकार्थ्ये क्लिष्टगत्या कल्प्यं विरोधस्फोट्यात् । आप्तवाक्ये च नोभयत्यागः सहजक्षणिकपुञ्जद्वयपक्षस्य क्षणभङ्गनिरासेनैव निरस्तत्वाच्च । अतोऽन्यतरवाक्यस्य अन्यपरत्वे प्राप्ते प्रमाणतर्कानुगुणं परमार्थतात्पर्यं प्रज्ञादिशालिभिश्छात्रैः प्रतिबोद्धव्यमिति ॥ ५० ॥ इति प्रभाविषयग्रन्थद्वयगमनिका ॥

ननु दीपादीनां स्थिरतया गृहीतानामपि क्षिप्रविनाशित्वमभ्युपगतं तच्चाऽवयवविशरणपक्ष एवोपपद्यते तथाऽऽहुः । अवयवविरणलिङ्गजबोधसहायेन चक्षुषा भेदं ज्वालेषु निर्णयाम इति ॥

पक्षान्तरेषु तु प्रत्यभिज्ञा दुर्बाधेत्यत्राह । प्राच्य इति ॥

**मू० प्राच्ये स्नेहादिनाशे चरम इव दृढोऽनन्तरं दीपनाशः सामग्र्यन्यान्यकार्यं जनयति च न चानेकदीपप्रतीतिः । साम्यादेः स्यात्तु तद्धीः प्रवहणभिदुरास्तप्रभास्तत्प्रदीपा निर्बाधा भास्करादौ प्रथयति नियतं प्रत्यभिज्ञा स्थिरत्वम् ॥ ५८ ॥**

दाह्यविनाशानन्तरं वह्नि*नाश इति चरमदीपादिषु दृष्टम् इदं च सर्वेषां प्रतिक्षणं च दीपदशादिप्रक्षयो दीपादिषु प्रत्यक्षः। प्रयोगश्च प्राच्यस्नेहदशादिनाशः स्वानन्तरभाविस्वजनकदीपनाशवान् दीपारम्भकस्नेहादिनाशत्वात् अन्त्यवत् इति। सावधानं प्रपश्यद्भिश्च प्रवाहवद्दीपो दृश्यते दशाग्रमारभ्य तन्मूलपर्यन्तं प्रतिक्षणमन्यो ऽन्यो दीपः प्रवर्तमानो निवर्तमानश्च दृष्टः। प्रयोगान्तरमभिप्रेत्याह। सामग्रीति। द्वितीयादिस्नेहादिसामग्री दीपजनिका अविकलदीपजनकजातीयसमुदायत्वात् आद्यवत्। अन्यथा प्रथमापि नोत्पादयेत् तथा च जितं चार्वाकैः। नन्वस्तु प्रतिक्षणदीपारम्भः प्रतिक्षणविनाशस्तु कुतस्त्य इत्यत्र पूर्वानुमानसिद्धेऽपि युक्त्यन्तरबाधमाह। न चेति। यदि द्वितीयादिक्षणे पूर्वपूर्वदीपनाशो न स्यात् अनेकघटाद्युत्पत्तिनयाद्युगपदनेकदीपोपलब्धिः स्यात् न चैवमस्ति। निगमयति। साम्यादेरिति। प्रभया सहोत्पत्तिपक्षेऽप्येवं दीपादेराशुतरविनाशित्वं सिद्धं यत्र तु सामग्र्यनुवृत्त्यादिहेतुविरहः तत्र स्थिरत्वप्रसङ्गो न दोष इत्यभिप्रायेणाह। निर्बाधेति ॥ ५८ ॥ इति स्थिरास्थिरतेजोविभागः ॥

यत्तु हेमादेस्तैजसत्वमाहुः त्रपुसीसलोहरजतसुवर्णानां तैजसानामग्निसंयोगाद्द्रवत्वमद्भिस्सामान्यमिति तत्प्रागेव पार्थिवत्वसाधनात्प्रत्युक्तम्।

विशेषतश्च परोक्तेर्भङ्गाय ब्रूमः। वर्णानामिति ॥

**मू० वर्णानां तादृशत्वादतिकठिनतया गौरव-**

---

* नात्र शाङ्कराणामिव वन्हिनाशः स्वयमेवेत्यभिप्रायस्तत्पक्षस्यातिबालबुद्धिविलसितत्वेन तथा दुर्भणत्वात्। किन्तु दाह्यनाशे वन्हिर्वन्हिनाशे च दाह्यनाश इत्ययमर्थः। एतत्तत्त्वं चास्माभिर्द्दीपिकास्नेहपूर्तौ व्यवस्थापितमित्यधिकं जिज्ञासमानैस्तत्र द्रष्टव्यम्।

स्यापि भूम्ना । धात्रीभागैः प्रभूतैस्स्फुटमिह घटिता धातवो हाटकाद्याः ॥ तादृक्त्वेऽपि स्फुरत्वाद्यनितरसुलभं किंचिदन्वीक्ष्य तज्ज्ञैः व्याख्यातं तैजसत्वं विधितदितरयोस्तन्त्रसौकर्यसिद्ध्यै ॥ ५९ ॥

हेमरूप्यादिवर्णाः पार्थिवत्वाभिमताभ्रकशुक्त्यादिसमा दृश्यन्ते अन्यथा कथं तत्तद्भ्रमः काठिन्यं च तेष्वधिकं तच्च स्वतः पृथिव्या एव काठिन्यवान् यो बिभर्ति इत्यादिदर्शनात् गुरुत्वं च तेषु तेषु भूयिष्ठं तेजोमात्रे तु न तत्प्रसङ्गः । जले तु सदप्येतन्नैवं क्वचिदतिशयितं न चाऽऽप्यत्वं तेषामिच्छसि तदिह पञ्चीकृताख्यव्यष्टिप्रपञ्चे हेमादिषु पार्थिवांशः प्रभूत इति निश्चीयते । कथमन्यथा निष्के तु सत्यवचनमित्यादि निरुह्येत तथात्वे तैजसत्वस्मरणं कथमित्यत्राह । तादृक्त्वेऽपीति । स्फुरत्तादि तेजस्समानं वर्णविशेषं स्वतश्शुद्धत्वं चेत्यर्थः । तज्ज्ञैः तथाभूतवेदिभिः व्याख्यातं विशेषतः प्रकथितम् । किमर्थमित्यत्र तैजससमाख्यातेषु विधिनिषेधसाधारण्यसौकर्यार्थमित्यत्राह । विधीति । ननु सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामत्यन्ततापलुप्तद्रवत्वं दृष्टं न तथा हेमादौ ततस्तेषामपार्थिवत्वं मैवम् एवमपि तोयान्यत्वस्य दुस्साधत्वात् द्रवत्वविशेषात्तैजसत्वसाधने च न कश्चिद् दृष्टान्तः । पाकजद्रवत्वेन पार्थिवत्वसाधने तु सर्पिराद्यस्ति अलुप्तद्रवत्वं च हेमादेस्तदुपष्टम्भकपार्थिवांशेऽप्यस्ति । अन्यथा तव तदानीं काठिन्यानुवृत्तिप्रसङ्गात् अतः पञ्चविप[illegible]त्वाद्विरुद्धता ॥

अवान्तरविशेषाच्च नातज्जातीयता भवेत् ।
अतिप्रसङ्गसाम्याज्यादशेषापह्नवेन वा ॥

न च हेमादिशब्दानां युक्तं दृष्टप्रमाणतः ।
अलोकव्यवहारार्हं क्वचिद्वृत्तिकल्पनम् ॥ ५९ ॥
इति हेमादितैजसत्वोक्तितात्पर्यम् ॥

तेजोऽनन्तरे तोये विप्रतिपन्नार्थाभावात्तदुल्लङ्घनेन तमसः पृथिव्यामन्तर्भावमाह । नैल्यादिति ॥

मू० नैल्याद्भौमं तमिस्रं चटुलबहुलताद्यन्वया-
त्तन्न नैल्यं छायावत्पारतन्त्र्यं त्वयस इव
मणौ दृष्टिसिद्धात्स्वभावात् ॥ स्पर्शाख्याति-
र्न रूपं हरति हरिशिलालोकवत्तत्र चा-
क्ष्णोर्नालोकोऽर्थ्यस्ससिद्धाञ्जननयनदिवाभी-
तदृष्ट्यादिनीतेः ॥ ६० ॥

तमः खलु चलं नीलं परा*परविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हतीति ॥

य एवं वदन्ति तान्प्रत्युभयसम्मतेन नीलत्वेन पार्थिवत्वं साध्यते द्रव्यान्तरकल्पने गौरवात् । अवान्तरविशेषश्च न वैजात्यहेतुरित्युक्तं प्रभातुल्यत्वपक्षे पित्तवद्द्रुतप्रभापसर्पपक्षेऽपि नीलत्वाद्भौमत्वं सिद्धमेव ॥ ये त्वाहुः वियति विततानां सूक्ष्माणां पृथिव्यवयवानां कृष्णो गुणस्तम इति तेषां निराधारनैल्योपलम्भो ऽशक्यसाधन इत्यभिप्रायेणाह । तन्न नैल्यमिति । हेत्वन्तरमाह चटुलेति । चटुलत्वबहुलत्वविरलत्वादिकं हि द्रव्यधर्म एव न च तदुपलम्भो नास्ति नीलोपलम्भो वा । विश्वविरोधात् । न चाचालोकापसर्पणादिहेतुभेदैश्चटुलत्वमारोपितं प्रत्यक्षभ्रमेषु गुणमात्राधिष्ठानत्वादृष्टेः ।

* परावरविभागवदिति पा० ।

गन्धो वातीत्यादिष्वपि द्रव्याभिप्रायेण प्रयोगः । यदि स्वतन्त्र-द्रव्यं तमः तदा तत्तद्गत्यागत्यनुविधानं कथमित्यत्राह । छायाव-दिति । यथाऽयस्कान्तस्थितिगत्यनुविधानं पृथग् द्रव्यस्याप्ययसो दृश्यते तथा ऽत्रापि स्यात् यथादृष्टि स्वभावव्यवस्थापनात् । ननु पार्थिवत्वरूपवत्त्वे स्पर्शवत्त्वव्याप्ते। न च ध्वान्ते स्पर्श उपलभ्यते अतस्ते उभे तस्य न स्त इत्यत्राह । स्पर्शाव्यक्तिरिति । तमःस्पर्शस्यायो-ग्यत्वादित्यभिप्रायेण नीलत्वसाम्याच्च हरिशिलालोकदृष्टान्तः, यन्नीलं तदालोकसहकृतचक्षुर्ग्राह्यं तमश्च न तथा ततश्चात्रुपप्रत्ययाभावे नीलत्वाभिमान इत्यत्राह । तत्र चेति । आलोकोपलब्धावालोका-न्तरं न सहकारि तथा ऽत्र स्यात् विषयस्य सतस्तत्र सहकारित्व-मिति चेत्। अथापि वस्तुभेदे वैरूप्यं सिद्धम् । एवं ध्वान्ते ऽप्यालोक-नैरपेक्ष्यं स्यात्। अलङ्घनीयनिदर्शनान्तरमाह । ससिद्धाञ्जनेति । अञ्ज-नविशेषसहकृतं हि चक्षुरन्धतमसेऽपि पदार्थान्दर्शयति तथेहापि स्यात् तत्र सहकार्यन्तरप्रभावादिति चेत् अत्राप्यालोकाभावस्य सहकारिणः प्रभावादित्यङ्गीकुरुष्व । यथा च किंचिद्बहलालोकग्राह्यं किंचिन्मन्दालोकेनापि तथा किंचिदालोकग्राह्यं किंचिन्न तथेति यथादर्शनं नियमः । दृक्स्वभावाच्च यथा दिवाभीतादिदृष्टेरालोक-नैरपेक्ष्यं तथा दृश्यस्वभावादिहापीति किं नेष्यते । अस्त्वेवं तथाऽप्या-लोकमध्ये किं नोपलभ्यत इति चेत् आलोकनाश्यत्वादिति केचित् उत्सारितत्वादित्यन्ये मध्यन्दिनोल्काप्रकाशादिवदभिभवादित्यपरे ।

अद्रव्यत्वादिपक्षाणामत्रासम्भवसिद्धये ।
आद्यमेव तमोध्वान्तमिति केचिदुपाचरन् ॥

किंच तेजस इव तमसोऽपि शरीरत्वाम्नानादालोकमध्ये तमस्सृष्टिवचनादेकस्मिन् काले तमस्तेजःप्रलयपाठाच्चास्य द्रव्यत्वप्रा-

कृतत्वसिद्धौ रूपवत्त्वेन वायुपर्यन्तव्यपोहः । कृष्णरूपवत्त्वाच्च वह्निजलव्यावृत्तिः सिध्येत् यत्कृष्णं तदन्नस्येति श्रुत्यनुसाराच्च । तदिदं तमः परब्रह्माच्छादकाविद्यानिदर्शनतया विषयावारकं केश्चिदुक्तं तदसत् ।

तमोऽव्यवहितालोकस्थितनानार्थदर्शनात् ।
दृग्गतेरविरुद्धस्य दृश्यच्छादकता कथम् ॥
अतो म*र्त्यादिदृष्टीनां दृश्यसम्बन्धमात्रतः ।
दर्शनप्रतिघातित्वं स्वभावात्तमसि स्थितम् ॥ ६० ॥

इति तमसः पार्थिवत्वम् ॥

ये त्वाहुः आलोकाभाव एवालोकविरोधित्वलक्षणसमानधर्मस्मारितनैल्योपरक्तो नीलन्तम इति गृह्यते नञुपश्लेषरहितशब्दवाच्यत्वन्तु प्रलयवादिशब्दन्यायेन स्यादिति तान्प्रतिवक्ति नालोकेति ।

**मू० नालोकाभावमात्रं तिमिरमविरतं नीलमित्येव दृष्टेर्नैल्यं त्वारोपितं चेत्कथमिव न भवेत्क्वापि कस्यापि बाधः । आरोपे चात्र नैल्यं न भवति नियतं भास्वरान्यत्वसाम्यान्नात्रादृष्टं नियन्तृ प्रतिनियतगुणारोपकृप्तेर्गुरुत्वात् ॥ ६१ ॥**

अबाधितं नीलोपलम्भं हेतुमाह । अविरतमिति । आरोपितं नीलरूपत्वं नाभावत्वविरोधीत्यभिप्रायेणाशङ्कते । नैल्यन्त्विति । आरोपस्य कालभेदेन पुरुषभेदेन वा बाधव्याप्तिमभिप्रेत्याह । कथमिवेति । अविरतमिति सूचितमेतेन व्यञ्जितम् । ननु तमो न नीलम् असत्यालोके चक्षुषा प्रतीयमानत्वादिति बाध इति चेन्न ।

* मार्जारमूषकादेः प्रत्यक्षे तमो न प्रतिबन्धकमिति मर्त्यपदम् ।

दृष्टान्तासिद्धेः आलोकाभाव एव दृष्टान्त इति चेन्न । त्वत्पक्षे पक्षदृष्टान्तभेदाभावात् अस्मन्मते तु भावातिरिक्ताभावासिद्धेः, आलोकाभावे दिवाभीतादिचक्षुर्ग्राह्यैर्नीलैर्व्यभिचाराच्च दृग्वैषम्यघट्टग्रथवेष-च व्यवस्थापकं स्यादित्युक्तम् । अतोऽस्मदादिविशेषणेऽप्यनिस्तारः तमोधर्मभूतनैल्यादिदृष्टान्तस्तु तदभावसाधने विरुद्धः । आरोपितनैल्यादिदृष्टान्तस्तु शुक्तिरूप्यशशशृङ्गादिवदनादेयः अनारोपितं तु सत्येवालोके चक्षुषा गृह्यते तथाऽपि भ्रान्तिदशायां गृह्यमाणारोपाभावे ऽपि चाक्षुषभ्रान्तिविषयत्वादेवायं हेतुस्सिद्ध इति चेन्न । तमसि नैल्यारोपसिद्धिमन्तरेणास्य हेतोरनुत्थानात्, भवति हि बाधाद्दृष्टान्तलाभः तेन च स इति मिथस्संश्रयः अस्पर्शत्वादिबाधकान्तरन्तु निरस्तम् । अथ नीलमित्येवेत्यवधारणतात्पर्यभेदसिद्धं दूषणान्तरमाह । आरोपे चेति । अयम्भावः आरोप एवाच न सम्भवति अभावस्य हि स्वरूपमेव हि भेद इति मन्यसे अतस्तद्ग्रहे तदग्रहे वा कथमारोपः एवं च ब्रूषे । आलोकोहि भास्वरः तद्विरोधी च तदभावः कृष्णद्रव्यमपि भास्वरान्यत्वात्तथैव अत आलोकविरोधित्वसाधर्म्यादकृष्णे कृष्णधर्माध्यास इति । एवं सति रक्तपीतादीनामपि तथात्वाविशेषात्तच तदारोपः किं न स्यादिति । अथ यदुक्तं काणादेः आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इति तदयुक्तम् । आरोपे सतीत्यसिद्धेः निमित्तस्य चानतिप्रसङ्गिनोऽनुसरणायोगात् यथा च रज्जौ सर्पाध्यासः तथा कदाचिदम्बुधाराद्यध्यासो ऽपि किं न भवति सत्यां च सामग्र्यां कार्यानुत्पत्तिरिति न लौकिकमेतन्न च यौक्तिकं यच्चोक्तमदृष्टादिकं चात्र नियामकमवसेयमिति तद्दूषयति । नाप्येति । विचित्रादृष्टभेदविषमिते जगति सर्वजन्तुसाधारणस्य दुरुपशमतावन्मात्रभ्रमहेतोरदृ-

ष्टविशेषस्य कल्पने ऽतिगौरवं स्यादित्यभिप्रायेणाह । प्रतिनियतेति ॥ ६१ ॥ आलोकाभावपक्षस्यागमवैगुण्यमाह । ध्वान्तमिति ॥

मू० ध्वान्तं तेजश्च नासीदिति मुनिभिरुपाख्यायि संवर्तवार्ता भावाभावौ निषेद्धुं तदुभयविधिवद्व्याहतत्वादशक्यम् । अन्तर्यं तुच्छतेजः सहपठिततमोदेह इत्यामनन्ति स्याच्चाभावोऽपि भावान्तरमतिमथने वक्ष्यमाणक्रमेण॥६२॥

अर्थोपादानमेतत् शब्दस्तु नासीत्तमो ज्योतिरभून्न चान्यदिति कथमस्य प्रकृतविरोधित्वमित्यत्राह । भावाभावाविति । न हि कस्यचिदेकदैकत्र भावाभावविधिश्शक्यते तद्वदुभयनिषेधोऽप्यशक्यः अन्तत उभयनिषेधस्य उभयविधिविश्रमणेन व्याघातादिति भावः ॥ ६२ ॥ इति तमस आलोकाभावमात्रत्वभङ्गः ॥

भूप्रसङ्गात्तद्भ्रमणादिपक्षं निराकर्तुं स्वपक्षं तावदाह । तिष्ठतीति ॥

मू० तिष्ठत्युर्वीभचक्रं पवनरयवशाद् भ्राम्यतीत्युक्तमाप्तैर्भ्रान्तैः क्लृप्तं त्रिलोकीभ्रमणमिह तथा मेदिनी भ्रान्तिपातौ। तद्भ्रान्तौ प्राक्प्रतीच्योः प्रसजति पतने पत्रिणोस्तारतम्यं पाते गुर्व्यास्तु तस्याः प्रलघु दिवि समुत्क्षिप्तमेनां न यायात् ॥ ६३ ॥

आप्तैः पुराणादिकर्तृभिस्तदनुसारिभिश्च । आप्तैश्च तेषांहिरण्मयेन सविता रथेनेत्यादिश्रुत्यनुसारात् अस्मिन् पक्षे सर्वलोका-

पलम्भस्वारस्यमस्ति । न च गणितादिविरोधः कचोकृतश्चायं पक्षः कार्तान्तिकैरपि । यथा ह्यार्यभटः ॥ उदयास्तमयनिमित्तं नित्यप्रवहेण वायुनाक्षिप्तः ॥ लङ्कासमपश्चिमगो भपञ्जरस्सग्रहो भ्रमतीति ॥

केश्चित् उत्ताना ह वै देवगवा वहन्ति इत्यादिनिर्वहणाय त्रैलोक्यभ्रमणं स्वीकृतं तदुपालभ्यते भ्रान्तैरिति ॥ यथा स्वयं भ्राम्यन्तो बालिशा भुवं भ्राम्यन्तीमभिमन्यन्ते तथेदमिति भावः । यदि स्थिरतयैव दृष्टानां ग्रहनक्षत्राणां भ्रमणं कल्प्यते तदविशेषाद्भुवोऽपि कल्प्यतामिति चेन्न । अपेक्षितस्यान्यथैव सिद्धेः अत्र अनुलोमगतिनौस्थ इत्यादिषु स्थापितस्य भूभ्रमणवादस्य जैनोक्तस्य च भूपतनस्य भ्रान्तिकल्पितत्वमतिदिशति । तथेति । इषीकाप्रोतपचिकादिवत्स्वदेशं मुञ्चती द्रुततरमधरोत्तरवृत्त्या भूः भ्रमतीति हि तद्भ्रान्तिपक्षः अथोत्क्षिप्ताश्शरशिलादयः स्वदेशे तदासन्ने वा कथं निपतेयुः, नित्यं च स्वदेशपश्चिमभाग एव तेषां निपातस्स्यात् उड्डीनाश्च पक्षिणो न कुलायमासीदेयुः, प्रत्यङ्मुखं पततां च तेषां गन्तव्यानि स्वयमपि तूर्णं प्रति गच्छेयुः, प्राङ्मुखं गच्छतां तु दुःखेनापि न सन्निकृष्येरन् एकदिशस्थिते च वर्षेति बलाहके मुहूर्तान्महीशतयोजनमात्रं सिच्येत, अतिकुशलानामपि धन्विनां दक्षिणोत्तरदिग्देशावस्थितस्थिरलक्ष्यवेधो न स्यात् शरविहङ्गादीनामपि धरणीसममेव वायुना नोदनोक्तप्रसङ्ग इति चेन्न । तथाविधस्य प्रबलमारुतस्यानुपलम्भनिरस्तत्वात् सर्वेषां प्रत्यङ्मुखगतिप्रतिरोधप्रसङ्गाच्च । योहि महापृथिवीं प्रभञ्जनः प्रसभमावर्तयति तं कथं लघीयांसो विहङ्गादयः प्रतिसरेयुः, किन्तु पृथिव्याः पूर्वमेव प्राङ्मुखं दूरमपनीयेरन् । किं च ज्योतिर्गणभ्रमणहेतुर्मारुतश्शास्त्रानुग्रहात् प्रत्यक्षविरोधाभावाच्च सङ्गृह्यते भूभ्रमणहेतुस्त्वसौ शास्त्रोपलम्भविरोधान्न कल्प्यः । भुव एव वायुवद-

दृष्टवशात्तादृशभ्रमणोपपत्तेः । स्यादेवं किं नश्छिन्नमिति चेन्न । उपलम्भानुसारस्य च्छिन्नत्वात् । अत एव अनन्ततारागहभ्रमणकल्पनादेकभ्रमणकल्पनं वरमित्ययुक्तं ताराभ्रमणादेरागमिकस्याकल्प्यत्वाच्च तदेतत्सर्वमभिप्रेत्याह । तद्भ्रान्ताविति । भूपतने दोषमाह । पात इति ॥ अयं भावः पातोहि भुवो न तावदुपलम्भागमाभ्यां तयोरिह तद्विपरीतत्वात् । नाप्यनुमानतः गुरुत्वात्पतनस्य प्रतिबन्धके निरोधोपपत्तेः निरालम्बने ने निरवधौ नभसि नित्यं निपतन्तीमलब्धप्रतिष्ठां भुवं कः प्रतिरुन्ध्यादिति चेन्न वासुदेवस्य वीर्येण विधृतानीत्यादिना तत्सिद्धेः । भूपतने चोत्क्षिप्ताश्मशिलादयो न कदाचिद्भुवं प्राप्नुयुः गौरवप्रकर्षकाष्ठाभूताद्भूमण्डलादतिलघीयसां रजःप्रभृतीनामधिकपतनकल्पनं चोपहास्यं पोतवालुकादिन्यायस्त्विह दुर्वचः उपष्टम्भकादिविशेषस्यानभ्युपगमात् तत्कल्पने च तस्याप्यन्यत्कल्प्यम् इत्यनवस्थानात् वायुविशेषस्योपष्टम्भकत्वकल्पने तेनैव नित्यमपतनमिति किं न रोचते तदिह युक्तिमात्रशरणानां निराधारापि स्वभावादेव तिष्ठति भूमिः आगमानुविधायिनां तु सर्वाधारेण ब्रह्मणा सोपधानं निरुपधानं च विधृतेति अतएव । पृथिव्याधारस्थिरतर्कपरम्परानिरस्ता कर्परस्यापि निराधारस्य स्थित्यनुपपत्तेः चतुरुदधिसंक्षोभसहत्वस्य पृथिव्यामेव कल्पयितव्यत्वात् । ये च पतनोत्पतनस्वभावभूतचतुष्टयमयत्वान्न पतति नोत्पतति च भूपिण्ड इत्याहुः तेषामन्यनानतिरिक्ततादृशावस्थानोचितपरिमाणैर्भूतैरारब्धः परिदृश्यमानमृच्छिलादिविलक्षणश्चागत्यान्य एव भूपिण्ड इत्यादिकल्पना केवलमूहमात्रसिद्धा अन्ये दक्षिणोत्तरध्रुवयोरयस्कान्तसमाधिं भूगोलस्यैव हि तादृशशक्तिकल्पनं युक्तं न तु दवीयसोरात्मस्थितिनिर्वाहापेक्षयोः ध्रुवयोः केचिद्भूगोलघनमध्यदेश एव

सर्वेषामधोधोदेशः तदभिमुखदत्तचरणा एव स्थलजलचरः सर्वो जन्तुवर्गः भूमिस्तु तदाश्रिता नानाकेसरपरिवृतकदम्बकुसुमग्रन्थिवत् मक्षिकावृतमधुगोलवच्च तिष्ठति अमरा नराश्च परस्परमधःस्थिता मन्यन्ते । पतनं च सर्वेषां भूगोलमध्यदेशाभिमुखमेव पृथिव्यंशास्त्ववकाशालाभान्न तत्र तत्र प्रविशन्ति अतोमहापृथिव्या न कदाचित्पतनं तामपेक्ष्य कस्यचिदधोदेशस्याभावात् इति तदेतद्भुवोऽधस्तादुपरि च लोकानुपदिशद्भिश्शास्त्रैरुपरुध्येत । यस्तु—

पातालदेशः क्षितिगोलमध्ये सप्तोपदिष्टास्तलपूर्वकास्ते इति ।
यदपि मेरुर्योजनमात्रः प्रभाकरो हिमवता परिच्छिन्नः ।

नन्दनवनस्य मध्ये रत्नमयस्सर्वतोवृतः ॥ इत्यादि ।

तदिदं गणितविसंवादाभावेऽपि शास्त्रान्तरविरुद्धं न कल्प्यं न चोपदिष्टमिति श्रद्धातव्यम् ॥ ६३ ॥ इति भूभ्रमणादिवादभङ्गः ॥

भूपरिधिकल्पनादिषु वैदिकशास्त्रद्वयविरोधं परिहर्तुमाह । ज्योतिरिति ॥

**मू० ज्योतिश्शास्त्रं पुराणाद्यपि न हि निगमग्राह्यमन्योन्यबाध्यं विद्यास्थानं तु सर्वं प्रतिनियतनिजोपक्रियांशे प्रमाणम् । तात्पर्यं तर्कणीयं तदिह बहुविदा भूपरिध्यादिभेदैर्दुर्ज्ञानं सर्वथा यन्मुनिभिरपि परैस्तत्र तूदासितव्यम् ॥ ६४ ॥**

निगमग्राह्यमिति हेतुगर्भं, यद्युभयबाधोऽन्यतरबाधो वा न तत्र बाधितस्य वेदोपकारकत्वं स्यादिति भावः । कथं वा विरुद्धयोरस्याकल्पेन प्रामाण्यमित्यत्राह । विद्यास्थानमिति । येन येनो-

प्रकारेण दशविद्यास्थानानि वेदैरुपजीव्यन्ते तत्रांशे विरोधाभावात्प्रामाण्यं प्रतिष्ठितमित्यर्थः । अंशान्तरे कथमित्यत्राह । तात्पर्यमिति । न ह्यन्यपरवाक्यैरापातप्रतीतार्थस्थापनं यत्र च तात्पर्यं तत्र च न विरोध इति भावः । ननु ज्योतिरागमे पञ्च सिद्धान्ताः प्रवृत्ताः पुराणेष्वप्येवं मतभेदा दृढाः तत्रान्यतमप्रतिक्षेपे मुनयोऽपि यदि मुह्यन्ति किं कर्तव्यमित्यत्राह । दुर्ज्ञानमिति । परैः—ऋषिव्यतिरिक्तैरस्मदादिभिरित्यर्थः ॥ ६४ ॥ इति भूपरिमाणादिविरोधपरिहारः ॥

उद्दिष्टलक्षितेषु त्रिगुणानन्तरं काल परीक्ष्यते तत्रापरस्मिन्परं युगपदयुगपच्चिरं क्षिप्रमिति काललिङ्गानि इति परोक्तेरानुमानिकः काल इति मन्वानः साङ्ख्यसौगतचार्वाकत्रस्थितः कश्चित्कालं निन्हुते । सूर्येति ।

**मू० सूर्यावृत्त्याद्युपाधिव्यतिकरवशतः कालतास्त्वम्बरादेरन्यस्मिन्नन्यधर्मोपनयननियमः प्राग्वदत्रेति चेन्न । कल्पान्तेऽप्येककालः प्रकृतिपुरुषवद्ब्रह्मणो रूपमन्यन्निर्दिष्टोऽनाद्यनन्तो मुनिभिरिति ततः कार्यता चास्य भग्ना ॥ ६५ ॥**

आदिशब्देन विभुद्रव्यान्तरम् उपाधिविशेषाश्च सङ्गृह्यन्ते स्थविरयुवादिषु परत्वापरत्वनिर्वाहाय तत्कारणभूतबुद्धिविशेषविषयसूर्यपरिस्पन्दप्रकर्षनिकर्षादिघटकतया कालः कल्प्यते तत्र सम्प्रतिपन्नैराकाशादिभिरेव तत्तदुपाधिव्यतिकरितैः उपाधिभिरेव वा बुद्धिसन्निकर्षघटितैः तादृशोपाधिबुद्धिभिरेव वा अपेक्षितसिद्धौ किमिह तदतिरिक्तकल्पनया । यद्यतिप्रसङ्गभयाद् बुद्धिविशेषसम्बन्धानादरेण कालोऽन्यः कल्प्यते तथाऽप्यतिप्रसङ्गस्तदवस्थः यथादर्शनं व्यवस्था

च समानेति भावः । कालता परत्वादिनिर्वाहकतेत्यर्थः अथ दिङ्निरूपणे दर्शितमतिप्रसङ्गं तद्वदेव परिहरति । अन्यस्मिन्निति । शास्त्रोक्तं न लाघवतर्कबाध्यमित्यभिप्रायेणाह । नेति । कथं शास्त्रे तदुक्तिरित्यत्राह । कल्पान्तेऽपीति । उक्तं हि वैष्णवे पुराणे विष्णोः स्वरूपात्परतोदिते द्वे इत्यारभ्य रूपान्तरं तद्द्विज कालसञ्ज्ञम् । इति कार्यभूताकाशाद्यन्तर्भावश्चानेन भग्न इति व्यनक्ति । तत इति । एतेन त्रिविधा प्रकृतिः कालः परमाकाशोऽव्यक्तमिति केषांचित्कल्पनापि निरस्ता । ननु जैननिराकरणे कालस्य त्वित्यादिना भाष्येण कालो निराकृतइव भाति । मैवं सर्वप्रतिपत्तिषु तत्तत्पदार्थविशेषणतया सर्वलोकानुभूतस्य न बौद्धादिभिर्नास्तित्वं वक्तुं शक्यं न त्वया पृथक् तदस्तित्वं साध्यं कालोऽस्तीत्यादिपृथग्व्यवहारस्तु पृथक्त्विदुविशेषणानां निष्कृष्य व्यवहारवदिति तन्निर्धारणे तात्पर्यात् अन्यथा शास्त्रैः स्वग्रन्थान्तरैस्सम्प्रदायैश्च विरोधस्स्यादिति ॥ ६५ ॥
इत्याकाशाद्यतिरिक्तकालसिद्धिः ॥

एवमपि कालस्य परमात्मव्यतिरिक्तत्वं न सिद्ध्यति रूपान्तरमिति स्वरूपविवक्षोपपत्तेः तत्स्वरूपैक्ये प्रमाणसद्भावाच्चेत्यभिप्रायेणाह । काल इति ॥

मू० कालोऽस्मीति स्वगीता [illegible] भगवान्काल इत्याप्तवचा हेतुः सर्वस्य नित्यो विभुरपि च परः किम्परेणेति चेन्न । कालान्तर्यामितादेः स खलु समुदितः सम्प्रतीते तु भेदे साधर्म्यं नैक्यहेतुः स हि तदितरवद् घोषितस्त्वद्विभूतिः ॥ ६६ ॥

स्वशब्दोऽत्र परमात्मविषयः गीयते हि कालोऽस्मि लोक-

इत्यकृत्प्रवृद्धः इत्यादि । तद्वत् अनादिर्भगवान्काल इति पराशरेणोक्तमपि व्यापयति कथयतीति आप्रवर्यत्वमस्य देवतापारमार्थ्यं च इत्यादिभिस्सिद्धम् । नित्यविभुना परमात्मनैव त्रैकालिकसार्वत्रिकसर्वव्यवहारसिद्धिमभिप्रेत्याह । हेतुरिति । तदतिरिक्तकालकल्पनस्य निरर्थकत्वमाह । किं परेणेति । रूपान्तरमित्यत्र रूपगतिरयुक्तेत्यभिप्रायेण प्रतिवक्ति । नेति । कालेऽपि सामानाधिकरण्यं तत्तत्पदार्थान्तरेष्विव निर्वहतीत्याह । कालान्तर्यामितादेरिति । आदिशब्देन कालाभिमानिरूपसङ्ग्रहः । सन्ति हि जीवमनोऽहङ्काराभिमाननियतानुबन्धानि सङ्कर्षणादिरूपाणि तद्वदिहापि स्यात् कोभवानुग्ररूप इति प्रश्नसंघटनाच्च सर्वकार्यहेतुत्वनित्यत्वविभुत्वैस्तदैक्यसाधनं निरस्यति । सम्प्रतीते त्विति । वस्त्वन्तर इव भेदकण्ठोक्तिं व्यनक्ति । स हीति । ब्रह्मा दक्षादयः काल इत्यादिभिरिति शेषः । विष्णुमन्वादयः काल इति अत्र तु विष्णुशब्दोऽवतारपरः तस्य तद्विभूतित्वं च तादृशरूपेण ॥ ६६ ॥ इति कालस्येश्वरैक्यशङ्कानिरासः ॥

ये तु महदादिवत्कालतत्त्वमुत्पत्तिनाशवदिति तन्त्रान्तरानुसारिणो वदन्ति तान्प्रतिक्षिपति कालस्येति ॥

**मू० कालस्योत्पत्तितः प्राक्परमपि च लयात् कालनास्तित्ववादी स्वोक्तिव्याघातभग्नो न वदति यदि तत्कोवदेत्कालसृष्टिम् ॥ आम्नस्तत्सृष्टिवादस्तदुपधिपरिणत्यादिभिस्सार्थकस्स्यान्नोचेत्तत्रापि पूर्वापरवचनहतिर्दुर्निवारप्रसङ्गा ॥ ६७ ॥**

उत्पत्तेः पूर्वं नाशतः पश्चाच्च कालोनास्तीति वदन् किं तत्र पूर्वशब्दस्य पश्चाच्छब्दस्य निरर्थकत्वं मन्यते सार्थकत्वं वा

पूर्वेच निरर्थकनिग्रहस्थानापत्तिः । उत्तरत्र कालस्यैव तदर्थत्वात्तत्र कालनिषेधे स्ववचनविरोधः । अथ काले कालो नास्तीत्यविरोधं मन्येत तर्हि सृष्टिप्रलयमध्यकालेऽपि कालाभावात्तत्रापि कालनास्तितां ब्रूयादिति कथं कालसिद्धिः । गत्यभावान्मौनमाश्रित्य यः पूर्वं पश्चाच्चैनास्तीति न ब्रूयात् तदाऽस्मन्मतं न निषेधतीति नास्माभिरुत्तरं देयम् । अथ पार्श्वस्थो यदि कश्चिद् ब्रवीति तस्याप्युक्तदोषस्सम इत्यभिप्रायेणाह । तत्कोवदेदिति । सदेव सौम्येदमग्रआसीत् नासदासीन्नो सदासीत्तदानीम् । इत्यादिश्रुतिविरोधश्चात्राभिप्रेतः । विद्याकालौ भवत्कृतौ इत्यादिषु कालोत्पत्तिवचनं कथमित्यत्राह । आप्त इति । आप्तवाक्यस्य इत्यर्थः । यथा निमेषादिसंवत्सरान्तजनिश्रुतिः पक्षमासादिष्वागमापायिताप्रत्याख्यातिश्च उपाधीनां तत्संयोगादिपरिणतीनां तदभिमानिदेवतानां वा सृष्ट्या अर्थवती तथा ऽसावित्यर्थः । अन्यथा तत्रापि विरोधमाह । नोचेदिति । पूर्वापरवचनहतिः पूर्वं परं च कालो नास्तीति वचनस्य बाध इत्यर्थः । अथ वा पूर्वापरग्रन्थविरोधः प्रलयादिकालमनूद्य हि प्रकृतिविकारास्सर्वे सृष्टिवाक्येषु प्रतिपाद्यन्ते ।

कालोपश्लिष्टवेषेण ह्यभूदस्ति भविष्यतीन् ।
प्रयुञ्जते ऽर्थभेदेषु सदा चास्तिमनेहसः । ६० ।

इति कालोत्पत्तिवादपरिहारः ।

नीरूपद्रव्यस्यापि प्रत्यक्षत्वसम्भवः प्रागेव साधित इति कृत्वा कालप्रत्यक्षत्वं लोकोपलब्ध्या नियमयति । काल इति ।

**मू० कालोऽध्यक्षावसेयः क्षणलवदिवसाद्यंशतोऽर्थान्विशिंषन् साक्षाद्धीस्तत्तदर्थेष्विव भवति**

ह्रि नः क्वापि कालान्वयेऽपि । तत्संयोगाः परत्वादय इति च ततो ऽप्येष नैवानुमेयो नो चेन्न क्वापि लोकव्यवहृतिविषयोऽव्यक्तवत्स्यादनेहा ॥ ६८ ॥

अवसीयमानप्रकारमाह । चणेति । चणमयं तिष्ठतीत्यादिप्रकारेण तत्तदर्थविशेषणतयाऽवसीयत इति यावत् अभिज्ञायां चणरूपेण प्रत्यभिज्ञायां दिवसादिरूपेण चेति विभागः । अनुमीयमानो निर्धिष्यादित्यत्राह । साक्षादिति । प्रत्यक्षप्रतीतौ विशेषणतया दृश्यमानस्य कालस्यानुमेयत्वे तत्तत्पदार्थानामपि सौत्रान्तिकोक्तनयादानुमानिकत्वं प्रसज्यत इति भावः । न चासावनुमातुं शक्य इत्याह। तत्संयोगा इति । कालमनभ्युपगच्छतां बुद्धिविशेषसंघटितसूर्यावृत्त्याद्युपाधिभिरेव वैशिष्ट्यं वस्तूनां परत्वादि अभ्युपगच्छतां तु तत्तदुपहितकालसंयोगाः । न च तदतिरिक्तं दृष्टं कल्प्यं वा इत्यद्रव्यसरे स्थापयिष्यते । कालस्यानुमेयत्वेऽनिष्टं प्रसञ्जयति । नो चेदिति । न हि परत्वापरत्वादिभिः कश्चित्कालोऽस्तीत्यनुमाय तद्विशिष्टतया पदार्थान्व्यवहरन्ति लौकिकाः अतः कालोऽप्यव्यक्तवच्छास्त्रैकवेद्य इति तद्वदेव लोकव्यवहारविषयो न स्यादित्यर्थः । नन्वस्मदादिप्रत्यक्षमप्रत्यभिज्ञारूपं वर्तमानमात्रविषयमिति सम्मतम् । अतोऽस्य पूर्वापरकालविशिष्टविषयत्वमसंभवि पूर्वापरव्यतिरिक्तं तु वर्तमानं न पश्यामः अतः कथं कालप्रत्यक्षत्वम् । इत्थं किं भवान्वर्तमानधियमेव नानुभवति सतीमपि वा निर्विषयां सविषयां वा कल्पितविषयां, न प्रथमः इदं पश्यामीत्यादिव्यवहारोच्छेदप्रसङ्गात् । अत एव न द्वितीयः । अस्वविषयधियान्त्वनभ्युपगमाच्च । न तृतीयः क्वचित्सिद्धस्यैवान्यत्र कल्प्यत्वात् । तथा च तत्सिद्धौत् । रूपादिषु दृष्टं वर्तमानत्वं काले

कल्प्यतामिति चेन्न । क्षणिकरूपादिसन्ततावपि पूर्वापरातिरिक्तवर्तमानत्वस्य त्वया दुर्वचत्वात् अन्यथा कालेऽपि तदुपपत्तेः कालमनिच्छतश्च ते* काले कथं कल्पना । निरधिष्ठानाऽसौ कल्पनेति चेन्न । ईदृशकल्पनाभ्युपगमे माध्यमिकागमप्रवेशप्रसङ्गात् । स्थिरवादे तु रूपादिष्विव केनचिद्रूपेण कालेऽपि वर्तमानत्वं सिद्धम् । ननु रूपादीनां वर्तमानकालसम्बन्धोवर्तमानत्वं नाऽसौ कालस्य स्यात् मैवं त्वयैव कालस्य वर्तमानत्वेन रूपादिवर्तमानत्वनिर्वाहात् ॥

वर्तमाननिषेधे च भविनी विश्वनिन्हुतिः ।
न ह्यतीतं भविष्यद्वा प्रत्यक्षविषयोऽस्ति नः ॥
वर्तमानभ्रमश्चात्र तत एव न सिद्ध्यति ।
पौर्वापर्यातिरिक्ता तु दुस्त्यजा वर्तमानता ॥
अतीतागामिधीरेव वर्तमानमतिर्यदि ।
भूतभाविसमस्ताप्त्या न शोकादिसमुद्भवः ॥
पूर्वापरत्वसम्भेदे वर्तमानमतिर्यदि ।
त्रिकालस्थेऽपि तत्सिद्धेः क्वातीतागामिता भवेत् ॥
प्रारब्धश्चासमाप्तश्च वर्तमानो य उच्यते ।
व्यापारसमुदायोऽसौ विवक्षितफलावधिः ॥
तथापि क्षणभेदेन नष्टत्वादिविकल्पतः ।
वैवक्षिकमिहान्यच्च वर्तमानत्वमक्षतम् ॥

ननु सतोविनाशप्रागभाव एव वर्तमानत्वं तद्विशिष्टेषु पदार्थेषु दृश्यमानेषु किं सतोवा ऽसतोवा कालस्य दृश्यमानतया । मैवं कालासत्त्वपक्षस्य निरस्तत्वात् । तत्सत्त्वे तु तत्साध्यानां पूर्वापर-

* नच वाहाहैव योगे । इति पाणिनीयेनानादेशशङ्का तु नेह प्रसरति च-शब्दस्य भिन्नान्वयाङ्गीकारादित्यवधारणत ।

युगपदादिव्यवहारविशेषाणां तत्प्रतीतिपूर्वकत्वस्य स्वरसप्राप्तत्वात् किंचात्र सत इति वर्तमानत्वविवक्षायां किं विनाशप्रागभावोपश्लेषेण वर्तमानत्वमेव च वर्तमानत्वमित्युक्तं स्यात् । अथ प्रमाणसिद्धत्वादिरूपं सत्वं तदाऽपि विनाशस्य प्रागभावः प्रतियोगिस्वरूपमेवेति तेन रूपेण योगिभिर्गृह्यमाणं त्रैकालिकमपि वर्तमानं स्यात् अतोऽन्यदेव वर्तमानत्वं तच्च कालोपश्लेषेणैव गृह्यते वर्तमानकालोपाधिसम्बन्ध एव वस्तूनां वर्तमानत्वमित्यपि न वाच्यम् उपाधौ तदभावादवर्तमानत्वप्रसङ्गात् उपाधिभिरेव सर्वव्यवहारनिर्णये किमप्रत्यक्षकालकल्पनया ॥ ६८ ॥ इति कालप्रत्यक्षत्वम् ॥

यदि नित्य एकः कालः तस्य कथं परिच्छिन्नानेकस्वरूपत्वमित्यत्र प्रसिद्धं पक्षमाह । कालस्येति ॥

**मू० कालस्योपाधिभेदात्कतिचिदभिदधत्यद्वमासादिभेदं तत्तद्रूपेण कालः परिणमत इति प्राहुरेके तदा तु । ये तत्रोपाधयः स्युस्त इह परिणतिं प्राप्नुयुस्तानुबन्धा नित्योव्यापी च तादृक्परिणतिभिरसौ सर्वकार्ये निमित्तम् ॥ ६९ ॥**

आदिशब्देन भूतभविष्यत्त्वादेरपि सङ्ग्रहः । नित्यस्यापि कालस्य द्रव्यान्तराणामिवावस्थाभेदैस्सर्वमिदं स्यात् अवस्थाश्चात्रोपाधिसम्बन्धमात्ररूपा इति लघीयान्पक्षः । पक्षान्तरमाह तत्तद्रूपेणेति । यादव*प्रकाशैरप्यभ्युपगतोऽयं पक्षः कालोऽनाद्यनन्तोऽजस्रक्ष-

* यादवप्रकाशप्रणीतं ब्रह्मसूत्रभाष्यं मया स्वयं आल्ये अलवरराज्ञीयविद्यामन्दिरे दृष्टम् ।

णपरिणामी मुहूर्तहोराचादिविभागयुक्तर्वेषां परिणामस्पन्दहेतुः इति वचनात्। अयं भावः क्षणरूप एव कालस्य सर्वदा परिणामः तत्संख्याप्रकर्षतारतम्यान्मुहूर्तादिविभागः तत एव चाब्दादीनामाद्यन्तमध्यमाद्युत्पत्तिक्षणविकल्पचोद्यं निस्तीर्णं प्रतिपुरुषमिष्टक्षणारम्भे णाब्दादिगणनापि युक्तैव। अत्र च स्वतः क्षणादिभेदानभ्युपगमे कथमुपाधिभिरपि भेदः स्यात् तेषां कालमात्रेण सम्बन्धे तद्विशेषकत्वायोगात्। तदंशेन सम्बन्धे तु स्वत एव कालांशभेदसिद्धेः। ननु कालविकारेष्वपि कृत्स्नैकदेशसम्बन्धविकल्पदोषस्समानः, विकारान्तरेण भेदे ऽनवस्थाप्रसङ्गश्चेति चेन्न। आश्रयैकदेशवृत्तिगुणादिन्यायेन निर्वाहादिति। अयं परिहार उपाधिसम्बन्धमात्रपक्षेऽप्यविशिष्ट इत्यन्ये मन्यन्ते॥

स्पन्दसन्ततिसिद्ध्यर्थं कालस्याणुत्वकल्पनम्।
आशावसानतोक्तानां दुराशामात्रजृम्भितम्॥
क्रियासन्ततिवत्काले परिणामपरम्परा।
किं न स्यात्स्वप्रकर्षाद्यैः परत्वादिप्रसाधिका॥
एकाश्रयक्रियासंख्याकाल इत्याप्रभाषितम्।
कालोपाधिविशेषाणां सर्वेषामुपलक्षणम्॥

अत्र परिणतिपक्षमनूद्य तत्राप्युपाधिव्याप्तिमाह। तदा त्विति। अनुबन्धाः ऋतुलिङ्गादयः आनन्तर्यनियमादुत्तरोत्तरकार्याणामुपाधिमूलत्वं च सिद्धम्। ऋतुलिङ्गादीनां तु न कालकार्यहेतुनियमः। ये तु शैवादयः कालमनित्यमव्यापिनं परिमितकार्यहेतुं च प्राहुः तान्प्रत्याह। नित्य इति। क्षणाद्यंशस्यागन्तुकत्वेऽपि स्वरूपतो नित्यः। नित्यत्वं चात्र प्रध्वंसविरहमात्रं न तु सर्वदा सत्ता कालान्तराभावात्। व्यापित्वं तु क्षणतोऽपि स्यात् सार्वत्रिकाकार्याणामपि केषांचिद्यौगपद्यसिद्धेः नित्यत्वे प्रागेव प्रमाणं दर्शितं

व्याप्तिश्च कालं स पचते तत्र न कालस्तत्र वै प्रभुः इत्यादिभि-
स्सिद्धा त्रिगुणविभूतिवत्कालप्रतिनियतविकारास्तत्र न सन्तीत्यर्थः ।
स्वविकाराणामुपादानतयाऽन्येषां निमित्ततया वाऽस्य सर्वहेतुत्वं
कालः पचति भूतानीत्यादिभिर्गम्यते तदपि सर्वत्र सन्निहितस्य ।
ननु "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । सर्वव्यापी सर्व-
भूतान्तरात्मा" इत्यादिषु एकस्य सर्वव्यापकत्वं श्रूयते । अतस्तद्व्या-
प्यस्य कालस्य कथं विभुत्वम् । इत्थं । न हि न्यूनदेशवर्तित्वमेव
व्याप्यत्वं तथा सति समव्याप्तिभङ्गप्रसङ्गात् तर्हि तद्वदन्योन्यव्याप्य-
त्वमिह स्यादिति चेत् किमत्रानिष्टं परस्परप्रवेश्यत्वाद्यनभ्युपगमात् ।
द्वयोरपि सर्वसंयोगित्वे विरोधाभावात् अतो यत्र कालस्तत्र सर्वत्र
परमात्माऽस्तीति तस्य कालव्यापकत्वम् इदं च तस्य धर्मभूतज्ञाने-
ऽपि द्रष्टव्यं परमात्मस्वरूपैकदेशे विश्वं व्यवस्थितमित्येतदपि तादृ-
शव्यतिरिक्तविषयम् अन्यथा तस्य ज्ञानानन्दत्वादेरपि एकदेशित्वप्र-
सङ्गात् । न चैवं सति सर्वजीवानां व्यापित्वेऽप्यविरोधः स्यादिति वा-
च्यम् अणुत्वश्रुत्या तत्प्रतिषेधात् इति । ननु कालतो देशतो व्यतिरे-
कग्रहणस्याशक्यत्वान्नित्यविभूनां कारणत्वमेव न सिद्ध्यति कुतस्सर्व-
कारणत्वमित्यनुयोगश्च धर्मिग्राहकेणैव निरस्तः । अस्ति हि लोके-
ऽप्युपदेशतोऽपि तत्तद्वस्तुषु कारणत्वग्रहणम् । अथ स्यात् नियतपूर्व-
सत्त्वं कारणत्व नियमश्चास्मिन्सत्येवेदं भवतीत्येवंरूपः तत्रावधार-
णसिद्धोऽन्यदा नास्तीत्ययमर्थो नित्येषु च विभुष्वग्रहणा इति मैवं
प्रसङ्गतोऽपि नियमसिद्धेः । तथा हि, इदं सर्वकारणमिति बोधय-
तामयमाशयः, यद्येतन्न स्यात् सर्वं नोत्पद्येत अतस्सर्वोत्पत्तिप्रयो-
जकमेतदिति न पुनर्यदा यत्रेदं नास्ति तदा तत्र सर्वं नास्तीति अत-
स्सूक्तं नित्यव्यापिनः कालस्य सर्वकार्यहेतुत्वम् ॥ ६६ ॥

इति कालस्यावच्छेदप्रकारविभुत्वसर्वकार्यहेतुत्वानि ॥

प्रकृतचिन्ता*वर्गस्य परब्रह्मवैभवव्यञ्जकतया सार्थकत्वं प्रथयति । वायुरिति ॥

मू० वायुर्दोधूयते यद्वदयमुडुगणो बम्भ्रमीति द्रुतं खे तेजो जाज्वल्यते यद्वदपि न जलधिर्माधवीं दोधवीति ॥ भूर्यद्वा बोभवीति स्थिरचरधृतये तच्च तादृक्च सर्वं स्वायत्ताशेषसत्तास्थितियतनपरब्रह्मलीलोर्मिचक्रम् ॥ ७० ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु तत्त्वमुक्ताकलापे जडद्रव्यसरः प्रथमः ।

---

माधवीं पृथिवीं मेघोदयस्सागरसन्निवृत्तिरित्यादिसूक्तं स्मारयति तच्च तादृक्चेति । यतनं व्यापारः सुग्रहमन्यत् ॥ ७० ॥ इति सर्वतत्त्वस्थितिप्रवृत्तीनामीश्वरेच्छायत्तत्वम् ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु सर्वार्थसिद्धौ जडद्रव्यसरः प्रथमः ।



---

* निरूपितस्यामुष्य सर्वार्थस्य परब्रह्मशरीरतया परब्रह्मनिरूपणरूपताऽस्तीति तु परमतात्पर्यार्थः ।

# तत्त्वमुक्ताकलापे द्वितीयो जीवसरः प्रारभ्यते ।

मू० यो मे हस्तादिवर्ष्मेत्यवयवनिवहाद्भाति भि-
न्नस्स एकः प्रत्येकं चेतनत्वे बहुरिह कलहो
वीतरागो न जातः ॥ तत्सङ्घातातिरिक्तेऽ-
प्यवयविनि कथं तेष्वसिद्धा मतिस्स्यात्
सङ्घातत्वादिभिर्वा घट इव तदचित्स्यान्म-
मात्मेत्यगत्या ॥ १ ॥

## सर्वार्थसिद्धौ द्वितीयो जीवसरः प्रारभ्यते ।

अथ प्रत्यगर्थे जीवस्तावन्निरूप्यते तत्र चार्वाकेणापि दुरपह्नवं प्रमाणमाह । य इति । हस्तादिवर्ष्म हस्तादिरूपं शरीरमित्यर्थः मम हस्तादि मम वर्ष्मेति वा पृथगुदाहर्तव्यम् । अस्ति तावदयं व्यतिरेकप्रत्ययः तत्र न तावदेकोऽवयवोऽवयवान्तराणि ममेत्यभिमन्यते तथाऽनुपलम्भात् व्यवस्थापकाभावाच्च । सर्वावयवविषयश्चासौ ममकारः । न चावयविनोऽयं स्वावयवाभिमानस्तन्निरासात् । नापि सङ्घातस्सङ्घातिनोऽभिमन्यते संसर्गस्य तदयोगात् । संसर्गिणां तु दत्तोत्तरत्वात् । एवमवयवेषु बहुष्वभिमन्तव्येष्वबाधितैकप्रत्ययविषयोऽभिमन्ता हस्तादिभ्यस्तत्सङ्घाताच्चान्य इत्यभिप्रायेणाह । स एक इति । स्मर्यते च पिण्डः पृथग्यतः पुंसश्शिरःपाण्यादिलक्षण इत्यादि । अवयवोपचयापचयविनाशादिकालेष्वपि स एवाहमिति प्रत्यभिज्ञाविषयः कालभेदेऽप्यभिन्न इति चात्र भाव्यम् । अन्यथा पाण्याद्यवयवच्छेदे हि तदनुभूतस्मरणं न स्यात् अन्यदृष्टस्यान्येन स्मरणायोगात् । न च तदनुभववासनासङ्क्रमादन्योऽपि स्मरति मात्राद्य-

नुभूतस्य गर्भादिभिः स्मरणप्रसङ्गात् । न च संसर्गे वैषम्यं कल्प्यं नियामकाभावात् । वासनासङ्क्रमश्च पटादिषु मृगमदादेर्द्रव्यस्य सङ्क्रमः न चेह तथा त्वयैशानभ्युपगमात् गुणसङ्क्रमो न क्वचिदपि । न चात्र हमा*त्रिप्रकाष्ठन्यायः दुःखादेरपि तथोत्पत्तिप्रसङ्गात् । कल्प्येषु च नियामकादृष्टेः ।

सर्वबोधैश्च हृत्कोशे संस्काराधानमित्यपि ।
न दृष्टं न च तत्क्लृप्तौ लिङ्गं किमपि दृश्यते ॥
न च संस्कारकोशस्ते सङ्घातात्मा प्रतिक्षणम् ।
प्रचयापचयाभ्यां स्याद्भिन्नः स्मर्ताऽत्र को भवेत् ॥

प्रत्येकचैतन्यपक्षे दूषणान्तरमाह । प्रत्येकमिति । अयम्भावः बहूनां हि चेतनानां कार्यवशात्संहतानामपि परस्परमीर्ष्यासूयादयो दृश्यन्ते नात्र कदाचिदपि तथा । मिथश्चैते किमर्थमुपकुर्य्युः न तावददृष्टार्थे त्वया तदनभ्युपगमात् । न चैकग्रामवर्तिनामिव कार्यतोऽन्योन्यमुपकारः क्वचिदपि देहे तादृगभिसन्धेरदर्शनात् एक एवाहं सर्वैरवयवैर्यथाहमधिष्ठितैः स्वात्मन उपकरोमीति सर्वेषां स्वसंवेदनसिद्धमिति । ननु स्वोपकारनिरपेक्षपरोपकर्तारः पराभ्यसूयारहिताः स्वपाण्यादयः स्वहेतुशक्त्या यदृच्छातो वा सिद्धा इत्यत्राह । वीतराग इत्यादि । जातः कश्चिच्चेतनः स च रागद्वेषादिरहितः तदा सर्वप्रवृत्तिनिवृत्तिभङ्ग इति भावः । आवृत्त्याऽन्यो ऽप्यर्थः । जातमात्रो हि जन्तुः स्तन्यादिवाञ्छायुक्तस्तदर्थप्रवृत्त्या निश्चीयते तदवस्थस्य च रागादयो भवान्तरीयसंस्कारोद्बोधमन्तरेण न युज्यन्ते ततश्च देहतदंशव्यतिरिक्त आत्मेति । एवम्मनुष्यादिशरीरप्राप्तिदशायामदृष्टविशेषात्पूर्वजन्मानुभवसंस्कारभेदैरेवमतिरुचि-

* हमा स्याल्लवणाकरः ।

भेदाश्च युज्यन्ते । अवयविवादमन्वारुह्याप्याह । तत्सङ्घातेति । अयं भावः अवयवगतविशेषगुणपूर्वका एव ह्यवयविविशेषगुणास्तद्वादिभिरिष्यन्ते प्रत्यवयवचैतन्यं च निरस्तमेव। नन्ववयवनिष्ठं चैतन्यं सूक्ष्मवर्तित्वात्सूक्ष्मम् । अवयविनिष्ठन्तु स्थूलवर्तित्वात्स्थूलं तदेव व्यवहारयति मैवम् । त्रसरेणुकल्पानामपि जन्तूनां प्रवृत्तिदर्शनात् अतोऽपि स्थूलतमानाम्मनुष्यमातङ्गाद्यवयवानां पृथक्स्वधीपूर्वप्रवृत्तिप्रसङ्गात् । न च मनुष्याद्यवयवेषु चैतन्यमनुद्भूतमिति वाच्यम् । अनुद्भूतेरुद्भूतारम्भायोगात् । यत्तु सूचितं सुरगुरुणा पृथिव्यापस्तेजोवायुरिति तत्त्वानि तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवदिति । इदमपि प्रत्येकसमुदायादिविकल्पदोषोत्तया दत्तोत्तरम् । अस्ति हि प्रत्यवयवं किण्वादीनां संसर्गविशेषे मदशक्तिः अम्लकर्पूरादिषु विषशक्तिश्च । एतेन चूर्णहरिद्रासंसर्गजरागादयोऽपि निरूढाः । ननु चैतन्यमिति न कश्चिद् गुणः यस्याधारोऽपेक्ष्यः किन्तु याऽसौ युष्माकं चैतन्यसामग्री सैव चैतन्यपदार्थः स्यात् । व्याहारव्यवहारयोस्तयैवोपपत्तौ मध्ये गुणविशेषकल्पने गौरवादिति तन्न । तस्याः प्रत्यक्षत्वायोगात् प्रत्यक्षाप्रत्यक्षसमुदायो हि सर्वत्र सामग्री प्रत्यक्षश्च जानामीति बोधः । न च तद्धीरानुमानिकी त्वया कथमप्यतीन्द्रियानुमानानभ्युपगमात् प्रवृत्तिरहितदशायामपि जानामीति सद्भावाच्च ।

देहधातुविशेषो वा विकासो वाऽस्य कश्चन ।
ज्ञानमित्यपि वक्तुं ते न युक्तं तदर्शनात् ॥

हृदयस्थः पित्तविशेषः प्रकाशक इति वैद्यागमस्त्वन्यपरः ये तु लोकायतमित्यत्रायतशब्दविवक्षितमनुमानमपि प्रत्यक्षान्तर्भावेण तत्फलतया वा गृह्णन्ति तान्प्रत्यनुमानान्यप्याह । सङ्घातत्वादिभिरिति । तदिति धर्म्मपरामर्शः अचित् न चैतन्याश्रय इत्यर्थः

विमतमचेतनं सङ्घातत्वाद् घटवत् आदिशब्देन बाह्येन्द्रियग्राह्यत्वा-च्चाक्षुषत्वाद्भूतत्वाद्रूपवत्त्वादित्यादीनां ग्रहणं, तथा विगीता धीः चैत्र-व्यतिरिक्तविषया धीत्वात् मैत्रधीवत् इति । न चैषां प्रत्यक्षबाधः शङ्क्यः देहात्मबोधस्यान्यथासिद्धिसंभवात् व्यतिरेकधीप्राबल्याच्च । ननु भेदधीबलादेषां प्रत्यक्षविरोधः परिजिहीर्षितः सा तु न भेदसा-धिका ममात्मेत्यभेदेऽपि तद्दृष्टेरित्यत्राह । स्यादिति । अयमभावः मम हस्तः शरीरमित्यादिप्रत्ययाः मम गृहमित्यादिवद्व्यक्तव्यतिरेकाः ममात्मेति धीस्तु घटस्य स्वरूपमितिवदभेदेऽपि निर्दिष्टविशिष्टांश-निष्कर्षगोचरतया तन्मात्रभेदस्यापिकाऽगत्या स्वीकृता नान्यथापि अतिप्रसङ्गादिति ॥ १ ॥

अथ स्यात् अस्ति तावत् स्थूलोऽहं जानामीत्यादिधीः तत्र स्थौल्यं शरीरस्थं ज्ञानादिकं तदन्यनिष्ठमिति दुर्विवेचं ममेति भेद-धीश्च नाभेदधियं बाधितुमर्हति अविशेषात् । अनुमानानि च वह्न्यनुष्णत्वानुमानवत्स्युः तत्र निषेध्यं ह्युष्णत्वं वह्नावेव सिद्धमिति चेदत्रापि निषेध्यं चेतनत्वं देह एव ग्राह्यम् । न च प्रत्यक्षप्रतिपन्ने वादिविमतिमात्राद्बाधकानुमानावकाशः, अतिप्रसङ्गात् । विप्रतिपत्त्या सन्देहः सन्देहे न्यायप्रवृत्तिस्स्यादिति चेन्न । दृष्टे कस्मिंश्चिद्विगा-यति वह्नावनुष्णत्वानुमानप्रसङ्गात् । एतेन शास्त्रतोऽतिरिक्तबोधात्स-न्देहः ततश्चानुमानमिति निरस्तम् । तत्प्रामाण्यव्यवसायाव्यवसा-ययोरत्र सन्देहानुदयात् सन्दिग्धशास्त्राद्दृढप्रत्यक्षं हि बलीयः अन्यथा अग्निरनुष्ण इति कस्यचिद्वाक्येनापि सन्देहेऽनुष्णत्वानुमानस्य निर्बा-धत्वप्रसङ्गात् । ऐक्यभेदधीभ्यामेव सन्देह इति चेन्न । अग्नेर्ज्वालेति भेदधियाऽग्नेरुष्णत्वेऽपि केनचिद्धेतुना ज्वालानुष्णत्वानुमानप्रसङ्गात्

सांख्याद्युक्तान्यनुमानानि त्वसाधकतमानि। पठन्ति हि सङ्घातपरार्थत्वादिति अत्राद्ये पत्न्यादिशरीरार्थैर्भार्यादिशरीरैस्सिद्धसाधनता। न च तावदतिरिक्तं खट्वादिदृष्टान्तेऽपि दृष्टं स्वाभिमतात्मपारार्थ्यसाधने स्वप्रसिद्धविशेषणः पक्षः, दृष्टान्तश्च साध्यविकलः, खट्वादौ च संहतपरार्थत्वनियमदृष्ट्या तत्रापि संहतः परः प्रसज्येत अनवस्थाभयात्तस्यासंहतत्वकल्पनाद्वरं शरीरस्या*नन्यार्थत्वकल्पनम्। एवमधिष्ठेयत्वभोग्यत्वाभ्यामधिष्ठातृभोक्तृकल्पनं चायुक्तम् स्वाभिमतात्माधिष्ठेयत्वभोग्यत्वयोस्सर्वत्रासिद्धेः साध्याविशेषाच्च। अधिष्ठेयत्वादिमात्रे हेतावाकारभेदेन स्वेनैव स्वस्य तदुभयसम्भवात्। अधिष्ठेयत्वं हि कस्य चिद्व्यापारेण व्यापार्यत्वं तच्च स्वस्य परस्य चेति न विशेषः भोग्यत्वमप्यनुकूलबुद्धिविषयत्वं तच्च स्वेनैव स्वस्य देहातिरिक्तत्वेऽप्यनुमतम्। यच्चाहुः नेदमनात्मकं जीवच्छरीरम् अप्राणादिमत्त्वप्रसङ्गादिति तत्र जीवच्छरीरं सात्मकं प्राणादिमत्त्वादिति प्रसङ्गानुग्राह्यः प्रयोगः तस्मिन्नप्रसिद्धविशेषणः पक्षः त्वदिष्टस्यात्मनः क्वचिदप्यसिद्धेः। आत्मशब्दवाच्ययत्किञ्चिद्योगविवक्षायां स्वभावयत्नादियोगात्सिद्धसाधनता। किञ्चानेनैव हेतुना जीवच्छरीरं खपुष्पवदित्यपि साधयन्नपि दुर्वारः स्यात्। अप्रसिद्धसाधनस्याभ्युपगमात्। अस्ति किञ्चित्खपुष्पादि†शब्देनोपस्थाप्यं तदेवात्मेति चेन्न। असत आत्मत्वसाधनायोगात् यत्किञ्चिन्मात्रस्य साधने च सिद्धसाधनता

* प्रत्यक्षतः शरीरस्यान्यार्थत्वेन अनन्यार्थत्वकल्पने बाध इति तु नाभिज्ञाभिधानं शरीरान्यार्थतायाः पति-भार्यादिशरीरस्थले परस्परार्थतयैव अन्यार्थत्वानुमानचरितार्थ्ये तदतिरिक्तान्यकल्पकत्वायोगात्। एवं चान्यन्यार्थतायाः परस्परार्थतापर्यवसायाः सं भवे किमधिककल्पनयेति भावः। दृष्टं चान्योन्यार्थत्वेनान्यार्थत्वं लोके स्वामिभृत्यशरीरयोरपि। अनन्यार्थत्वन्योऽन्याप्यसिद्धः। स्वाभिमतान्यार्थत्वसाधने त्वप्रसिद्धविशेषणः पक्ष इति स्पष्टमेव।

† खपुष्पशब्देनेति पु॰ पा॰।

विवक्षितविशेषस्य दुस्साधत्वात् । अपि च सर्वेषु वस्तुषु तत्तदसाधारणधर्मेण सात्मकत्वं साध्यं स्यात् विपक्षे तत्तदसाधारणधर्मविरहप्रसङ्ग इत्यनुग्राहकासिद्धेश्च । अनुपलम्भबाधादिकन्तु न मानम् अतोऽनन्याधिष्ठितस्वयंवाहकयन्त्रन्यायाद्विचित्रभूतपरिणतिविशेषसम्भवोऽयं देहयन्त्र इति ॥ अत्र प्रत्येकसमुदायाविकल्पदौस्थ्यादिप्रागुक्तप्रबलप्रतिक्षिप्तेऽपि पक्षे गाढाभिनिवेशस्य सोपपत्तिकं भेदबुद्धेरनुमानानां च बलीयस्त्वं पुनरनुद्घाटयन्निष्कम्पामैक्यधियमन्वाहृत्य मानान्तरेण बिबाधयिषुः परेष्टं तद्भूलमन्वाह । स्यादिति ।

**मू० स्याद्वाऽसौ चर्मदृष्टेरयमहमिति धीर्देह एवात्मजुष्टे निष्टप्ते लोहपिण्डे हुतवहमतिवद्भेदकाख्यातिमूला ॥ श्रुत्यर्थापत्तिभिश्च स्मृतिभिरपि च नस्सर्वदोषोज्झिताभिर्देही देहान्तराप्तिक्षम इह विदितस्संविदानन्दरूपः ॥ २ ॥**

अन्यथासिद्धिसूचनाय चर्मदृष्टेरिति मौढ्यपरम् । अयमिति गुणक्रियादिविशेषविशिष्टपिण्डावमर्शः संसर्गविशेषादयं भ्रम इति बोधयितुमात्मजुष्टत्वोक्तिः तन्निदर्शनेन शोधयति । निष्टप्त इति । संसर्गजत्वात्सम्भावितान्यथासिद्धिकमैक्यप्रत्यक्षं शास्त्रेण बाधितुं शक्यमित्याशयः । संसृष्टेष्वपि सर्वत्र कथं न भ्रम इत्यत्राह । भेदकेति । यत्र हि सामग्री तत्र कार्यं स्यादिति भावः । नन्वैक्यधीरिह दृष्टा तदन्यथासिद्धिस्तु शङ्किता नेतावता विवक्षितसिद्धिरित्यत्राह । श्रुतीति । श्रुत्या भाविता अर्थापत्तयः श्रुत्यर्थापत्तयः ताभिः । श्रुतार्थापत्तिभिरिति यावत् । सन्ति हि देहान्तरानुभाव्यस्वर्गस्वारा-

ज्यादिसाधनविधायिन्यो यमनरकादिप्रापकश्रुतयश्च न च तत्रानाश्वासः श्रुतिप्रामाण्यस्थापनात् अतोऽर्थादापद्यते देहान्तरानुयायी भोक्ताऽस्तीति, पश्वादिदृष्टफलसाधनविधयश्च तत्तत्फलोपायदशानुवृत्तभोक्तृसापेक्षाः। न चात्र सङ्घातस्य भोक्तृत्वम् उपायसाधकसङ्घातस्योपचयादिना भिदुरस्यानुवृत्त्यसम्भवात् अहमुपायानुष्ठाता तत्फलं भुञ्ज इति च स्वरूपतः कालतश्चाभिन्न एकः प्रतिसन्धीयते, मुक्त्युपायविधयश्च सर्वबन्धनिवृत्तिमदात्मस्थित्याक्षेपकाः। देहात्मभेदं कण्ठोक्त्याऽप्याह। श्रुतिभिरपीति। चः श्रुतिवदनन्ताः स्मृतीस्समुच्चिनोति स्वतःप्रामाण्ये प्राप्ते बाधकासम्भवार्थं सर्वदोषोज्झितत्वोक्तिः देही नित्यमवध्योऽयम्। वासांसि जीर्णानि इत्यादिस्मारणाय देहीत्यादिकथनम्। व्यावर्तकधर्मवर्गप्रदर्शनार्थं सच्चिदानन्दरूपतोक्तिः। रूपशब्दः स्वरूपपरः निरूपकधर्मपरो वा ॥ २ ॥

इत्यात्मनो देहातिरेकः ॥

ये पुनरेवमाहुः चक्षुराद्यन्वयव्यतिरेकानुविधायिरूपादिज्ञानं तन्निष्ठमेवोचितं व्यपदिशन्ति च चक्षुः पश्यतीत्यादि तथा स्पर्शनसुखो वायुः श्रवणकटुश्शब्द इति इन्द्रियेषु च विकलेषु विकलोऽहमिति धीर्जायते सकलेष्वन्यथा, परस्परानुभूतार्थप्रतिसन्धानमपि संस्कारवैचित्र्यात् तच्चैकशरीरानुप्रवेशायत्तम्। अतो हेत्वादिप्रतिसन्धानमपि सिद्धम् अहं पश्याम्यहं शृणोमीत्याद्यपि सर्वेषामिन्द्रियाणामहमर्थत्वात्सिद्धं पञ्चानामपि व्यवहारहेतुभूतं सुखं प्रवृत्तिकारणं शरीरञ्च साधारणं तेनैक एवायं व्यवहरतीति लौकिकावगमः। अनुमानमपि चक्षूरूपग्रहणाधिकरणं चक्षुष्ट्वात् यन्नैवं तन्नैवं यथाऽन्यदिति एवं श्रोत्रादिष्वपीति तान्प्रत्याचष्टे। बाह्याक्षेभ्य इति ॥

मू० बाह्यान्तेभ्योऽन्य आत्मा तदखिलविषयप्रत्यभिज्ञातुरैक्यात् कर्तुः स्मृत्यादिकार्ये करणमिति मनोमानसिद्धं ततोऽन्यत् ॥ प्राणास्सङ्घातरूपा वपुरुदितनयान्न ध्रुवं चेतयन्ते ज्ञानं च ज्ञातृधर्मः क्षणिकमपि च वस्तेन नास्यात्मभावः ॥ ३ ॥

पाण्यादिषूक्तां प्रतिसन्धानानुपपत्तिमिन्द्रियेष्वपि दर्शयितुमाह । तदखिलेति । तेषां चक्षुरादिनां प्रतिनियता विषयाः रूपादयः अखिलानां तेषां प्रतिसन्धाता त्वेकः, योऽहं द्रष्टा स एव शृणोमीति भ्रान्त्या यतच्छब्दाभ्यां द्वयोरेकीकार इति चेन्न । द्वयोरप्येकवदेकत्वमोहायोगात् अन्यस्य मुह्यतोऽनभ्युपगमात् । एकश्चाहं बहुभिरिन्द्रियैरनुभवामीति भेदेन चेति । न च कस्यचिदहं चक्षुरित्यादिधीः स्थूलोऽहमित्यादिदेहात्मबुद्धेश्चेन्द्रियात्मवादेऽपि दुस्त्यजत्वाद्वरमिह देहात्मवादः रूपादिज्ञानस्य चक्षुराद्यन्वयव्यतिरेकानुविधानं तत्करणतयाऽपि स्यात् तथा चाभिमानः चक्षुषा पश्यामि श्रोत्रेण शृणोमीति । अत एव चक्षुः पश्यतीत्यादिकं भाक्तं वैकल्यादिधीश्च चक्षुषा विकलोऽहमित्यादिरूपा न तु चक्षुरहं नास्मीति विरोधात् न हि नष्टमिन्द्रियं स्ववैकल्यमनुसन्धत्ते असत्त्वात् नाप्यन्यत् तस्यावैकल्यात् अन्यथा तत्रापि विरोधात् । यदि परमिन्द्रियान्तरविरहमिन्द्रियान्तराण्यनुसन्दधीरन् तथापि गतस्येन्द्रियस्य नाहमर्थत्वसिद्धिः अन्यथा पाण्यादिविकलोऽहमिति बोधेऽपि पाण्यादीनामात्मत्वप्रसङ्गात् अनुमानतोऽपि बोद्धुस्तस्य रूपाद्यनुपलम्भात् तद्बोधककरणाभाव एव अनुमेयः ततश्चैक एव तत्तत्करणाधीनरूपादिग्रहणोऽहमर्थस्सिद्धः ।

मिथोऽनुभूतप्रतिसन्धानार्थं च संस्कारवैचित्र्यं किमिति चिन्त्यं, यद्या-त्मान्तरेषु स्मृत्युत्पादनशक्तिः तन्न सर्वेषु तत्प्रसङ्गात्। तच्छरीरवर्ति-ष्विति चेन्न। औदरकृम्यादिष्वपि तत्प्रसङ्गात्। शरीरान्तरवर्तित्वात्तत्र न प्रसङ्ग इति चेन्न। भिन्नावयवस्थित्यापि प्रतिसन्धानाभावप्रसङ्गात् तन्नि-धानस्य चाविशेषात् संस्काराणां सर्वेन्द्रियसाधारणहृत्कोशादिवर्तितया शरीरैक्याच्च विशेष इति चेन्न त्वदिष्टसंस्कारकोशे मानाभावात् अने-केषामहमर्थानाम् एकशरीरयोगे च ततश्च वरं यथोपलम्भमेकस्मि-न्नहमर्थे सर्वसंस्काराधानम्। न चोपदेशचेष्टाभिर्मिथोबोधनेनान्योन्य-संस्कारार्पणम् अदर्शनात्, अविचारितरमणीयोऽयं पञ्चानां परस्पर-संस्कारादिलाभ इति, तत्त्वादृशेष्वेव वक्तव्यं। यदपि शरीराद्यैक्यादेक-त्वावगम इति स किं तत्रत्यानामेवान्येषां वा, नाद्यः परस्परानभि-ज्ञत्वात् अनुमानतस्तु भिन्नतयैव सिद्धेः चक्षुश्श्रोत्रादिरूपोऽहमिति भ्रमादर्शनाच्च। न द्वितीयः स्वशरीरसिद्धप्रकारेण परशरीरेऽपि बहु-त्वानुमानात् केवलव्यतिरेकिभिरिन्द्रियाणां ज्ञातृत्वाद्यनुमानमतिप्र-सङ्गाद्यनेकदोषोपहतं ततश्चैकस्यैव सर्वग्रहणाधिकरणत्वे त्वस्मन्म-ते कः प्रद्वेषः। अन्धबधिराद्यभावश्च स्यात् ज्ञातुर्ज्ञानकरणतयैव चक्षु-रादीनां सिद्धेस्तद्विपरीतानुमानानां धर्मिग्राहकबाधश्चेति। अस्तु देहाच्चक्षुरादिभ्यश्चात्माऽन्यः स तु मन एव स्यात् देहादेरन्यत्वात् एकत्वेन प्रतिसन्धानोपपत्तेः असङ्घातरूपत्वेन प्रत्येकादिविकल्पानव-काशाच्च तदतिरिक्तात्मक्लृप्तौ तु गौरवम् अतो मम मन इति भेदो-क्तिः क्लिष्टगत्येति तत्राह। कर्तुरिति। अयम्भावः किमत्र स्मृत्या-दिकरणस्य मनसस्तत्कर्त्रा तादात्म्यं साध्यते तेन वा कर्तुः, न ता-वदाद्यः ततोऽन्यतयैवानुमानतश्शास्त्रतो वा तत्सिद्धेर्धर्मिग्राहक-बाधात्। अत एव न द्वितीयः स्वस्य स्वयमेव स्मृत्यादिकरणमित्यत्र

मानाभावाच्च, करणमङ्गीकृत्य कर्तृनिरासः क्रियत इति चेन्न । ज्ञातृमात्रापह्नवे मनसोऽपि ज्ञातृत्वाभावप्रसङ्गात् तदन्यज्ञातृनिरासे कल्प्येन कृप्रत्यागायोगात् । अथ कर्तारमङ्गीकृत्य करणत्यागः तदा मनस आत्मत्वं न साधितं स्यात् । किन्तु तस्यासत्त्वं तच्च तद्ग्राहकमाने सति न शक्यमिति । अन्यस्त्वाह प्राणाधीना देहेन्द्रियमनसां प्रवृत्तिः आत्मशब्दश्च प्राणे दृष्टः प्राणशब्दश्चात्मनि प्राणस्थितिगमनाभ्यां च जीवति म्रियत इति व्यवहारः सुषुप्तावुच्छ्वासनिश्वासप्रवृत्तौ सत्यामपि सामग्र्यभावाद्बोधाभावः मम प्राणा इत्येतदपि कथं चिन्नेतव्यमिति । अत्र देहात्मवादे निदर्शितान् दोषानतिदिशति । प्राणा इति । अधिकाशङ्का तु प्राणोऽस्मि प्रज्ञात्मा इति श्रुतिस्वारस्यात् । परिहारदार्ढ्याभिप्रायेण ध्रुवशब्दः, देहादिव्यापारहेतुत्वमनैकान्तिकम् । आत्मप्राणशब्दयोर्व्यतिहारोऽनेकार्थतया स्यात् प्राणस्थित्यादौ जीवत्यादिव्यवहार आत्मान्यत्वेऽप्यविरुद्धः प्राणोऽस्मीति तद्वशित्वपरम् । एवमन्यपरवाक्यान्तरैरपि वायुस्वरूपत्वमात्मनो न शङ्क्यम्, साङ्ख्ययोगिमतन्तु बहिष्कार्यमेव । अन्ये तु मन्यन्ते न देहेन्द्रियादिकं भोक्तृ न च नित्यः कश्चिदन्यः सुषुप्त्यादौ तेषां भोक्तृत्वादृष्टेः सति ज्ञाने भोक्तृत्वमिति चेत्तर्हि तस्यैव तदस्तु, किमन्तर्गडुभिरन्यैः । तस्य च भोक्तृत्वमनुकूलप्रतिकूलविषयावगाहित्वं तच्च यदृच्छावैचित्र्यादिति नादृष्टाद्यपेक्षा । न च सुषुप्त्यादौ निर्विषयसन्ततिसद्भावे किंचिन्मात्रं प्रबोधारम्भसामग्रीवैचित्र्याद् यदृच्छयैव वा जागराद्यज्ञानोपपत्तेरिति । बौद्धास्तु ग्राहकाभिमानारूढोऽनादिधीसन्तान एवात्मा अहं जानामीत्यादिबोधस्त्वालयविज्ञानवशादाश्रयकल्पनया वा स्यात्, अतिरिक्तस्तु बाधितत्वादनादेय इत्याहुः तदेतन्मतद्वयं तन्त्रेण निरस्यति । ज्ञानमिति । संविदधीना हि सर्व-

वस्तुव्यवस्था ज्ञानं च ज्ञातृधर्मतयैव वेद्यते, न च ज्ञानस्य भोक्तृत्वम् अनुकूलप्रतिकूलविषयावगाहेऽपि तस्य भोगात्मकत्वं सिद्ध्येत् मम भोग इति मन्यमानस्तु ज्ञातैव भोक्ता आनुकूल्यादिकं हि तदपेक्षयैव उपलम्भविरुद्धकल्पनायोगात् आलयविज्ञानकॢप्तिश्च निष्प्रमाणिका उपलब्धस्य च बोद्धुः कुतो बाधः, धर्मधर्मिभावायोगादिति चेन्न । आदावेव तत्साधनात् प्रत्यभिज्ञातुरेकस्यासम्भवादित्यप्ययुक्तम् । क्षणभङ्गादेरपि निरस्तत्वात् । ज्ञानेतरमिथ्यात्वं च निरसिष्यते अनुपलम्भस्तु बाधकः स्वस्य चेदसिद्धः परस्य त्वबाधकः अन्यथा धीसन्ततिभेदादेरप्यसिद्धिप्रसङ्गात् बुद्धेस्त्वात्मत्वानुमानमिन्द्रियादेरिवायुक्तम् । ननु वर्तमानक्षणमात्रविशिष्टतयात्मोपलभ्यते पूर्वापरकालतदुपाध्यादीनामप्रत्यक्षतया तद्विशिष्टवस्तुप्रत्यक्षत्वायोगात्, अन्यथा परभागस्थितवह्निनाऽपि पर्वतस्य विशिष्टोपलम्भप्रसङ्गे ऽनुमानादिप्रमाणभङ्गः स्यादिति । तदप्यसत् । प्रत्यभिज्ञायाः प्राक्कालविशिष्टग्रहणस्य दर्शितत्वात् । नित्यत्वादीनामपि तत्तत्प्रमाणैरुपस्थापनात् । न च नित्योऽहमित्युपलम्भे सर्वकालोपाधिप्रत्यक्षत्वप्रसङ्गः प्रमाणसिद्धिमात्रेण तथा व्यवहारात् इष्टं चैतदन्यत्रापीति ॥

इत्यात्मन इन्द्रियाद्यतिरेकः ।

मा भूदस्थिरज्ञानानां प्रतिसन्धानाद्यनर्हत्वादात्मत्वं यस्य आत्मवत्तद्धर्मभूता धीर्नित्या सा प्रसरणभेदैस्तत्तदर्थान्प्रकाशयतीति पक्षः तस्य किं तदाश्रयभूतेन नित्यात्मनेति चोद्यमनूद्य प्रत्याह । धीरिति ॥

**मू० धीर्नित्या यस्य पक्षे प्रसरति बहुधाऽर्थेषु सैवेन्द्रियाद्यैस्तेनात्मा ऽजागलस्थस्तन इव किमि-**

ह स्वीक्रियेतेति चेन्न ॥ कल्प्यं चेदात्मतत्त्वं कथयितुमुचितं लाघवं तत्र युक्त्या नित्या सा यस्य तद्वानपि निगममितौ गौरवं नास्य भारः ॥ ४ ॥

धीतद्वन्तौ तावत्पृथग् दृष्टौ तत्र न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते तथा हेयगुणध्वंसात् इत्यादिभिर्द्वयोरपि नित्यत्वं यस्य सिद्धं तस्य कल्पनागौरवरूपो भारो नास्तीत्यर्थः ॥ ४ ॥

इति नित्यबुद्ध्यतिरिक्तात्मसिद्धिः ॥

ननु द्रष्टा श्रोता इत्यारभ्य विज्ञानात्मा पुरुषः इत्यादिषु जीवस्य ज्ञानस्वरूपत्वं श्रूयते अतस्तस्य ज्ञानादतिरेको दुस्साध इत्यत्राह । ज्ञानत्वमिति ॥

मू० ज्ञानत्वं वक्ति पुंसः श्रुतिरिह न पुनर्बुद्धिमात्रस्य पुंस्त्वं प्रत्यक्षादेः प्रकोपादनुगतकथने ज्ञानमर्थप्रकाशः ॥ स्वस्यैवात्मा तु सिद्धिं मतिरनुभवति स्वान्ययोस्सिद्धिभावं ज्ञातुर्जोऽझ्यप्रसङ्गव्युदसनविषया ज्ञानमात्रोक्तयोऽपि ॥ ५ ॥

न ह्यत्र स्वधर्मतादात्म्यं विधीयते अशक्यत्वात् किन्तु धर्मवद्धर्मिणोऽपि विज्ञानात्मत्वं नाम धर्मान्तरमुपदिश्यते । ज्ञानानुवादेनात्मत्वस्य विधिः स्यादित्यत्राह । न पुनरिति । अन्यथा बाधकमाह । प्रत्यक्षादेरिति । आदिशब्देनानुमानशास्त्रयोस्सङ्ग्रहः ज्ञानत्वविधानेऽपि तद्विरोधस्स्यादित्यत्राह । अनुगतेति । कस्य-

चिदर्थस्य प्रकाशरूपत्वमुभयथानुवृत्तं ज्ञानशब्दनिमित्तं तद्द्विधा न विरोध इत्यर्थः । अर्थप्रकाश इत्युक्तं विषयतो विभजते । स्वस्येति । स्वासाधारणेन केनचित्स्वभावेन विशिष्ट इह स्वशब्दार्थः, धर्मभूतज्ञाने तु तावदतिरिक्तग्राहित्वं विशेषमाह । मतिरिति । विज्ञानघन एवेत्यादिभिर्ज्ञानमात्रत्वोक्त्या ज्ञातृत्वनिषेधात्कथमुभयथानुवृत्तधर्मक्लृप्तिरित्यत्राह । ज्ञातुरिति । नात्रावधारणमन्ययोगव्यवच्छेदार्थं किन्तु विज्ञानघन इत्यादिपूर्ववाक्यपरामर्शादंशतोऽपि ज्ञानत्वायोगव्यवच्छेदपरमिति भावः ॥ ५ ॥

इत्यात्मनो ज्ञानमात्रत्वोक्तिनिर्वाहः ॥

सिद्धस्तु देहादिभ्योऽन्य आत्मा स कथमनन्यसाधनः, स्वानुभवबलादिति चेन्न । धर्मतोऽपि तदुपपत्तेः आत्मत्वादित्यनुमानादिति चेन्न । युष्माभिः केवलव्यतिरेक्यनभ्युपगमात् ज्ञानस्य च सपक्षस्याभ्युपगमात्, स्वयंज्योतिष्ट्वश्रुतेरिति चेन्न । ज्योतिश्शब्दस्यात्र भाक्तत्वात् चक्षुस्सहकारिणि तेजोविशेषे हि तन्मुख्यता स्वेन रूपेणाभिनिष्पद्यते इति त्वौपाधिकरूपनिवृत्तिपरम्, इष्टं च भवतामपि स्वधर्मेणात्मनो भानम् । तावतैवान्यथादृष्टेन स्वयम्प्रकाशत्ववादोऽस्त्विति एतत्प्रत्याह । आत्मेति ॥

**मू० आत्मा स्वेनैव सिद्ध्यत्यहमिति निगमैर्यत्स्वयंज्योतिरुक्तः स्वापेऽप्यस्य स्वसिद्धावशयिषि सुखमित्यक्षजा प्रत्यभिज्ञा ॥ चेतश्चान्यानपेक्षं मतिषु न हि भवेत्किं च वेदान्तदृष्ट्या ज्ञानत्वादेष धीवत् स्वविषयधिषणानिर्व्यपेक्षस्वसिद्धिः ॥ ६ ॥**

एवकारोऽत्र परप्रकाश्यत्वनियमनिवृत्तिपरः । यद्यहन्त्वादिरहितः स्वयं प्रकाशते तदा परमतं स्यादित्यत्राह । अहमिति । अहमर्थ आत्मेति सेत्स्यति अतस्तत्प्रकाशे कथं परेष्टावकाश इति भावः । प्रतिज्ञाते मानमाह । निगमैरिति । बहुवचनेन ज्ञानत्ववादिनोऽपि निगमास्तत्परा इति व्यज्यन्ते । यद्यपि हृद्यन्तर्ज्योतिः पुरुष इत्यत्रापि ज्योतिश्शब्दो भाक्तः तथाऽपि स्वप्रकाशे प्रदीपादिवल्लोकदृष्ट्याऽन्यनिरपेक्षत्वं स्वरसावगतं न बाध्यम् । स्वधर्मेणान्यप्रकाशकत्वमुपचारनिमित्तं स्यादिति चेन्न । बाह्यज्योतिषि स्वधर्मनिरपेक्षप्रकाशस्यापि स्वतः प्रतीतेः, स्वधर्मेण भासमानत्वमेव ज्योतिश्शब्दोपचारनिमित्तमिति चेन्न । बाह्ये तदभावात् स्वधर्मतः प्रकाशकत्वं च योऽयं विज्ञानमयः प्राणेषु इति पदान्तरसिद्धतया पुनरुक्तं स्यात्, उपचारनिमित्तव्यञ्जनमात्रं पदान्तरकृत्यमिति तु मन्दम् । स्वयं प्रकाशत्वे सुषुप्त्यादावपि प्रकाशेतेत्यत्राह । स्वापेऽपीति । अयम्भावः प्रत्यभिज्ञाबलात्सुषुप्तावप्यहमर्थोऽस्तीति सिद्धं श्रुतिस्वारस्याच्च प्रकाशमानत्वमपि ग्राह्यं तथा च सुखमहमस्वाप्समिति प्रबुद्धपरामर्शस्वारस्यं च न बाध्यमिति । ननु यदि सुषुप्तावात्मा प्रकाशते तन्मनसैवास्तु कृतं स्वप्रकाशत्वेनेत्यत्राह । चेत इति । अयम्भावः । बाह्यविषयेषु तावच्चक्षुरादीन्यनुमानागमसंस्कारान् वा संगृह्य प्रवर्तन्ते, आत्मनि च तत्तदुपहितं जनितं वा किंचिदुपधायैव, स्वापे तु दृष्टविरुद्धमनोवृत्तिकल्पनाद्वरं श्रुतिस्वारस्यानुरोध इति, अनुमानरुचीनां तदप्यस्तीत्याह । किं चेति । वेदान्तदृष्ट्येति ज्ञानत्वहेतोरसिद्धिपरिहारः । ज्ञानस्य स्वप्रकाशत्वं साधयिष्यत इति तद्दृष्टान्तोक्तिः ॥ ६ ॥

इत्यात्मनः स्वयंप्रकाशत्वम् ॥

कश्चिद्धीरः प्रत्यगात्मानमैक्षत् इत्यादावात्मनः प्रत्यक्त्वं गम्यते तत्किमिति विमर्शे प्रत्येतुः प्रत्येतव्यादव्यतिरेक इति केश्चिदुक्तं तावदाह । प्रत्यक्त्वमिति ।

**मू० प्रत्यक्त्वं पुंसि केचित् स्वविषयधिषणाऽऽधारतामात्रमाहुः स्वस्मै स्वेनैव भानं तदिति समुचितं तत्स्वतस्सिद्धिसिद्धेः ॥ प्रत्यङ् स्वापेक्षया ऽसौ त्वमयमिति मितः स्वेतरैः स्वस्य बुद्ध्या भातं नित्यं परस्मै जडमजडमपि स्यात्परागर्थ एव ॥ १ ॥**

स्वप्रकाशपक्षे तु प्रत्यक्त्वद्वैविध्यमाह । स्वस्मा इति । यदि प्रत्यक्त्वमात्मनः स्वभावः तदा परेणापि गृह्यमाणोऽहमिति गृह्येतेत्यत्राह । प्रत्यङिति । स्वेतरबुद्ध्या गृह्यमाणत्वं न स्वस्मै भासमानत्वम् अतस्तद्बुध्या गृह्यमाण आभिमुख्ये त्वमिति अन्यदाऽयमिति च गृह्येत । स्वापेक्षया तु स्वबुद्ध्या स्वरूपेण वा भासमानतया प्रत्यङ्ङित्युच्यते तेन रूपेणाहमर्थ इति दृशा अहन्त्वं च सर्वात्मानुवृत्तं त्वंभावादिना तु न तस्य बाधः । तर्हि तत्र पराक्शब्दोऽपि किं न प्रवर्तेत इत्यत्राह । भातमिति । जडमजडं वा यन्नित्यं परस्मै भासते तत्परागर्थ एव । न तस्य स्वस्मै भासमानत्वप्रसङ्गः व्यपदेशनियमश्च तत एवेति ॥ १ ॥

इति प्रत्यक्त्वादिप्रकारः । अत्र केचिदाहुः ज्ञातृत्वादिकमन्तःकरणस्यैव आत्मनस्तु साक्षितामात्रम् । यद्वा प्रकृतेः कर्तृत्वम् आत्मनो भोक्तृत्वमात्रं गीतं चैतत् कार्यकारण इत्यादिनेति तान्प्रत्याह । बोद्धेति ॥

**मू० बोद्धा कर्ता च भोक्ता दृढमवगमितः प्रत्यगर्थः प्रमाणैः कर्तृत्वाभाववादे स्वयमिह भगवानान्यपर्यं त्वगायत् ॥ कर्ता शास्त्रार्थवत्त्वात्कृतिषु च स पराधीन आभाषि सूत्रैश्चित्रैः कर्मप्रवाहैर्यतनविषमता सर्वतन्त्राविगीता ॥ ८ ॥**

त्रिभिरपि प्रमाणैर्ज्ञातृत्वादिप्रकारत्रयवानात्मा निस्संशयं बोधितः अतो न तत्रैकमपि निन्होतुं शक्यं किं पुनस्त्रितयं कुतर्कैस्तु किन्नाम दुरपलपमिति भावः । शास्त्रैरात्मनः कर्तृत्वनिषेधे का गतिरित्यत्राह । कर्तृत्वेति । स्वयमिति कर्तृत्वनिषेधक एव स्ववाक्यतात्पर्यमाहेति भावः । भगवानित्याप्ततमत्वव्यञ्जनम् अगायत् पञ्चैतानीत्यारभ्य न स पश्यति दुर्मतिरित्यन्तेनेति शेषः । शारीरके च कर्तृत्वं प्रसाध्य तस्य पराधीनतामात्रं संस्थापितमित्यत्राह । कर्तेति । यदि कर्तृत्वमात्मधर्मः स चेत्पराधीनः तस्य तर्ह्यात्मत्ववदेकरूपः किन्न स्यादित्यत्राह । चित्रैरिति । नात्र केनापि चोदनीयमिति । भावः ॥ ८ ॥

इत्यात्मनः कर्तृत्वादि ॥

अथ यदभावि न तद्भावि यद्भावि न तदन्यथा इति मन्यमानैरुक्तं यत्ननैष्फल्यं तदिदमनूद्य परिहरति । यद्भव्यमिति ।

**मू० यद्भव्यं तन्न न स्याद्यदभवितृ न तद्यत्नकोट्यापि सिद्ध्येद् द्वेधापि व्यर्थयत्ना नर इति यदि नस्स्वोक्तियत्नादिबाधात् ॥ यद्यत्नेनैव भव्यं भवति यतनतस्तत्स्वहेतूपनीताद्दुस्साधा यत्नलभ्ये प्रति यदि यतते तत्र नैष्फल्यमिष्टम् ॥ ९ ॥**

नर इति बहुवचनम् । हेतुमाह । स्वोक्तीति । सर्वेयत्ननैष्फल्यं वदन्किमिति साफल्यवादिनं चोद्मुमीहते, नैष्फल्यवाक्यं च किमर्थं प्रयुङ्क्ते किमर्थं च स्वयं भीतो बुभुत्सुर्वा धावति अतोऽन्वयव्यतिरेकाद्यवसितं यत्नफलमप्रणोद्यम् । आदिशब्देन प्रमाणत्रयसङ्ग्रहः । बाधं सिद्धसाध्यतां च वक्तुं सफलनिष्फलयत्नौ विभजते । यद्यत्नेनेति । यतनमयत्नतस्सिद्धमिति शङ्कां परिहर्तुं स्वहेतूपनीतादित्युक्तं, प्राचीनयत्नजनितादृष्टतो हि तत्सिद्धिरिति भावः । दुस्साधेत्यादिना दुष्कर्ममूलनिष्फलयत्नानुवादः । तत्र नैष्फल्यमिष्टं तस्मिन्नंशे नैष्फल्यं त्वया न साध्यं साध्यमपि तद्विषयमिति भावः ॥ ९ ॥ इति यत्नसाफल्यम् ।

जीवः परस्य ब्रह्मणः औपाधिकांशः घटाकाशमहाकाशवत्तयोर्भेदः जीवानां मिथोभेदस्तु घटकरकाद्याकाशवदिति पक्षं दूषयति । भिन्ना इति ॥

**मू० भिन्ना जीवाः स्वतस्स्युः प्रतिनियततया धीस्मृतीच्छासुखादेः चेतोभेदाद्यवस्था न तु भवति यथा देहबाह्याद्यभेदात् ॥ नित्यान् भिन्नांश्च जीवान्कथयति निगमस्तद्धि नोपाधितस्स्यात् आत्माद्वैतश्रुतीनामितरहृदयता तत्र तत्रैव सिद्धा ॥ १० ॥**

स्वतः न तूपाधितः हेतुमाह । प्रतिनियततयेति । ननु कोऽयं प्रतिनियमः न तावद्बुद्ध्यादीनां स्वरूपभेदः एकस्मिन्नप्यात्मनि तदुपगमात्, नापि भिन्नाधारत्वं तस्यैव साध्यत्वात्, अत एव नासाधारण्यं तत्खल्वाश्रयभेदसापेक्षं, नापि परस्परप्रतिसन्धाना-

भाव: परस्परभावस्यैवासिद्धेरिति । अत्र ब्रूमः यथैकशरीरावच्छिन्न-बुद्ध्यादीनामेकाश्रयतयैव प्रतिसन्धानं न तथा शरीरान्तरजानाम् अन्यथा गुरुशिष्यभावादयोऽपि न स्युः, तदेवं गम्यते चेतात्मा मैत्रतादात्म्यरहितः तदनुभवजन्मस्मृत्यनाधारत्वात् कदाचिदपि तद्गतसुखादिप्रतिसन्धानरहितत्वादित्यादि अथ परोक्तामन्यथा-सिद्धिं परिहरति । चेतो भेदादिति । तुरवधारणे अस्ति हि कल्पभेदे–चेतोभेदः सन्ति च कल्पादौ जातिस्मराः स्वयमागतविज्ञानाः इत्यादेः तत्र प्रतिबन्द्यभिप्रायेणाह । यथेति । न हि देहभेदेन प्रतिसन्धानाभावः पूर्वजन्माभ्यस्तप्रतिसन्धानदृष्टेः न च बाह्येन्द्रियभेदे सर्वधीविरोधात् तद्वच्चेतोभेदोऽपि न व्यवस्थाहेतुरिति ईश्वरात् मिथश्च जीवानां निरुपाधिकभेदः पृथगात्मानं प्रेरितारं च मत्वा जुष्टं यदा पश्यत्यन्यमीशं नित्यो नित्यानाम् इत्यादिश्रुतिस्वारस्यसिद्ध इत्याह । नित्यानिति । मुक्तावपि भेदश्रुतिमभिप्रेत्याह । तद्धीति । ननु अयमात्मा ब्रह्म तत्त्वमसि इत्यादिभिर्जीवब्रह्मतादात्म्ये सिद्धे भेदस्यौपाधिकत्वं ग्राह्यमित्यत्राह । आत्माद्वैतेति । अयं भावः शरीरशरीरिभावेन सामानाधिकरण्यं स्थापयिष्यते आस्तामेतत् यथा यूपादित्यसामानाधिकरण्यं प्रत्यक्षविरोधादन्यपरं तथेहापि स्वरूपैक्यविधानं तावदशक्यमिति तत्वतत्वेति क्वचिद्वीप्सायाः क्वचिद्विशिष्टश्रुतिः क्वचित्तूपचार इत्यादितात्पर्यभेदस्सूच्यते ॥ १० ॥ इत्यौपाधिकभेदवादभङ्गः ॥

अथ स्वाभाविकजीवांशभेदाभेदं दूषयति । जीवा इति ॥

**मू० जीवाः पृथ्व्यादि भूतेष्वणव इव मिथो भेदवन्तः स्वतोऽमी सन्मात्रब्रह्मभाग [illegible] दिह नि-**

**यतयस्तुस्थिता इत्ययुक्तम् ॥ ऐक्यस्याप्यनन्तत्वादनवधि च सति ब्रह्मणि स्यादवद्यम् सत्यं तच्चेत्यभिज्ञैर्बहिरगणि मृषावादतोऽप्येष पक्षः ॥ ११ ॥**

उक्तं विरोधमेव बाधहेतुमाह । ऐक्यस्यापीति । पक्षद्वयसाधारणं दूषणान्तरमाह । अनवधीति । सति ब्रह्मणि सर्वात्मकसद्रूपे ब्रह्मणीत्यर्थः । अस्मिन्पक्षे निरवद्यत्वादिश्रुतिर्निर्विषया स्यात् ईश्वरस्यापि सर्वतादात्म्यप्रतिसन्धायिनः क्लेशादिनिषेधायोगादिति भावः । एतत्पक्षद्वयादविद्याकृतदुःखादिभेदवादो वरमित्यभिप्रायेण सत्यं तच्चेत्याद्युक्तम् ॥ ११ ॥ इति ब्रह्मस्वरूपस्वाभाविकांशजीवभेदभङ्गः ॥

अन्ये त्वाहुः अविद्याशबलं ब्रह्मैव जीवः स च सर्वशरीरेष्वेकः अप्रतिसन्धानम् अविद्यावैचित्र्यात् प्रतिबुद्धास्तु सोऽहं स च त्वमिति प्रतिसन्दधते प्रमाणं चात्र श्रुतिस्मृतय इति एतदपि पूर्वोक्तनीत्या दत्तोत्तरम् । अविद्यास्वरूपादिकं दूषयिष्यते । अत्र चैको व्रीहिरित्यादिवज्जीवैक्यवादास्साजात्यात्स्युः पण्डितास्समदर्शिन इत्यादिभिस्तथात्वावगमात् मित्रामित्रकथा कुतः इत्यादिकं रागादिपरिहारपरं यद्यन्योऽस्ति इत्यादिकं स्वरूपेऽन्यादृक्त्वनिषेधार्थम् । एकोदेवस्सर्वभूतेषु गूढ इतीश्वरविषयम् आकाशमेकं हि यथा एक एव हि भूतात्मा इत्यादिनिदर्शनमपि तत्तत्संसर्गशङ्कितवृद्धिह्रासादिनिषेधार्थं घटध्वंसे घटाकाशो न भिन्नो नभसा यथा इत्यादिकमौपाधिकवैषम्यनिवृत्त्या अत्यन्तसाम्यं व्यनक्ति, न हि घटध्वंसेघटावच्छिन्नः आकाशांशोऽशान्तरेणैकीभवति, आकाशतामात्रं तु घटस्थि-

तावपि सिद्धमित्येषा दिक् तदिह प्रतिसन्धानादिप्रसङ्गे शास्त्रतात्पर्ये च वक्तव्यशेषाभावात्तदुक्तमनुमानादिकमनूद्य दूषयति । देहत्वाद्यैरिति ।

**मू० देहत्वाद्यैर्विगीतं निखिलमपि मया ह्यात्मवत्किंच पुंस्त्वात्सर्वे जीवा अहं स्युर्न यदि भवति ते गौरवादीत्यसारम् ॥ श्रुत्यध्यक्षादिबाधात्प्रसजति च तदा तत्तदैक्यं घटादेः पक्षादेर्वादिनोश्चेत्यलमिह कलहैस्तज्जिगीषादिमूलैः ॥ १२ ॥**

निखिलं सर्वज्ञदेहप्रभृति पिपीलिकादिदेहपर्यन्तं सर्वे जीवाः ब्रह्मादिस्थावरान्ताः न यदि इत्यादिना विपक्षे बाधकोक्तिः असारत्वे हेतुमाह । श्रुतीति । सर्वैर्हि प्रमाणैर्जीवानाम्मिथस्तादात्म्यप्रसङ्गः प्रतिक्षिप्तः । उक्तानुमानवर्गस्याभाससमानत्वमाह । प्रसजतीति । देशान्तराणि एतद्घटेन घटवन्ति देशत्वात् एतद्देशवत् अन्येऽपि घटा एतद्घटात्मानः घटत्वात् एतद्घटवत् इत्यादौ किं वाच्यम् । अध्यक्षादिविरोध इति चेत् समम् । अविद्ययाऽऽत्मनि भेदधीः, ऐक्यन्तु स्वभावः स्यादिति चेत् घटादावपि तथाऽस्तु । न चायमिष्टप्रसङ्गः विवर्तद्वयस्य तादात्म्यानभ्युपगमात् अन्यथा व्यावहारिकव्यवस्थाविलोपात् प्रयुक्तानुमानावयवेष्वपि वाक्यत्वादिना तादात्म्यसम्भवेऽन्यतमपरिशेषः स्यादित्यभिप्रायेण पक्षादेरित्युक्तम् । वादिनोरिति अचेष्टप्रसङ्गत्वसम्भवेऽपि विवादोच्छेदादौ तात्पर्यान्न वैयर्थ्यं तद्विवृणोति इत्यलमिति ॥ १२ ॥

इति सर्वशरीरैकजीववादभङ्गः ॥

अथैकशरीरैकजीववादमनुभाषते । साविद्यमिति ॥

मू० साविद्यं ब्रह्म जीवस्स च न बहुतनुर्नेतरे सन्ति जीवाः स्वप्नादेकस्य लोके बहुविधपुरुषाध्यासवद्विश्वक्लृप्तिः ॥ नेतः प्राक्कोऽपि युक्ता न परमपि स तु प्राप्स्यति श्रेय एको मायोत्थौ बन्धमोक्षाविति च मतमसत्सर्वमानोपरोधात् ॥ १३ ॥

साविद्यं ब्रह्म जीव इति पूर्वस्यास्य च साधारणं, स चेत्यादिविशेषोक्तिः वक्ष्यमाणपक्षाद्वैषम्यं व्यनक्ति । नेतर इति । विचित्रजीवोपलम्भं निर्वहति । स्वप्नादिति । एकमेव शरीरं जीववत् स्वप्नदृष्टशरीरन्यायादन्यानि निर्जीवानीत्यर्थः । शुको मुक्त इत्यादिवैषम्यं परिहरति । नेतः प्रागिति । पूर्वं मुक्ता न सन्ति चेत्पश्चादप्यद्वैतविदो न मुच्येरन्नित्यचेष्टप्रसङ्गतामाह । न परमपीति । तर्हि मोक्षशास्त्रं व्यर्थं स्यादित्यत्राह । स इति । नित्यमुक्तस्यैकशरीरे बन्धमोक्षभ्रमं साधयति । मायोत्थाविति । उक्तं प्रागुक्तहेतुना दूषयति इति चेति । आत्मभेदो हि सर्वप्रमाणैस्सिद्धः तत्र यदि देहान्तरं निर्जीवम् एकमपि तथैव भ्रान्तिसिद्धजीवत्वस्याविशेषात्, एकत्रात्मास्ति जीवत्वं तु नास्ति अत्र तूभयं नेति चेन्न । तेष्वप्यध्यासाधिष्ठानतया आत्मसत्त्वस्य त्वया दुस्त्यजत्वात् अन्यथा, निरधिष्ठानभ्रमप्रसङ्गात् स्वप्ननीत्या लाघवमिच्छतस्तदेव लभ्यं स्वप्नस्य तद्द्रष्टुश्च सत्यत्वात् । इह तु तन्मिथ्यात्वस्य त्वयैवोक्तेरिति ॥ १३ ॥

एकस्य जीवस्योपदेष्टृत्वासम्भवादनिर्मोक्षप्रसङ्गमाह । स्वस्येति ॥

मू० स्वस्य स्वेनोपदेशो न भवति न परब्रह्मणा निष्कलत्वान्नाविद्या चेतयित्री स्वतनुसमधिकं वर्ष्म निर्जीवमात्य ॥ कश्चित्तत्त्वं ब्रवीतीत्ययमुपनिपतद्भ्रान्तिरुन्मुच्यते चेत् तादृग् भ्रान्तिः पुरापि ह्यभवदिति न ते किं तदैवैष मुक्तः ॥ १४ ॥

अत्र स्वात्मैव वा स्वस्योपदेष्टा । अशरीरं वा परं ब्रह्म । विश्वाध्यासहेतुरविद्यैव वा । देहान्तरप्रतीतो जीवो वा । इति विकल्पमनुस्मृत्य पूर्वार्धेन क्रमाद् दूषणम् । ननु अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते इति वचनादुपदेशनिरपेक्ष एव कदाचिद्बोधोऽस्तु । मैवं नैरपेक्ष्यानुक्तेः, जीव इत्येकत्वोक्त्या जीवान्तरासम्भवान्नैरपेक्ष्यं सिद्धमिति चेन्न । एकवचनस्य जात्यैक्यपरत्वात् नैरपेक्ष्येऽपि निस्तारं शङ्कते । कश्चिदिति । शुकादिषु मुक्तिहेतुतया पूर्वमपि तादृशभ्रमजननात्तदानीमेवास्य मोक्षः स्यादित्याह । तादृगिति । परस्मै ब्रवीतीति तदा भ्रान्तिरिति चेत् तथाऽपि अद्वैतं ब्रवीतीत्यवगतेरर्थतः स्वार्थोपदेशभ्रमफलसिद्धेः तदेवं हेत्वनुपपत्त्या नित्यमनिर्मोक्षः, अहेतुकमोक्षे नित्यमुक्तौ च शास्त्रनैष्फल्यमिति तदभ्युपगमे सिद्धान्तत्यागात्कृतं वादेनेति ॥ १४ ॥

इत्येकशरीरैकजीववादभङ्गः ॥

अथ बहुजीवक्लृप्तिपक्षं शङ्कते । तोयेति ॥

मू० तोयाधारेषु दोषाकर इव बहुधोपाधिषु ब्रह्मशुद्धं छायापन्नं विशेषान्भजति तनुभृतस्तत्प्रतिच्छन्दभूताः ॥ इत्यप्यत्यन्तदुःस्थं

**प्रसजति च तदा जीवनाशोऽपवर्गश्छायाच्छायावदैक्यं न भजति न च तद्दर्शनं ब्रह्मणास्ते ॥ १५ ॥**

नित्यशुद्धस्य ब्रह्मणो न भ्रान्तिः यथा नित्यशुद्धेऽपि चन्द्रमसि तत्प्रतिबिम्बेष्वाधारभेदानुगुणा विशेषाः काल्पनिकाः एवमविद्याविवर्तेषु पृथगभिव्यक्तं ब्रह्म तत्तदनुगुणविचित्रविशेषवदिव भाति ईदृशभेदक्लृप्त्या मुक्तादिसमस्तव्यवस्थोपपत्तिः इमं पक्षं दूषयति । इत्यपीति । अयं भावः यदि ते बद्धमुक्तबद्धमोचकादिव्यवस्था भ्रान्तिसिद्धा सा तर्ह्येकजीववादेऽप्यविशिष्टेति किं बहुजीवबद्धाविद्याकल्पनेन । ब्रह्मणो जीवभावानुपपत्त्या पृथग्जीवाः कल्प्या इति चेन्न । मिथ्याभूतजीवत्वस्य विरोधाभावात् अन्यथाऽध्यासाधिष्ठानत्वस्य विरोधप्रसङ्गात् । न च निरधिष्ठानं भ्रममिच्छसि दुर्घटत्वमविद्याया भूषणमिति च पश्यन् ब्रह्माज्ञानं किं नानुमन्यस इति । अस्मिन्पक्षे दूषणान्तरमाह । प्रसजतीति । यथा प्रतिबिम्बाधारनिवृत्तौ तत्रोत्पन्नस्यानिर्वचनीयस्य प्रतिबिम्बस्य नाशः तथा तत्तदविद्यानिवृत्तौ तत्ते जीवा नश्येयुः, मुक्तौ जीवानां ब्रह्मणैकीभावमात्रं न तु नाश इत्यत्राह । छायेति । छायावत्कल्पिता जीवा इति मन्यसे तत्र हि बाधदशायामाधारनिवृत्तिदशायां वा छायायां छायावता सहैक्यापत्तिर्न दृश्यते तद्वदिहापि । तैमिरिकचन्द्रभेदन्यायेनाप्यत्र न भवति तत्रापि बाधदशायां द्वितीयादिचन्द्राणां प्रथमचन्द्रैक्यापत्तेरनभ्युपगमात् दूषणान्तरमाह । न चेति । बिम्बप्रतिबिम्बयोर्द्वितीयादिचन्द्राणां चन्द्रद्रष्टा कश्चिदन्यसिद्धः इह तु न कश्चित् ब्रह्मणो द्रष्टृत्वरूपवत्त्वाङ्गीकारात् अविद्यायास्तु द्रष्टृत्वप्रसङ्गाभावात् प्रतिबिम्बस्थानीयानां जीवानां स्वाध्यासहेतुत्वायोगात् अनादिर-

ध्यासो हेतुनिरपेक्ष इति चेन्न । स्वरूपानादेरविद्ययाऽपि नैरपेक्ष्यप्रसङ्गात् । प्रवाहानादित्वे जीवानां भङ्गुरत्वप्रसङ्गात्, तथा च धीसन्ततिवादसमत्वम् । अकृताभ्यागमादिप्रसङ्गः श्रुत्यादिविरोधश्च स्यात् ईदृशभ्रमनिरासाय सूचितं च स्वप्रेोत्थितं प्रति स एव तु कर्मानुस्मृतिशब्दविधिभ्य इति ॥ १५ ॥ इति ब्रह्मप्रतिच्छन्दजीववादभङ्गः ॥

ब्रह्मदत्तादिभिरुक्तं जीवानां स्वरूपतस्सृष्टिसंहृतिविषयत्वमनूद्य दूषयति । एकमिति ॥

**मू० एकं ब्रह्मैव नित्यं तदितरदखिलं तत्र जन्मादिभागित्याम्नातं तेन जीवोऽप्यचिदिव जनिमानित्यनध्येतृचोद्यम् ॥ तन्नित्यत्वं हि साङ्गश्रुतिशतपठितं सृष्टिवादः पुनः स्याद्देहादिद्वारतोऽस्येत्यवहितमनसामाविरन्त्यैकरस्यम् ॥ १६ ॥**

जनिमानिति लयोपलक्षणम् अनध्येतृचोद्यं, कतिपयाध्येतुस्तात्पर्यानभिज्ञस्य वा चोद्यं साङ्गशब्दः सोपबृंहणपरः अजो नित्यः शाश्वतोऽयं पुराणः प्रकृतिं पुरुषं चैव इत्यादिश्रुतिस्मृतिशतमिह भाव्यम् । सृष्टिवादः तोयेन जीवान्व्यससर्ज इत्यादिः पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि इत्यादिलयवाद उपलक्ष्यते ब्राह्मणो जायते क्षत्रियोजायते इत्यद्यतनजन्मादौ दृष्टं तद्वत् प्राकृतिकनैमित्तिकसृष्ट्यादावप्यचिदुपष्टम्भेन निर्वाह इत्यादिशब्दग्राह्यः । अवहितमनसां श्रुतितात्पर्यैकाग्रमनसामित्यर्थः ॥ १६ ॥ इति जीवनित्यत्वम् ॥

आत्मानित्यत्ववादिनश्चतुर्विधाः तेषु ज्ञानात्मवादिनश्शरीरस्थितावप्यात्मनो भिदुरत्वमाहुः प्राणेन्द्रियात्मवादिन आत्मानमाश-

रीरस्थायिनम् । पौराणिकैकदेशिनस्तु प्रलयान्तम् । औपनिषदाभासास्तु मोक्षावधिकम् । एतेषु दूषणवर्गः किंचिदुद्ग्रहणेनोपलक्ष्यते । स्थैर्यमिति ॥

मू० स्थैर्यं चेन्नाभ्युपेतं भवभृति न भवेदैहिकार्थप्रवृत्तिः देहान्तत्वे तु धर्म्ये पथि निरुपधिका विश्ववृत्तिर्न सिद्ध्येत् ॥ आकल्पस्थायिपक्षे कृतमफलतया मुक्तिमार्गोपदेशैरामोक्षस्थायितायां श्रुतिरनभिमुखी पूरुषार्थे चतुर्थे ॥ १७ ॥

तत्र स्थैर्यं चेन्नाभ्युपेतमित्याशुतरविनाशित्वानुवादः बाधकमाह । न भवेदिति । आत्मानमुत्तरकालानवस्थायिनं मन्यमानोन किंचिदुद्दिश्य प्रवर्तेत तत्खल्वायत्यां सुखं दुःखनिवृत्तिं वा ऽभिसन्धाय । तत्कथं घटेत फलकाले स्वाभावात् स्वकाले फलाभावात् सन्तानैक्यादिकुसृतयस्तु प्रागेव निरस्ताः । द्वितीयपक्ष दूषणं देहान्तत्व इति । यदि देहावधिरात्मा तदा देहात्मवाद इव प्रेक्षावतो महाजनस्य धर्मादनपेते मार्गेऽनादिस्सार्वेचिकी दृष्टफलाद्युपाधिरहिता प्रवृत्तिर्न घटेत तदाहुः विफ*लाविश्ववृत्तिर्नो न दुःखैकफलापि च । दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृश इति । तृतीयं दूषयति । आकल्पेति । अयं भावः यदि सर्वदुःखनिवृत्तियुक्त आत्मनाश एव मोक्षः स तर्हि कः कल्पान्ते स्वयमेवैष्यति । न चासौ पूर्वं साध्यः त्वरया मध्ये स्वनाशार्थमुपायग्रह इति चेन्न । स्वनाशस्य सर्वप्रमाणैरपि पुमर्थत्वासिद्धेः । एवं च भाषितम् । अहमर्थवि†नाशश्चेन्मोक्ष इत्यध्यवस्यति । अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः

* कुसुमाञ्जलावुदयनाचार्याः ।
† सिद्धित्रये भगवद्भिर्यामुनाचार्यपादैः ।

इति । चतुर्थे बाधकमाह । आमोचेति । अनभिमुखीति स्वनाशरूपं चतुर्थपुरुषार्थं न वक्ति स्वेन रूपेणाभिनिष्पन्नस्य भोगादीनप्याह । ननु विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यतीति जीवविनाशः श्रूयते मैवम् । लोकधीरूढानुवादमात्रत्वाद्दर्शनमात्रपरत्वाद्वा । स्मर्यते च । अदर्शनादिहायातः पुनश्चादर्शनं गत इति । अन्यथा कथम् अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा इति तन्नित्यत्वसाधनम् । ननु न प्रेत्य संज्ञाऽस्तीति मुक्तस्य निस्सम्बोधत्वश्रुत्या नाशस्सिद्धोत्, न । देहादिभिरेकीकृत्य बुद्धेः तन्निबन्धनाख्याभेदस्य वा निवृत्तौ तात्पर्यात्, ब्रह्मण्यात्यन्तिकलयः कथम् अनात्यन्तिकवत्, स्वविशिष्टे ब्रह्मण्यौपाधिकरूपेण विशेषत्यागेन श्लेषस्य विवक्षितत्वात्, अन्यथा मुक्तिदशायां भेदोक्तिभिर्विरोधात्, यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय इति निदर्शनान्मुक्तोऽप्यस्तमेष्यतीति चेन्न । प्रविष्टजलस्य स्वरूपनाशाभावात्, अन्यथा पयःप्रस्थद्वयसम्भेदे प्रस्थशेषत्वप्रसङ्गात् यथोदकम् इत्यारभ्य तादृगेव भवतीति श्रुत्यन्तरविरोधाच्च, घटध्वंसे घटाकाशोऽपि न नश्यत्येव घटसंयोगनाशात् नश्यतीत्युपचरन्ति मुक्तिदशायां भेदनिवृत्तिवादाश्च कर्मकृतवैषम्यनिवृत्तिपराः साधर्म्यवादिभिरप्येतदेव व्यवस्थाप्यते, ब्रह्मैव भवतीत्यवधारणाज्जीवनिवृत्तिर्गम्यत इति चेन्न । अत्यन्तसाम्ये तात्पर्यात्, यथा वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमाल्लोकाञ्जय*तीति तदेतत् नात्मा श्रुतेर्नित्यत्वाच्च ताभ्य इति सूत्राभिप्रेतमिति ॥ १७ ॥ इत्यात्मानित्यत्वादिवादानामध्यत्वादिविरोधः ॥

* लोकानभिजयतीति पु॰ पा॰ ।

नित्यस्सर्वगत इति श्रुत्या आत्मनां नित्यत्वे तत्सह चरितं सर्वगतत्वमपि स्यादिति शङ्कते । व्याप्ता इति ॥

**मू० व्याप्तास्सर्वत्र जीवास्सुखतदितरयोस्तत्रतत्रो-
पलम्भान्निर्वाह्ये देहगत्यागतिरिह वितथा
तद्गतोऽपीति चेन्न ॥ वक्ती पञ्चाग्निविद्या-
प्रभृतिषु भविनां स्वस्वरूपेण सिद्धं याता-
यातप्रकारं श्रुतिरगतिरिमां लाघवोक्तिं शृ-
णोतु ॥ १८ ॥**

आगमस्यानुग्राहकमाह । सुखेति । तदितरशब्दोऽत्र दुःख-वत् धीच्छादीनामपि सङ्ग्राहकः । अविभुत्वे सर्वत्र दुःखाद्युपलम्भो न स्यादित्यर्थः । आत्मगत्या सर्वत्र सुखादीति शङ्कां गौरवप्रसक्त्या वारयति । निर्वाह्य इति । अत्र श्रुतेरन्यपरत्वाभिप्रायेण प्रतिवक्ति । नेति । सर्वगतत्वोक्तिस्तावत् "अग्निर्यथैको भुवनं प्रविष्टः "वायुस्सर्व-गतो महान्" इत्यादिवदेकजातीयानां सर्वत्रानुप्रवेशान्नेतुं शक्या । गतेश्च श्रुतत्वान्न कल्पनागौरवमित्याह । वक्तीति । प्रभृतिशब्देन "तेन प्रद्योतेनैष आत्मा निष्क्रामति तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्यादयस्सङ्गृह्यन्ते, न च तासां श्रुतीनां प्राणानूत्क्रमणादिभिरन्यथासिद्धिरास्थेया इत्यगति शब्दाभिप्रायः ॥ १८ ॥

अविभुत्वे सिद्धैश्वर्याणां युगपदनेकशरीराधिष्ठातृत्वं न स्यादित्य-त्राह । अव्यापित्वेऽपीति ।

**मू० अव्यापित्वेऽपि पुंसोऽभिमतबहुवपुःप्रेरणे
यौगपद्यं ज्ञानव्याप्त्योपपन्नं बहुषु च वपुषां-**

ऽशेषु निर्वाह एषः ॥ यच्चादृष्टं क्रियां स्वाश्रययुजि तनुतेऽन्यत्र तत्कृद्गुणत्वादित्येतत्सिद्धसाध्यं विभुन इह हि तद् ब्रह्मणः प्रीतिकोपौ ॥ १९ ॥

बहुवपुःप्रेरणं किं द्रव्यान्तरद्वारकम् उत कर्मनिमित्तम्, आद्ये यथा पाणिपादादिद्वारनियतं युगपत्खड्गपादुकाद्यधिष्ठानं न तथाऽत्रेति भावः । द्वितीये स्वकर्मनियतमनेकशरीराधिष्ठानं कर्मिणः स्वसन्निधिविरहे कथं स्यादिति । ज्ञानव्याप्त्या स्वरूपसन्निधानाभावेऽपि ज्ञानस्य युगपदनेकदेहाधिष्ठानानुगुणवृत्त्येति भावः । स्वरूपव्याप्तिर्ज्ञानतोऽधिष्ठानाभावेऽनर्थिका तर्हि तत एव कुड्यादीनामप्यधिष्ठानं स्यात् । न स्यात्, तदधिष्ठानानुगुणकर्मातिशयविशेषाभावात् ये तु तादृशातिशयवन्तः ते कुड्यादीन्यप्यधितिष्ठेयुः यथा परकायादीन्, देहैकदेशवर्तिन आत्मनो युगपदनेकावयवाधिष्ठानं कथमित्यत्रापि प्रत्येतव्यमेतदेवेत्याह । बहुष्विति । धर्माधर्मौ स्वाश्रयसंयुक्त एवाश्रयान्तरे क्रियां जनयतः क्रियाहेतुगुणत्वात् गुरुत्ववत् इति परोक्तमनुवदति । यच्चेति । तत्र सिद्धसाधनतामाह । इत्येतदिति । तद् व्यनक्ति । विभुन इति । इह हि धर्माधर्मशब्दः कर्मनिमित्तेश्वरप्रीतिकोपरूपबुद्धिद्योतकः । अस्ति हि शुभे त्वसौ तुष्यति दुष्कृते तु न तुष्यतेऽसौ परमशरीरी इति ॥

न च प्रीतेरपूर्णत्वं न च कोपात्सदुःखता ।

फलप्रदित्सारूपत्वादुभयोरपि कर्मणः ॥ अतो न दोषः ॥ १६ ॥

उक्तानुमानस्य दूषणान्तरमाह । दृष्टमिति ॥

मू० दृष्टं प्रादेशिकत्वं विभुषु जनिमतां बुद्धिश-

ब्दादिकानां तेनादृष्टं च तादृक् न यदि तव सुखाद्याश्रयव्यापकं स्यात् ॥ तस्मात्तत्स्वप्रदेशान्वयवति जनयेत् स्वं फलं यत्ननीत्या भ्रातृव्यादौ च पीडां न घटयितुमलं किं विभुत्वेन भोक्तुः ॥ २० ॥

विभुष्वात्माकाशादिषु जायमानानां बुद्धिशब्दादिकानां स्वाश्रयैकदेशवर्तित्वं युष्माभिरिष्यते सार्वत्रिकत्वे प्रत्यक्षादिबहुप्रमाणविरोधात्, अदृष्टं च तादृशमिष्टं तच्च स्वाश्रयसंयोगिनि क्रियां जनयत् स्वावच्छिन्नप्रदेशसंयुक्त एव जनयेत् अन्यथा प्रयत्नेनापि दूरस्थप्रेरणप्रसङ्गात्, न चादृष्टं तत्र तत्र गच्छति अमूर्तत्वात् अतोऽदृष्टकारिदूरस्थकार्याणामनुत्पत्तिप्रसङ्गः । ननु प्रत्यात्मनियतान्यनन्तान्यदृष्टानि विप्रकीर्णवृत्तीनि विद्यन्ते अतस्सर्वक्रियोपपत्तिरित्यत्राह । भ्रातृव्यादाविति । अयं भावः, अद्यतनाभिचारक्रियानिष्पद्यमानमदृष्टं कर्तुरात्ममनस्संयोगावच्छिन्ने प्रदेशे स्यात् तच्च भ्रातृव्यदेहभेदादीन्करोति एवं देशान्तरानुभाव्यस्वर्गादिफलसाधनेऽपि भाव्यम् । न च दूर एवेदमदृष्टमुत्पद्यते, असमवायिदेशावच्छेदेन तदुत्पत्तेः स्थापनात् । अतः कथं देशान्तरस्थे भ्रातृव्यशरीरादौ पीडां जनयेत् तस्मादात्मनस्सर्वत्रावस्थानं निरर्थकमिति निगमयति । किं विभुत्वेनेति ॥ २० ॥ इति जीवविभुत्वभङ्गः ।

यदि सर्वे जीवास्सर्वशरीरव्यापिनः सर्वे देहास्सर्वेषां भोगायतनानि स्युः इति प्रसङ्गे परोक्तं परिहारमनुवदति । स्वादृष्टेति ।

मू० स्वादृष्टोपार्जितत्वाद्विभुषु यदवदन्विग्रहादेर्व्यवस्थां तच्चैवं निर्निमित्तं तत इह न कथं

**सर्वतस्सर्वभोगः ॥ आराध्ये विश्वसाक्षिण्यनुगुणफलदे त्वस्ति राजादिनीतिस्तत्साम्ये भोगसाम्यं न हि भवति यथाकर्मभोगप्रदानात् ॥ २१ ॥**

दूषयति । तच्चेति । अयं भावः यद्यदृष्टं स्वावच्छिन्नप्रदेशे देहादिसृष्ट्या फलं जनयेत् तदा यष्टुः स्वर्गादिकमिहैव स्यात् प्रदेशान्तरे तु प्रयत्ननीत्या जनयितुं नालमिति । अतस्त्वत्पक्षे प्रतिनियतादृष्टजन्यत्वस्यैवासम्भवाद्व्यवस्थाभङ्गो दुर्वार इत्याह । तत इति । नन्वणुपक्षेऽपि फलानां जीवगतादृष्टाजन्यत्वात् परगतस्य व्यवस्थापकत्वानभ्युपगमादनियमस्तदवस्थ इत्यत्राह । आराध्य इति । परगतत्वेऽपि राजादिषु दृष्टेन न्यायेन तत्तदाराधकादिप्रतिनियतानुग्रहादिवैचित्र्यात्तत्तदुचितफलसमर्पणे यथाप्रमाणं व्यवस्था सिद्ध्येदिति भावः । सर्वफलप्रदानानुगुण्यार्थं विश्वसाक्षितोक्तिः सहाधीति च कर्माध्यक्षत्वसाक्षित्वे । ननु समोऽहं सर्वभूतेषु इति वदतः कथं विषमफलप्रदत्वमित्यत्राह । तत्साम्य इति । भोगसाम्यं चेतनानामन्योन्यमिति शेषः । सूत्रादिसिद्धं हेतुमाह । यथाकर्मेति ॥ २१ ॥ अथाऽप्यणुत्वे किम्प्रमाणमित्यत्राह । देहान्तरिति ।

**मू० देहान्तर्मात्रदृष्टेः पृथगिह विषयिप्राणजीवोत्क्रमोक्ते र्भूयोवाक्यानुसारादणुरिति वचने तादृशोपाध्यनुक्तेः ॥ ईशादाराग्रमात्रो ह्यवर इति भिदावर्णनात्स्पन्दवाक्याद्व्याप्त्युक्तिर्जातिधर्मप्रतिहतिविनिवृत्त्यादिमात्रेण जीवे ॥ २२ ॥**

अयं भावः यद्यात्मा विभुः स्वयं प्रकाशश्च किमिति सर्वत्र सर्वदा न प्रकाशते, अहमिति सार्वत्रिकः प्रकाशत एवेति चेन्न अस्मिन्देहेऽहं वर्त इतिवत्सर्वत्र प्रतीतिप्रसङ्गात् सार्वत्रिकस्याविशदप्रकाशोऽस्तीति च न प्रमाणं, व्यञ्जकान्तरसापेक्षत्वाद्व्यञ्जकदेशे व्यक्तिरिति नियमहेतुरिति चेन्न। स्वप्रकाशत्वविरोधात्। अथ मानसप्रत्यक्षः तथाऽपि कथं क्वाचित्कोपलब्धिः। यद्यपि सामग्रीदेशानुविधानेन ज्ञानोत्पत्तिः तथाऽपि विषयत्वं न तन्निम्नं* तथा अदृष्टेः, अगृहीतपरिमाणस्य स्वरूपतोग्रहणे देहात्मभ्रमात् क्वाचित्कत्वोपलम्भ इति चेन्न। भ्रमव्यतिरिक्तमानसप्रत्यक्षेष्वपि तद्दृष्टेः विवेकतस्समाहितानामपि परिच्छिन्नतया तदुपलब्धेः "हृदि ह्ययमात्मा" इत्यादिदृष्टेश्च। हेत्वन्तरमाह। पृथगिति। इन्द्रियादीनां पृथगुत्क्रमणोक्तेरात्मोत्क्रमणं न भाक्तमिति भावः। सर्वगतत्वोक्तिसद्भावेऽप्यणुत्वोक्तीनां बलीयस्त्वं व्यनक्ति। भूय इति। सन्ति हि "एषोऽणुरात्मा चेतसा वेदितव्यः" "वालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवस्स विज्ञेय" इत्यादिका बह्वः। ननु विभोरपि परमात्मनोऽणुत्वं श्रूयते तथेह स्यात् तन्न। तत्र हि "एष आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा" इत्यादिष्वौपाधिकाणुत्वव्यक्तेः, जीवाणुत्वश्रुतौ तादृशोपाध्यनुक्तेः प्रत्युत स्वरूपनिर्देशेनैव बालाग्रसूक्ष्मभागसमत्वं स्थाप्यते। यद्यौपाधिकं जीवस्याणुत्वं तस्य जीवेश्वरसाधारणत्वात् "आराग्रमात्रो ह्यवरोऽपि दृष्टः" इति परव्यावर्तकपरिमाणोक्तिर्विहन्येतेत्यभिप्रायेणाह। इत्थादिति। स्वप्नसुषुप्त्यादिवाक्येषु "आसु तदा नाडीषु सृप्तो भवति ताभिः प्रत्यवसृप्य पुरीतति शेते" इत्यादिभिर्जीवस्य तत्र तत्र स्वरूपेण संचरणं श्रूयत इत्याह। स्पन्दवाक्यादिति। एतैर्बलीयो-

* तन्निघ्नमिति पु॰ पा॰।

भिर्जीवव्याप्तिवचनानामन्यपरत्वमाह । व्याप्त्युक्तिरिति । "तस्यात्म-परदेहेषु सतः" इत्यादौ जातितः "स चानन्त्याय कल्पते" इत्यत्र धर्मतः, तथा च सूत्रं "प्रदीपवदावेशस्तथा हि दर्शयति" इति । सर्वगत इत्यत्र क्रमेण सर्वविधाचेतने प्रवेशाद्वा शिलादिष्वपि प्रतिहत्यनर्हतया वा तथा च भाषितम् "अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभावः" इति । आत्मनोऽणुत्वे पृथिव्याद्यणुवत्प्रत्यक्षत्वं न स्यादिति चेन्न, विभुत्वेऽपि ते विभ्वन्तरवदप्रत्यक्षत्वप्रसङ्गात् । यथादृष्टि व्यावृत्तिरस्तीति चेत् अणुत्वेऽपि समम् । न चास्माकं पृथिव्याद्यणूनामप्रत्यक्षत्वनियमः एवमणुत्वे मानसप्रत्यक्षत्वं न स्यादिति प्रसङ्गोऽपि श्रुतिविरोधादिभिः प्रत्याख्येयः ॥ २२ ॥ इति जीवाणुत्वम् ॥

जैनास्त्वाहुः सर्वाणि द्रव्याणि पर्यायवन्ति आत्माऽपि द्रव्यम् अतस्सोऽपि तत्तद्भोगायतनानुगुणाणुत्वमहत्त्वादिपर्यायवानिति तान्प्रतिक्षिपति । नात्मेति ॥

**मू० नात्मा देहानुरूपं विविधपरिणतिर्निर्विकारोक्तिबाधात्स्थूलोऽहं मूर्ध्नि जातं सुखमिति च मतिस्तस्य देहात्ममोहात् ॥ नानादेहश्च योगी प्रसजति भिदुरः पुंसि देहप्रमाणे मुक्तौ देहात्ययात्स्यात्परिमितिविरहस्तत्प्रयुक्तोऽस्य माने ॥ २३ ॥**

यो यद्भोगायतनवर्ती स तत्समपरिमाण इति नियमस्तावन्न दृष्टः न च कल्प्यः कल्पकासिद्धेरिति भावः । नैगमिकाभीष्टं हेतुमाह । निर्विकारेति । वृद्धिह्रासौ देहस्यावेवोच्येते आत्मनि तु न क्वचित् प्रत्युतान्यथा । ननु स्थूलोऽहं कृशोऽहमिति सामानाधिक-

रण्यात् मूर्ध्नि मे सुखमित्यादिना सर्वावयवेष्वहमर्थवृत्तिदर्शनाच्च परिमितिभेदः कल्प्यः इत्यत्राह । स्थूल इति । सामानाधिकरण्यं तावद्गौरोऽहमित्यादिष्वप्यस्तीत्यनेकान्तं देहद्वारैव आत्मनि गौरत्वादिवादः, भ्रमाद्वा तथेहापि, देहावयवेषु सुखाद्युत्पत्तिधियश्च देहात्मभ्रमेण, सर्वत्र सन्निधानारोपात् सत्सन्निधानेऽपि भ्रमाङ्गीकारः । ननु "एकां शाखां जीवो जहाती"त्यादिना छान्दोग्ये जीवस्य वृद्धिसङ्कोचौ श्रूयेते तन्न । तेत्रादिष्विवाभिमानत्यागेनापि तदुपपत्तेः तत्र तत्र अभिमानसदसद्भावौ च कर्मनियतौ । खण्डितारोपितशाखाप्ररोहस्तु तादात्विकजीवान्तराभिमानात् छिन्नजन्त्ववयवविकम्पः प्राणांशचोभमात्रात् न हि तत्र वेदनायां प्रमाणमस्ति, बाधान्तरमाह । नानादेह इति । एकस्मिन्नेव काले योगिनां विरुद्धधर्माध्यासेन स्वरूपभेदः प्रसज्येत । प्रसङ्गान्तरमाह । मुक्ताविति । देहप्रयुक्ते पुंसः परिमाणे मुक्तिदशायां देहाभावादात्मनः परिमाणविरहः स्यात् तथा च गुणवद्द्रव्यत्वमेव हीयेत अपरिमितस्यापि द्रव्यत्वं केचिदिच्छन्तीति चेन्न । विभुत्वप्रसङ्गादिति ॥ २३ ॥

भवतु विभुर्मुक्तः को दोष इत्यत्राह । निर्मुक्त इति ।

**सू० निर्मुक्तस्त्वन्मते स्यात्कथमपरिमितो नित्यमूर्ध्वं प्रधावन् देहः कश्चित्तदानीमपि यदि नियतस्स्यात्तु तन्निघ्नताऽस्य ॥ इच्छातो देहमेकं विशति स परिमित्यर्थमेवेति हास्यं तस्मादास्माकनीत्या परिमितिरिह सा स्थायिनी या विमुक्तौ ॥ २४ ॥**

मुक्तस्य हि पृथिव्या नित्यपतनवन्नित्योर्ध्वगमनं युष्माभिरु-

च्यते आलोकाकाशावधि वा उभयथाऽप्यपरिमितस्य गमनं न सिद्ध्येत् । देहविशेषपरिमित एवोत्पततीति शङ्कते । देह इति । नियतः अवश्यम्भावी स्वकर्मनियत इति वा । तत्र बाधकमाह । स्यादिति । कर्मनियतदेहत्वे परतन्त्रस्य कथं मुक्तत्वमिति भावः । अस्तु घातिकर्मचतुष्टयरहितस्याघातिकर्मचतुष्टयप्रभावात् गत्यर्थो देहः तत्परित्यागक्षणे झटिति परिमाणसिद्ध्यर्थं सकललोकमस्तकस्थायिनं कञ्चिद्दिगम्बरं देहं सर्वे मुक्ताः प्रविशन्ति पृथग्वा शरीराणि परिगृह्णत इति वदन्तमुपालभते । इच्छात इति । न हि मुक्तस्येच्छाभोगो युष्माभिरिष्यते । न च स्वच्छन्दव्यापाराः अतः परिमाणमात्रसिद्ध्यर्थं देहं परिगृह्णातीति निर्मूलकल्पनं निपुणैर्हास्यम् । तर्हि का गतिरित्यत्राह । तस्मादिति । मुक्तौ काचित्स्वाभाविकी स्वीकार्या सैव बद्धदशायामपि स्थिरेति नित्याऽणुर्जीवः तथा च सूत्रम् अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः इति । उभयमिह जीवस्वरूपं परिमाणं च ॥ २४ ॥

इत्यात्मनो देहपरिमाणत्वभङ्गः ॥

यदि यथा कर्मफलप्रद ईश्वरः कर्माणि चानन्तान्यपरिमितकालभोग्यानि तदा प्रागिव पश्चादपि कथं मोक्षोपायादिसिद्धिरित्यत्राह । कर्मेति ॥

**मू० कर्माविद्यादिचक्रे प्रतिपुरुषमिहानादिचित्र-**
**प्रवाहे तत्तत्काले विपक्ति*र्भवति हि वि-**

* यद्यपि डुपचष् पाके इति पचेः पाकार्थस्य षित्त्वेन षिद्भिदादिभ्योऽङ् इति पाणिनीयेन वा सरूपोऽस्त्रियामिति निषेधाद् विपचेत्येव न तु विपक्तिरिति नापि इक्श्तिपौ धातुनिर्देशे इति श्तिपा निर्वाहस्तथा सति षित्त्वेन शपि विपचतिरिति स्यान्न त्विष्टम् । तथाऽपि स्थागापापचोभावे । ३ । ३ । ९५ । इति पाणिनीयेन विशेषविधानात्साधु । षित्करणसामर्थ्याच्च विपचेत्यपि । अवस्थाव्यवस्थादिकं तु व्यवस्थायामसंज्ञायामिति ज्ञापकात्साधु ।

**विधा सर्वसिद्धान्तसिद्धा ॥ तल्लब्धस्वावकाशप्रथमगुरुकृपागृह्यमाणः कदाचित् मुक्तैश्वर्यान्तसम्पन्निधिरपि भविता कश्चिदित्थं विपश्चित् ॥ २५ ॥**

चित्रप्रवाहत्वानुक्तिः परिहारकाकुगर्भा । तत्तदित्यादिना कस्यचित्कर्मिणः प्रागलब्धप्रजापतिप्रभृतिपदनिदर्शनं । विपक्तिः कर्मणां सहकारिलाभः फलविशेषोद्गतिर्वा तथा च पातञ्जलम् "जात्यायुर्भोगा विपाकाः" इति, चार्वाकव्यतिरिक्तास्सर्वे सामग्रीप्रवाहवैचित्र्यात्संसरतां मुक्तिहेतूपनिपातमिच्छन्ति अतो नाचानादिसंसारवादिना केनापि विमन्तव्यमित्यभिप्रायेण सर्वसिद्धान्तसिद्धत्वोक्तिः तच्छब्देनानुकूलविपक्तिविशेषः परामृश्यते, स्वशब्दः कृपाविषयः, सम्पदिह विवेकवैराग्यादिरूपा । अपिस्सम्भावनार्थस्समुच्चयार्थो वा । इत्थमिति । प्रकृतिपुरुषादितत्त्वचिन्ताप्रकारेण । यद्वा हिरण्यगर्भादिविपाकप्रदित्यर्थः । ननु हिरण्यगर्भादिपदविपक्तिः स्वस्य प्रागसिद्धाऽपि पुरुषान्तरसिद्धजातीयेति चेत् तत्त्वज्ञानवैराग्यादिसम्पदपि तथैव । दृष्टं चैतद् गुरुशिष्यक्रमे । आद्यमुक्तस्य ततः पूर्वमदृष्टजातीयेति चेन्न । आद्यमुक्तानिरुक्तेः यद्यसौ पूर्वमुक्त एव उक्तोत्तरमेतत् । अथ मुक्तेष्वादिः स कथं त्वया विदितः, ततः पूर्वं मुक्ताभावादिति चेत् तमपि कथं वेत्थ । अनादिमुक्तौ व्याघातादिति चेत् न । मुक्तप्रवाहे व्याघातः स्यात् न ह्यनादिमुक्तः कश्चिद्बुध्यते । साध्यमोक्षो वा भवेत् येन व्याघातस्यात् किन्त्वनादिबद्धास्सर्वेऽपि लब्धोपायाः क्रमेण मुच्यन्ते तत एव मोक्षशास्त्रप्रामाण्यं निर्बाधमिति ॥ २५ ॥ इति संसरतां प्रत्यापत्तिहेतुविशेषः ॥

निर्वेदं सन्धुक्षयन् मुमुक्षोत्पत्तिप्रकारमाह । कृच्छ्रादिति ।

**मू० कृच्छ्रात्संवर्तकष्टाद्यपगमजनितस्थूलदेहस्य जन्तोर्जाग्रत्स्वप्नस्सुषुप्तिर्मरणमथ मृतेरर्थसम्पद्दशास्स्युः ॥ सर्वं दुःखान्धकारस्थगितमिह सुखं त्वत्र खद्योतकल्पं त्यक्त्वा शुद्धाशयास्तन्निरवधिकसुखां निर्विविक्षन्ति मुक्तिम् ॥ २६ ॥**

मृतेरर्धसम्पत् मूर्छा । तथा च सूत्रं मुग्धेऽर्धसम्पत्तिः परिशेषादिति । सर्वम् अनुकूलतया भाव्यमानमपि । ननु स्वर्गस्वाराज्यादिप्रभूतसुखमप्यस्तीत्यत्राह । सुखं त्विति । अल्पास्थिरत्वद्योतने खद्योतदृष्टान्तः तद्विषमधुकल्पं वैषयिकसुखं, निरवधिकत्वोक्त्या निर्दुःखत्वमपि लक्ष्यते । निर्विविक्षन्तिभोक्तुमिच्छन्तीति ॥ २६ ॥ इति मुमुक्षोत्पत्तिप्रकारः ॥

इह सयूथ्याः परे च केचिदाहुः इतः पूर्वमिव कारणाभावात् केचित्पश्चादपि न मोक्ष्यन्ते "एकं पादं नोद्धरति स्वलीलाद्यर्थे समुद्धरंस्तं चेत्" "सततञ्च मृत्युजन्मनाभृतं भवेत्". "क्षिपाम्यजस्रमशुभान्" मामप्राप्यैव" इत्यादिभरेतत्सिद्धं तस्मिन्पक्षे बाधकं शङ्कते । कश्चिदिति ।

**मू० कश्चिच्चेन्नित्यबद्धः किमयमहमिति स्यान्मुमुक्षोरुपेक्षा मैवं युक्तस्य मुक्तिर्भवति दृढमिति प्रत्ययात्तत्प्रवृत्तेः ॥ नोचेत्स्यामनन्त्यमुक्तः किमहमिति न कोऽप्यद्य मुक्तौ यते-**

**नन् सर्गस्थित्यादिसन्तत्यविरतिरत इत्येव-मेकेऽन्यथाऽन्ये ॥ २७ ॥**

सन्देहेऽपि प्रवृत्तिस्सम्भवतीत्यभिप्रायेण प्रतिवक्ति । मैवमिति । अयं भावः ।

स्वरूपे योग्यभावेऽपि सहकार्यव्यवस्थितेः ।
विमुक्तिर्मम सिद्धयेद्वा न वेति विचिकित्सते ॥
अनिर्धार्यापि यः कश्चित्तथ्यमात्ममनोरथः ।
पात्रिके फलभूयस्त्वे सांयात्रिकवदीहते ॥
यथाकथञ्चिदारब्धेऽप्यापवर्गिकवर्त्मनि ।
प्रसीदन्नीश्वरो बुद्धिं प्रयच्छेन्निश्चलामिति ॥

उपायविधानशास्त्रार्थनिश्चयात्स्वस्य च तदानुगुण्यदर्शना-न्निस्संशयोऽपि कश्चित्प्रवर्ततेत्याह । युक्तस्येति । अन्यथा कथञ्चि-न्निष्फलप्रयत्नोऽप्यस्तीति निश्चयात्स किमहमिति कृष्यादावपि न प्रव र्ततेति भावः । नोचेदित्यादिनापि प्रतिबन्द्यन्तरोक्तिः, स्वात्मन्य-मुक्तत्वशङ्कायामपि कृताशः फलिष्यत्येवेति शास्त्रतोऽवगमात्प्रव-र्ततेति चेत् एवं नित्यबद्धसद्भावनिश्चयेऽपि स्वयं निवृत्तिधर्मयो-ग्यतया दृष्टः कृतमपि फलिष्यतीति किं न प्रवर्तेत एवं नित्यबद्ध सम्भवति "अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमा" इत्यादि-शास्त्रस्यार्थवत्त्वसिद्धिरित्याह । सर्गेति । अयमेव सिद्धान्त इति निश्चयव्युदासायाह । इत्येवमेक इति । पक्षान्तरमाह । अन्यथा-ऽन्य इति । स्वरूपयोग्यानां शुकादिवत्कदाचित्सहकार्यागमान्मुक्ति रस्त्यादेव तदा संसारपान्थस्य याति मोहश्रमः श्रममित्यादेस्सङ्को-चकाभावादिति भावः ॥ २७ ॥

इति नित्यसंसारिसदसद्भावपक्षौ ॥

द्वयोरपि पक्षयोर्दोषमाशङ्क्य प्रत्याह । निश्शेषेति ॥

मू० निःशेषात्मापवर्गे विरतविहरणो विश्वकर्ता तदा स्यात् नित्यं चेत्कोऽपि दुःखीन्निरुपधिकदयाहानिरस्येति चेन्न ॥ पक्षः पूर्वो यदि स्याद्विहरणविरतिः स्वेच्छया नैव दोषश्शिष्टे पक्षे निरुद्धा निरुपधिकदया कुत्रचिन्नित्यमस्तु ॥ २८ ॥

उत्तरार्धे पक्षद्वयदोषपरिहारार्थं, पुरुषान्तरप्रतिरोधादिना लीलाविरतौ हि दोषः न तु स्वेच्छया, प्रवृत्तिवन्निवृत्तेरप्यैच्छत्वात्क्वचिन्नित्यं दयारोधोऽपि तत्तज्जीवकर्मवशात् । अतः प्रतिबन्धरहितेषु सावकाशा कृपा, अल्पव्याजेनानन्तापराधसहनाच्च ॥ २८ ॥ इतिपक्षद्वयोक्तप्रसङ्गपरिहारः ॥

धर्मस्य तत्त्वं निहितं गुहायां किम्पुनर्निवृत्तिधर्मस्य, अतः कथं कश्चिदपि मोक्ष्यत इत्यत्र मोक्षोपायस्वरूपं निष्कर्षति भक्तिरिति ।

मू० भक्तिर्मुक्तेरुपायः श्रुतिशतविहितस्सा च धीः प्रीतिरूपा तन्निष्पत्त्यै फलेच्छाद्युपधिविरहितं कर्म वर्णाश्रमादेः ॥ ज्ञानध्यानादिवाचां समफलविषया सैव युक्ता प्रतिष्ठा सामान्योक्तिस्समानप्रकरणपठिता पर्यवस्येद्विशेषे ॥ २९ ॥

श्रुतिशतविहितो मुक्तेरुपायो भक्तिरित्यन्वयः। ननु ब्रह्मविद्ययैव मुक्तिरिति सिद्धान्तः भक्तिशब्दस्त्वष्टविधत्वादिवचनैरन्यार्थः भज सेवायामिति च सामान्यतः पठ्यते क्वचित्तु रूढिक्लृप्तो गौरवमित्यत्राह। सा चेति। धीरित्यनेन ब्रह्मविद्यात्वाविरोधस्थापनं, प्रीतिरूपेति रूढिनिमित्तसूचनं महनीयविषये प्रीतिर्भक्तिः प्रीत्यादयश्च ज्ञानविशेषा इति वक्ष्यते। "स्नेहपूर्वमनुध्यानं भक्तिः इति चोपायोविशेष्यते। अपाम सोमममृता अभूम इत्यादि दर्शनात्कर्मभिरेव मुक्तिः किं न स्यादित्यत्राह। तदिति। केवलधर्माणां क्षयिफलत्वनिश्चयात्तत्रामृतत्वादिवचनमन्यपरं विद्याङ्गेषु तु मुक्तिसाधनत्वश्रुतिः स्तुत्यर्था अतः "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्यादिभिरभिप्रेतं सन्निपत्योपकारकत्वमिह युक्तमिति भावः फलशब्दोऽत्र स्वर्गादिविषयः, फलसङ्गकर्तृत्वाभिमानत्यागे हि स्वरूपानुरूपफलसाधनाङ्गत्वमित्यभिप्रायेणोपाधिरहितत्वोक्तिः उत्तरेणादिशब्देन गुणनिमित्तादिसङ्ग्रहः। ननु वेदनध्यानोपासनादिशब्दैर्मुक्त्युपायोक्तौ यथार्हं विकल्पः स्यादित्यत्राह। ज्ञानेति। समफलविषयेति एकत्र विश्रमौचित्यप्रदर्शनं सम्भवति गत्यन्तरे ऽष्टदोषविकल्पो न न्याय्यः न चैकस्मिन्नधिकारिणि गुरुलघुविधिः स्यात् नापि ज्योतिष्टोमाग्निहोत्रादिवदिह फलतारतम्यसम्भवइति भावः। प्रतिष्ठा तत्तत्सामान्याकारैः प्रतिपाद्येत्यर्थः। ननु "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनइति" कठवल्लीवाक्यात् भक्तेर्ज्ञानहेतुताऽवगम्यतेगीयते च "भक्त्या मामभि जानाति" इत्यादि, संजयश्चाह "शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्" इति अतो भक्तिसाध्यज्ञानविशेषान्मुक्तिः स्यादित्यत्राह। सामान्येति। अयं भावः भक्तेर्ज्ञानसाधनत्वश्रुतिः पर्वभेदेनानेकफलतया स्यात्

अतएव हि "भक्त्या त्वनन्यया शक्यः" इत्यादिना ज्ञानदर्शनप्राप्तिसाधनत्वोक्तिः "भक्त्या लभ्यस्त्वनन्यया" इति च नियम्यते भक्तिसाध्यं प्रापकज्ञानमपि भक्तिलक्षणोपेतम् अतोवेदनादिसामान्यशब्दानामिह पश्वादिन्यायात् सन्निहितविशेषपर्यवसानं सिद्धम् ॥ २९ ॥

ये तु मन्यन्ते "तमेवं विद्वान्" "ब्रह्मविदाप्नोतिपरं" इत्यादिषु यथा श्रुति वित्तिमात्रस्य मुक्तिसाधनत्वविधिः कल्प्यः सकृत्कृतश्च शास्त्रार्थः अतो न विशेषपर्यवसानं युक्तमिति तान्प्रति सफलत्वादुक्त्या सूचितं व्यनक्ति । ध्यानादीति ॥

**मू० ध्यानाद्युक्त्या ध्रुवानुस्मृतिरिह विहिता ग्रन्थिमोक्षाय सैव स्पष्टा दृष्टिस्तथैव श्रुतफलविषया सेवनत्वादुपास्तिः ॥ क्वाप्यैक्यं विद्युपास्त्योर्व्यतिकरितगिरा भक्तिमेवाह गीता सर्वं तद्वित्तिमात्रे फलवति विफलं तेन सैवं विशिष्टा ॥ ३० ॥**

अत्र हि मुक्तिसाधनवित्तेः प्रत्ययावृत्तिरूपचिन्तावाचिध्यानशब्दशक्त्या नावृत्तिरूपत्वं निरस्तं । न्यायस्तु न वचनविरोधे । आदिशब्देन ज्ञानवेदनादिशब्दसङ्ग्रहः ध्रुवानुस्मृतिशब्दस्तु चिन्ताया निरन्तरस्मृतिरूपत्वमाह । ग्रन्थिमोक्षायेति फलैक्यव्यञ्जनम् । तत्फलार्थे वाक्ये दृष्टिशब्दस्तु स्मृतिमेव वैशद्येन विशिनष्टि । ननु चाक्षुषज्ञानं प्रत्यक्षमात्रं वा ब्रूयादित्यत्राह । तथैवेति । विशदध्रुवानुस्मृतौ उपास्तिशब्दनिमित्तमाह सेवनत्वादिति । यस्तद्वेद इत्यादिषु केषु चिद्वाक्येषु एकस्मिन्नेव विषये वेदनोपासनशब्दयोर्व्यतिकरेणोपक्रमोपसंहारदर्शनाच्च वेदनमेवोपासनतया विशेष्यत-

इत्याह । क्वापीति । एतेषु क्वचिदपि वाक्ये भक्तिशब्दो न मोक्षोपायविषयः श्रूयत इत्यत्र "यमेवैष वृणुते तेन लभ्य" इति श्रुत्यभिप्रेतं गीयत इत्याह । भक्तिमेवेति । फलितमनिष्टप्रसङ्गमाह । सर्वं तदिति । निगमयति । तेनेति । सा मुक्तिसाधनतयोक्ता हि वित्तिः भक्तिरूपत्वपर्यन्तविशेषणविशिष्टेत्यर्थः ॥ ३० ॥ इति भक्तिस्वरूपमोक्षोपायत्वे ॥

यदि भक्तिरेका मुक्त्युपायः कथं परविद्याभेदक्लृप्तिरित्यत्राह । विद्या इति ॥

**विद्याः पञ्चाग्निवैश्वानरदहरमधुन्याससत्पूर्वसंज्ञा नानाशब्दादिभेदात्तुलितफलतया तद्विकल्पश्च शिष्टः ॥ कर्मज्ञानाख्ययोगौ त्विह परभजनाधिक्रियार्थौ स्वदृष्ट्या धर्मैर्वर्णाश्रमाणां त्रयमिदमवदन् सेतिकर्तव्यताकम् ॥ ३१ ॥**

नाना मिथोभिन्ना इत्यर्थः शब्दादिभेदात् द्वितीयाद्वैदकवगात् । किमेतासां ज्योतिष्टोमाग्निहोत्रादिवत्फलभूयस्त्वार्थमेकस्मिन्नधिकारिणि सम्भवइत्यत्राह । तुलितेति । परिच्छिन्नेषु स्वर्गादिफलेषु तारतम्यवत्सु तद्भूयस्त्वापेक्षयोपायसमुच्चयसम्भवः । इह तु न तथा अविशिष्टफलत्वात् स्वात्मप्राप्तौ सालोक्यादिमात्रे च मुक्तिशब्दोभाक्तः मुक्तितारतम्यं वदद्भिस्तु मुक्तिरेव शिक्षणीया । सर्वकर्मनिवृत्तौ स्वतःप्राप्तब्रह्मानुभवतारतम्यायोगात्, कतिपयकर्मनिवृत्तेः स्वर्गादावपि समत्वात् शिष्टः, "विकल्पोऽविशिष्टफलत्वात्" इति सूत्रे। ननु कर्मज्ञानयोगयोरपि मुक्तिसाधनत्वं शिष्यते गरिष्ठस्य च भक्तियोगस्य अतोमुक्तितारतम्यं युज्यत इत्यत्राह । कर्मेति । स्वदृष्ट्या

स्वात्मावलोकनद्वारेणेत्यर्थः, तदुक्तमात्म*सिद्धौ उभयपरिकर्मितस्वा-न्तस्यैकान्तिकात्यन्तिकभक्तियोगलभ्यः । इति, । यदि कर्मयोगोऽधि-कारार्थः तर्हि लब्धाधिकारस्य कर्मनैरपेक्ष्यं स्यादित्यत्राह । धर्मै-रिति । अयं भावः कर्मयोगोनाम नियमयुक्तः कर्मविशेषः तन्नि-वृत्तिदशायामपि न वर्णाश्रमधर्मनिवृत्तिः कर्मनिषेधोऽप्यन्यविषयः अतस्त्रयोऽपि योगा वर्णाश्रमधर्माङ्गका इति । तथा च सङ्गृहीतम् ॥

त्रयाणामपि योगानाम्मात्रयाऽन्योन्यसङ्गमः ॥
नित्यनैमित्तिकानां च पराराधनरूपिणाम् ॥ इति ॥ ३१ ॥

इति विद्याभेदतद्विकल्पादिः ॥

ननु मुमुक्षुमधिकृत्योपनिषदामुत्थानमतस्तत्रत्यानां सर्वासां विद्यानां विकल्पः स्यादित्यत्र मुक्तिसाधिकास्तदन्याश्च विषयतोऽधिकारतश्च विभजते । विश्वेति ॥

**मू० विश्वान्तर्यामितत्त्वं स्वयमिह चिदचिद्विग्र-**
**हैर्वा विशिष्टं यस्यामालम्बनं सा भवभय-**
**शमनी वीतरागस्य विद्या । यस्तूपास्ते**
**यथोक्तं तदितरदखिलं ब्रह्मदृष्ट्या स्वतोवा**
**नैतस्य ब्रह्मनाड्योद्गतिरपि न पदव्यर्चिरा-**
**दिर्न मोक्षः ॥ ३२ ॥**

स्वयं स्वरूपनिरूपकैर्निरूपितस्वरूपविशेषकैश्च धर्मैर्वि-शिष्टं स्वासाधारणदिव्यविग्रहैर्वा चिदचिद्विग्रहैः इन्द्रप्राणादिचिदचि-द्रूपैः शरीरैः, वीतरागस्येति विशेषणात् परभजनमपि रागिणः परिमि-तफलसाधनमिति सूच्यते । संजगृहे च—भक्तियोगस्तदर्थी चेत्समग्रै-

* परमगुरुभिर्भगवद्भिर्यामुनाचार्यपादैः सिद्धित्रयान्तर्गतायामात्मसिद्धौ ।

स्वयंसाधनम् इति। यथोक्तं चिदचिद्रूपेण विभक्तं यद्वा तत्तद्विद्याविहितप्रकारेणेत्यर्थः। स्वतः ब्रह्मपर्यन्ततां ब्रह्मदृष्टिं च विहाय। नैतस्येत्यादि। नाडीभेदोहि तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्तीति विभज्यते। स्मर्यते च ऊर्ध्वमेकः स्थितस्तेषाम् इत्यादिना। अर्चिरादिगतिश्च ब्रह्मविद एवाधिकृत्य तत्रतत्र श्रूयते तथा च सूत्रम् अप्रतीकालम्बनान्नयति इत्यादि। मोक्षश्च तमेव विदित्वाऽतिमृत्युमेति इत्यवधारितः॥ ३२॥

इति त्रिवर्गापवर्गार्थविद्याविभागः॥

अथ कर्मणां सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् इति सूत्रसिद्धं विद्यार्थत्वं द्वारप्रदर्शनेन प्रापयन् समुच्चयवादं च निरस्यति। स्वान्तेति॥

**मू० स्वान्तध्वान्तप्रसूतं दुरितमपनुदन् योगिनस्सत्त्वशुद्धौ सर्वावर्णादिधर्मश्शमदममुखवत्सन्निपत्योपकारी॥ विद्यां चेत्यादिवाक्येऽप्यनुकथितमिदं नैकवाक्यानुरोधात्कर्मापेक्षाभिसन्धिं क्वच न विवृणुते तत्समुच्चित्य वादः॥ ३३॥**

ध्वान्तशब्द इह तमोगुणे भाक्तः सत्त्वस्य शुद्धिः गुणान्तरसम्भेदाभावः, शमदमादीनां चित्तैकाग्र्यहेतुत्वस्य दुरपन्हवत्वात्तन्निदर्शनम्। सन्निपत्योपकारी—करणशरीरनिष्पादक इत्यर्थः। वाद्यन्तरयोजनाव्यावृत्त्यै श्रुत्यन्तरस्याप्युक्तार्थपरत्वमाह। विद्यां चेति। अविद्यया मृत्युं तीर्त्वा इति सत्कर्मणा विद्योत्पत्तिविरोधिकर्मतरणं विवक्षितम्। धर्मेण पापमपनुदति। कषायपक्तिः कर्माणि। इत्याद्यने-

कवाक्यानुरोधात् मृत्युं प्राप्य स्थित इति तु क्लिष्टगतिः, मृत्युतरणम- मृतप्राप्तिरिति साध्यद्वित्वाभावादच साधनद्वित्वादिश्चायुक्तः ब्रह्म- विद्यामधिष्ठाय ततुंम्मृत्युमविद्यया इत्युपबृंहणेन चैतत्सर्वं व्यक्तम् । हतं ज्ञानं क्रियाहीनं हता चाज्ञानिनां क्रिया इत्यादिषु द्वयोस्समु- च्चितवद्वादः कुदृष्टिमतनिवृत्त्यै । कर्मसापेक्षत्वाभिसन्धिं व्यनक्ति ।

निषिद्धकाम्यत्यागेन नित्यनैमित्तिकग्रहः ।
अधिकाराङ्गताज्ञासु यथार्हमवतिष्ठते ॥ ३३ ॥

इति कर्मणां विद्योपकारकत्वप्रकारः ।

एवं केचिदूचुः कर्मानुष्ठाता जीवः स्वाध्यायसाध्येन स्वविष- यज्ञानेन सँस्क्रियते ते एव ज्ञानज्ञेये वेदान्तेषु प्रशस्येते इति तन्नि- रस्यति । संस्कार इति ।

**मू० संस्कारः कर्मकर्तुर्न भवति विहितं मुक्तये ज्ञानमन्यन्नाप्येतत्कर्मणोऽङ्गं न च सकृदस- कृत्त्वाप्रयाणानुवृत्तम् ॥ अङ्गं तस्यासनाद्यं प्रणिधिसमुचितौ देशकालप्रभेदावित्याद्यं साङ्ख्ययोगप्रकरणविततं सूत्रभाष्यादिषू- क्तम् ॥ ३४ ॥**

विहितं मुक्तये ऽन्यदिति हेतुत्रयपरं न हि वाक्यजन्यं ज्ञानं विधीयते तस्य विधानमन्तरेण रागप्राप्तविचारसिद्धत्वात् । अ- प वाक्यजन्यज्ञानान्मोक्षः निरसिष्यमाणत्वात् । अन्यदेव हि वाक्या- र्थज्ञानाद्विहितमुपासनाद्यात्मकं ज्ञानं जीवातिरिक्तविषयतया चान्यत्वं भाव्यमिति तथाऽपि तत्प्राप्तिहेतुर्ज्ञानं च कर्म च इति सहपाठाविशेषे कर्म चेत् ज्ञानाङ्गं विपरीतं किं न स्या दित्यत्राह । नापीति । न

हि स्वहोक्तिमाधानादर्थ्ये शिष्मः किन्तु अनन्यथासिद्धैर्विनियोजकैरिति भावः । कर्तृसंस्कारत्वविरोधव्युत्पत्त्यर्थमन्यविध्यर्थं च पूर्वोक्तमेवाह । न च सकृदिति । असकृदावृत्तमपि ज्ञानमेकदिने ऽशक्यमित्यत्राह । असकृदिति । प्रयाणान्तमोङ्कारमभिध्यायीत स खल्वेवं वर्तयन् यावदायुषम् इत्यादिश्रुतिसिद्धमाप्रयाणत्वम् । सदा चिन्तनविधानाद्गमनादावपि स्यादित्यत्राह । अङ्गमिति । निरन्तरस्मृतिरासीनस्यैव स्यात् गमनादौ तु तद्विधिस्सान्तरविषयः आदिशब्देन समकायशिरोग्रीवत्वादिसङ्ग्रहः । प्रणिधिः—चित्तैकाग्र्यम् आद्यशब्देन प्रशान्तात्मकत्वविगतभीतित्वादि गृह्यते सूत्राण्यत्र आवृत्तिरसकृदुपदेशादित्यादीनि ॥ ३४ ॥ इति विद्यायाः कर्मकर्तृसंस्कारत्वभङ्गः ।

वर्णाश्रमधर्माणामङ्गित्वाभिमतविद्याविरुद्धत्वमाशङ्क्य परिहरति ।

मू० ब्रह्मण्यैकान्त्यभाजां मुहुरनुकथितो मोक्षधर्मेऽपवर्गस्तस्मान्नानाऽमरेज्या न भवति परभक्त्यङ्गमित्यप्ययुक्तम् ॥ ऐन्द्रीप्रातर्दनादिप्रथितनयविदामन्तरात्मैकलक्ष्येष्वग्नीन्द्रादिप्रयोगेष्वखिलमपि विभुः कर्म भुङ्क्ते स एकः ॥ ३५ ॥

ब्रह्मणीति ।

ऐकान्त्यभाजामनन्यदेवताकानामित्यर्थः तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः । इति स्थापनात् तत्रैव च प्रतिबुद्धस्तु मोक्षभाक् इति नियम्यते ब्रह्माणम् इत्यारभ्य प्रतिबुद्धा न सेवन्ते

इत्यन्तेन चेतत्सिद्धम् । यागादयस्त्वग्नीन्द्रादिनानादेवताकाः अङ्गाङ्गिविरोधे च न्याय्योऽङ्गत्याग इत्येतदपि न युक्तं कुत इत्यत्राग्न्यादिशब्दानां ब्रह्मणि वृत्तिद्वयेन विरोधं परिहरति । ऐन्द्रीति । यथा ऐन्द्र्या गार्हपत्यमुपतिष्ठते इति विनियोगादिन्द्रशब्दः कयाचिद्वृत्त्या गार्हपत्यार्थः एवं । स्वकर्मणा तमभ्यर्च्य इत्यादिभिस्तत्तद्देवताशब्दानां क्वचिदवयवशक्त्या ब्रह्मणि वृत्तिः, क्वचित्तु प्रतर्दनविद्योक्तन्यायेन प्रसिद्धचिदचिल्लिङ्गानन्यथासिद्धेः तत्तद्विशिष्टविश्रान्तिरिति अग्न्यादिशब्दानामन्तरात्मविषयतया प्रतिबुद्धेः प्रयोगादेक एव सर्वकर्मसमाराध्यः । ऐकान्त्यं च तेषामचतम् । अव्यवहितार्चने लभ्ये किं व्यवहितेनेति चेन्न । अधिकारव्यवस्थितेरचोभ्यत्वादिति ॥ ३५ ॥ इति वर्णाश्रमधर्माणामैकान्त्यविरोधपरिहारः ।

परेष्टभङ्गाय त्यागविशेषं निष्कर्षति । त्यागत्रैविध्यमिति ॥

**मू० त्यागत्रैविध्यमुक्त्वा स्वमतमिह जगौ सात्विकत्यागमीशस्तस्माद्वर्णाश्रमादित्यजनमपदृशां तामसं मोहमूलम् ॥ योगारूढस्य कर्मच्यवनमपि तदा सह्यमङ्गाथर्ववाक्यैर्योगं त्वन्त्याश्रमिभ्यः परममिति वचो वक्ति मोक्षाश्रमेण ॥ ३६ ॥**

स्वमतम्—एतान्यपि च कर्माणि इति श्लोकोक्तं कार्यमेव इति श्लोकोऽपि तदर्थः । तत्फलितमाह । तस्मादिति । मोहात्तस्य परित्यागस्तामस इत्यस्यार्थोऽपदृशामित्यादिना दर्शितः । ननु योगदशायां कालादिकमजानतः कर्तव्यलोपः स्यादेव, अतः कर्मत्यागोऽत्र न तामस इति तत्राह । योगारूढस्येति । योगदशायां बहिर-

प्रवृत्तमनसो न धीपूर्वकर्मत्यागः अबुद्धिपूर्वकं तूत्थानकालेऽपि न लिम्पतीति नियमितं किमुत समाधौ अङ्गार्थवाक्यैः कर्मणां समाधिरूपाङ्गिशेषत्ववाक्यैरित्यर्थः । ततश्चाङ्गप्रधानविरोधेऽङ्गिना अङ्गोपमर्दो न दोषाय । अन्त्याश्रमिभ्यः परमं पवित्रं प्रोवाच इत्यत्रातिशयिताश्रमयोगो विवक्षित इत्याह । योगं त्विति । अन्यथा मत्वर्थीयवैयर्थ्यादिति भावः ॥ ३६ ॥

इति वर्णाश्रमादिधर्मस्वरूपत्यागभङ्गः ॥

प्रव्राजिनामेव मुक्तिस्तत्साधनी विद्या चेति पक्षमनूद्य प्रतिक्षिपति ॥ तुर्य इति ॥

मू० तुर्यो निष्कृष्य मोक्षाश्रम इति कथितस्तेन नान्येषु विद्या शान्त्यादिव्याहते श्चेत्यसदिह गुणिनां सर्वतोमुक्त्यधीतेः ॥ यावज्जीवं द्वितीयाश्रमवति पुनरावृत्त्यभावोऽप्यधीतः स्मृत्याद्यैश्चैवमुक्तं भवति तु चरमे योग्यताधिक्यमात्रम् ॥ ३७ ॥

विशेषविधौ परिसङ्ख्यया शेषनिषेधः सिद्धेदिति भावः । अतस्तदन्येषु त्रिषु तत्साधनी विद्या नेत्याह । तेनेति । अधिकारिविरोधादप्याह । शान्त्यादीति । प्रवृत्तिरूपा वेदानुवचनयज्ञादयः । शमादयस्तु निवृत्तिरूपाः ते कथमेकत्र स्यु रिति भावः । अत्र बाधकमाह । गुणिनामिति । दया सर्वभूतेषु क्षान्तिः इत्याद्युक्तगुणवतामित्यर्थः । त्रयो धर्मस्कन्धाः इत्यत्र बव्हाश्रमप्रस्तावे ब्रह्मसंस्थोऽमृतत्वमेति इत्युच्यते सम्भवति चाधीतवेदेषु सर्वेषु ब्रह्मनिष्ठा सा च गृहस्थानामेवोपस्ति—याज्ञवल्क्यप्रभृतीनामुपनिषत्सु प्राचुर्येण दृश्यते

न च प्रवृत्तिनिवृत्त्योर्विरोधः भिन्नविषयत्वात्, नित्यनैमित्तिकेषु प्रवृत्तिः निषिद्धकाम्यनिरर्थकेषु निवृत्तिरिति । अन्यथा प्रव्राजिनां स्वाश्रमधर्मेणापि विरोधः स्यात् । अपि च छान्दोग्यान्ते कुटुम्बे शुचौ देशे इत्यादिना गृहस्थं प्रक्रम्य स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यत इत्युक्त्वा न च पुनरावर्तते इति चोक्तं तदाह । यावज्जीवमिति । अत्रोपबृंहणभूयस्त्वमाह । स्मृत्यादेरिति । गृहस्थोऽपि हि मुच्यते इति स्मर्यते । जनकदिलीपादयश्च गृहस्था एव मुक्ता इतीतिहासादिषूक्ताः । अत एव न सोपानवत्क्रमनिबन्धः, कस्यचिन्मोक्षाश्रमत्वोक्तिः क्विन्निमित्तेत्यत्राह । भवतीति ॥ ३० ॥

इति सर्वाश्रमिणां ब्रह्मविद्याधिकारः ॥

कथं नित्यकर्मणां विद्याङ्गत्वं नित्यत्वे ह्यकरणेदोषः काम्याङ्गत्वे ऽसौ न स्यात् अतोनित्यकाम्ययोरभेदायोगात्प्रकृतं विरुद्धमित्येतदनूद्य परिहरति । यन्नित्यमिति ॥

**मू० यन्नित्यं तन्न काम्यं तदपि न तदिति स्थापिते कर्मभेदेऽप्येकं विद्याश्रमाङ्गं भवति हि विनियुक्त्यन्तरेणोपपत्तेः॥ तत्रानुष्ठानतन्त्रं विदुषि तु घटते कर्तृकालाद्यभेदात्प्राजापत्यादिलोकार्थिनि च तदितरोऽनर्थरोधाय तद्वान्॥ ३८॥**

हि—शब्दः सम्भवप्रसिद्धिपरः ।

ज्योतिष्टोमाग्निहोत्रादौ विनियोगपृथक्त्वतः ।
नित्यकाम्यस्वरूपत्वं दृष्टं तद्वदिहास्तु नः ॥
विध्यैक्येऽपि क्वचिद्दृष्टा काम्यनैमित्तिकात्मता ।
विधिभेदे तु किं न स्यादत्र कैमुतिकी गतिः ॥

एवं चिद्रूपत्वमपि क्वचिद्ग्राह्यम् । तर्हि विद्यार्थमाश्रमार्थं च द्विरनुष्ठानं प्रसज्यत इत्यत्राह । तत्रेति । तन्त्रम्—उभयार्थं सकृत्करणं, तच्चैकादशे स्थापितम् । नित्यस्य विद्याङ्गतयाऽपि काम्यत्वे तन्त्रमुदाहरति । प्राजापत्यादीति । उक्तव्यतिरिक्तेषु निष्फलतया नित्यकर्मनिवृत्तिप्रसङ्ग इत्यत्राह । तदितर इति ॥ ३८ ॥

इति नित्यकर्मणां विद्याङ्गत्वाश्रमाङ्गत्वादिः ॥

सर्वचेतनप्रवृत्तीनां यत्किंचित्प्रयोजनानन्वयान्नित्यादिविभागो न स्यादित्याशङ्क्य परिहरति । मन्दस्येति ।

**मू० मन्दस्यापि प्रवृत्तिः किमपि फलमनुद्दिश्य कस्यापि न स्यात् नित्येऽनर्थापरोधप्रभृति फलमतः काम्यतैवेति चेन्न ॥ नित्येष्टोऽनर्थरोधस्तदितरदतथा किंच शिष्टा विधीनामाज्ञानुज्ञाविभागस्सुगम इह निरुक्त्यैव नैमित्तिकांशः ॥ ३९ ॥**

प्रभृतिशब्देन पापेभ्योरक्षन्ताम् इत्यादिप्राप्तदुरितक्षयसङ्ग्रहः । अतः—कर्त्रभीष्टफलवत्त्वादित्यर्थः । काम्यतैव—नित्यनैमित्तिकयोरिति शेषः । सफलत्वाविशेषेऽपि नित्ये तावत्फलविशेषापेक्षया विभागाभिप्रायमाह । नित्येष्ट इति । अनर्थपरिहारस्य सर्वेषां सर्वदाऽभीष्टत्वात्तदर्थे कर्मणि अकरणानर्हतया नित्यत्वेन विभागः । तदितरत् सुखम् अतथा सर्वदाऽभीष्टं न भवति सुखरहितायास्सुषुप्तेराकाङ्क्षणात्, अतस्सुखार्थे काम्यतोक्तिः । उक्तमेव विभागं मुखभेदेन दृढयति । किं चेति । राजादिनयादीश्वराज्ञानुज्ञारूपविधिभेदाद्विधेयविभागस्सिद्ध इत्यर्थः ॥ ननु द्विविधं नैमित्तिकं तत्र प्राय.

श्चित्तमुपात्तानर्थहेतुनिरासार्थम् अन्यदप्यकरणनिमित्तानर्थपरिहाराय अतस्तयोरपि नित्यराशिप्रवेशप्रसङ्ग इत्यत्राह । सुगम इति ॥ ३९ ॥

इति नित्यकाम्यादिविभागः ॥

काऽत्र निरुक्तिः कीदृशश्च नैमित्तिकांश इत्यत्राह । कर्तव्यमिति ।

**मू० कर्तव्यं यन्निमित्ते सति तदुभयधा पापशान्त्यर्थमेकं तत्स्यात्काम्येन तुल्यं परमकरणतो दोषकृन्नित्यतुल्यम् ॥ सत्यां कामश्रुतौ संवलितमपि भवेत्तद्बलादेतदेव त्यागे च प्रत्यवायस्त्वनधिकृतिमुखस्तत्रतत्रावसेयः ॥ ४० ॥**

एकं प्रायश्चित्तरूपं तस्याकरणनिमित्तप्रत्यवायाभावात्काम्यतुल्यत्वम् । परं केवलनैमित्तिकं तस्याकरणे दोषान्नित्यतुल्यत्वं जातेष्टेर्नैमित्तिकत्वेऽपि पुत्रगतपूतत्वादिसाधनतया संवलिताधिकारत्वमुक्तं तदाह । सत्यामिति । नित्ये केवलनैमित्तिके चाकरणे दोषोऽधिकारभ्रंशादिरूपस्तत्तत्प्रकरणेषु ग्राह्य इत्याह । त्यागे चेति ॥ ४० ॥

इति नैमित्तिकावान्तरविभागः ॥

यस्तु मन्वादिभिरुक्तो विभागः इह वाऽमुत्र वा काम्यं प्रवृत्तं निष्कामस्य ज्ञानपूर्वं तु निवृत्तमिति स कथं घटते सर्वेषामपि धर्माणां यत्किञ्चित्फलकाममधिकृत्यैव विधेः । यद्यपि निराशीःकर्मकारिणां परमात्मप्रीतिरेवोद्देश्या तथाऽपि तत्कामत्वं सिद्धं, परप्रीतेरुद्देश्यत्वं च तस्याः स्वप्रीतिपर्यन्तत्वमभिप्रेत्यातुराणामेव । अतस्तेषामपि स्वप्रीतिकामत्वं दुस्त्यजमित्याक्षेपमनूद्य प्रत्याचष्टे । निष्काममिति ।

मू० निष्कामं चेन्निवृत्तं तदिह न घटते मुक्तिकामाधिकारात्स्वप्रीतिस्पर्शहीना न च भवति परप्रीतिरिष्टेति चेन्न। युक्ता यस्मान्निवृत्तिर्बहुभयशबलात्तन्निवृत्तं निवृत्तं सूते यत्र प्रवृत्तिस्त्वभिमतमहितं तत्प्रवृत्तं प्रवृत्तम् ॥ ४१ ॥

नात्र निष्कामशब्दः इच्छाभावनिवृत्त्यर्थ इति निषेधाभिप्रायः। कुतस्तर्हि विभाग इत्यत्राह। युक्तेति। अनर्थाविनाभूतसुखकामनातोऽनिवृत्तं कर्म निष्कामं निवृत्तमिति चाहुः। अनेवंविधं तु काम्यं प्रवृत्तमिति च इति भावः ॥ ४१ ॥

इति प्रवृत्तिनिवृत्तिविभागः ॥

यदि यज्ञादिभिरेव विद्योपकारः तर्ह्याश्रमान्तराणां सा न स्यात्। अथ यथार्हं स्ववर्णादिधर्मैः तदा शूद्रस्यापि स्यात् ततश्च काषद्वयोक्तापशूद्रनयविरोधः। तत एवानधिकारे मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्। इति शर*प्रयोक्तिविरोध इत्यत्राह। पुम्भिरिति ॥

मू० पुम्भिः सिद्धाधिकारैः क्रतव इव [illegible]काङ्क्षभावं भजन्त्यः प्रोक्तास्त्रैवर्णिकार्हाश्श्रुतिनयवशतो यद्यपि ब्रह्मविद्याः ॥ अस्तेयाद्यैः प्रपत्त्या परिचरणमुखैरप्यधीतैः स्वजातेस्सर्वेऽपि प्रापुयुस्तां परगतिमिति तु ब्राह्मगीतादिसिद्धम् ॥ ४२ ॥

* शरणयोभगवान्कृष्णः

सिद्धाधिकारैः अधीतवेदतयाऽनुष्ठानोपयुक्तज्ञानवद्भिरपेक्षितमन्त्रविद्भिश्चेत्यर्थः । श्रुतिनयवशतः—अध्ययनविधिसिद्धन्यायसामर्थ्यात्, तथा हि अग्निविद्यासापेक्षाः क्रतुविषयो यथाधीतवेदैरग्न्याधानार्हैर्निराकाङ्क्षाः स्वसिद्धौ नान्येष्वन्यतोऽधिकारं प्रयुञ्जते एवंविद्याविषयोऽपि शुगस्य इत्यधिकरणे यद्यपि प्रोक्ताः तथाऽपि शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः । तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् । इति ब्राह्मवचनात् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः । इति चातुर्वर्ण्यविषयभगवदुक्त्या च शूद्रस्यापि शास्त्रसिद्धेः फलसङ्गत्यागवद्भिर्निवृत्तिधर्मैर्योगो न विरुद्धः । स च मुक्तिपर्यन्त एव स्यादिति भावः ॥ ४२ ॥

इति त्रैवर्णिकाधिकारसर्वाधिकारविभागः ॥

अद्वैतिनः केचिदाहुः तत्त्वमस्याद्युपदेशलब्धब्रह्मात्मभावावबोधस्य तदेकध्यानसाध्यादृष्टजन्यसाक्षात्कारेण विश्वभ्रमबाध इति तदनूद्य दूषयति । ध्यानेति ॥

मू० ध्यानादृष्टेन साक्षात्कृतिरुपजनिता बाधते
चेत्प्रपञ्चं तत्तुल्यार्थैव शाब्दी प्रमितिरपि न
किं बाधते पूर्वमेव ॥ ज्वालैक्यादौ परोक्षा-
दपि हि निजगदुर्बाधमध्यक्षबुद्धेर्नाप्यत्राहृ-
ष्टरूपामहितविमथनीं भक्तिमङ्गीकरोषि ॥
४३ ॥

अयं भावः—ध्यानजनकं वाक्यजन्यं ज्ञानं ध्यानादृष्टजन्यं च समानविषयकं न वा आद्ये किमन्येन वाक्यजन्यज्ञानादेव मुक्तिस्स्यात्, उत्तरत्र ब्रह्मणि सविशेषत्वं स्यात् वेद्याकारवैषम्यात् । आत्मा-

रभेदः कल्पित इति चेन्न । तयोर्भ्रान्तित्वप्रसङ्गात् तत्त्वज्ञानान्मोक्ष इति चाङ्गीकारात्, अन्यथा श्रवणवैयर्थ्यात् । अस्तु प्रागेव बाधः बाधितानुवृत्तिपरिहाराय तु साक्षात्कार इति चेन्न । साक्षात्क्रियमाणेऽपि तत्त्वे दोषानुवृत्तौ बाधितानुवृत्तेर्लोके बहुलमुपलम्भात् । दोषनिवृत्तौ तु बाधितानुवृत्तेरेवाभावात् सदेहानां च यावज्जीवं सा दुर्वारा देहनिवृत्तौ चक्रभ्रमन्यायात्स्वयमेव निवर्त्स्यतीति किं तद्बाधकेन । ननु प्रत्यक्षभ्रमस्य परोक्षं कथं बाधकमित्यत्राह । ज्वालैक्यादाविति । अनुमानतोऽप्यत्र ज्वालैक्यप्रत्यक्षं बाध्यते देहात्मभ्रमश्चानुमानतश्शास्त्रतो वा तथेहापि स्यात्, अन्यथा कथमद्वैतवाक्यार्थविस्रम्भपूर्वकध्यानादिसिद्धिः, ध्याननियोगजन्यज्ञानस्य गरुडादिदृष्टिन्यायादनिष्टनिवर्तकत्वमिति चेत् तत्राह । नापीति । विरुद्धविषयावगाहनशक्त्या बाधितस्य हि मिथ्यात्वसिद्धिः विषहरणधीन्याये तु विषादिवदेव निवर्त्यसत्यत्वप्रसङ्गादिति भावः ॥ ४२ ॥

इति ध्याननियोगवादभङ्गः ॥

अन्ये तु वर्णयन्ति नित्यशुद्धमप्यद्वितीयं ब्रह्म गगनमिव गन्धर्वनगरवत्तया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चीकुर्यादिति विधिविषयानुष्ठानजनितनियोगविशेषेण विश्वाविद्यानिवृत्तिरिति तान्प्रत्याचष्टे । निर्दिष्ट इति ॥

**मू० निर्दिष्टो निष्प्रपञ्चीकरणविधिरसौ गौ*डमीमांसकाद्यैर्दृष्टो न क्वापि दुर्निर्वहमपि करणाद्यत्र साध्याविशेषात् ॥ मुक्तिर्नैयोगिकी चेज्जगदपि न मृषा [illegible] सापि ते स्यात्**

* गौडमीमांसकाः—मैथिलाः ।

**ध्वंसात्मत्वेऽपि तस्या न च वदसि भिदां ब्रह्मणस्तच्च नित्यम् ॥ ४४ ॥**

अनधीतमधीतविरुद्धं च कल्पयन्तीति व्यक्त्यै गौडमीमांसकाप्रत्वोक्तिः क्वापि श्रुतिषु स्मृतिषु चेत्यर्थः, । न क्वापि दृष्ट इत्ययुक्तं न दृष्टेर्द्रष्टारं पश्येः इत्यादिदर्शनादिति चेत् न ह्यत्र वाक्ये द्रष्टादिप्रध्वंसं कुर्वीतेति विधीयते किन्तु जीवस्यौपाधिकं रूपं नानुसन्धत्स्वेति वा करणायत्तज्ञानं जीवं परत्वेनापश्यन् स्वतस्सर्वज्ञं पश्येरिति वा प्रकारान्तरेण वा नेतुं शक्यत्वात्, निषेधश्रुतयश्चान्यपराः न च विधिप्रसङ्गवत्यः । दूषणान्तरमाह । दुर्निर्वहमिति । नियोगस्य हि करणेतिकर्तव्यतादि वक्तव्यं यदि प्रपञ्चध्वंसेन नियोगं भावयेदिति करणक्लृप्तिः तदा नियोगसाध्यसाधनयोरविशेष इत्यन्योन्याश्रयः । अथ नियोगमजागलस्तनीकृत्य निष्प्रपञ्चभावनयैव निष्प्रपञ्चीकरणं तदा आत्माश्रयः । इतिकर्तव्यता च करणानुपपत्त्यैव निरस्ता प्रयोक्ता चासौ द्रष्टा न स्वावसानाय नियोगकृत्यामुत्पादयेत् तदा च शास्त्रफलं प्रयोक्तृरीति न स्यात् । अथ शुद्धस्य ब्रह्मणः फलं तन्न तस्य भ्रमाध्यासशून्यत्वाङ्गीकारात् तदर्थित्वाभावाच्छास्त्रार्थप्रयोक्तृत्वायोगाच्च । अस्मिन्पक्षेऽपसिद्धान्तापत्तिमाह । मुक्तिरिति । यस्याद्दृष्टसाध्यो नाशस्तस्य ज्ञानबाध्यत्वाभावात् । प्रपञ्चमृषात्वं न स्यात् नियोगसाध्यं च सर्वं काल्पनिकत्वादनित्यमिति मन्यसे अतो मुक्तिरपि नश्वरीति बन्धोन्मज्जनप्रसङ्गः अभावाभावस्य भावत्वात् । ध्वंसस्य च ध्वंसप्रवाहापत्तिः । न च ते तत्क्लृप्तौ हेतुरस्ति । ननु ध्वंसो ह्युत्तरावधिरहितः प्रायश्चित्तनियोगात्पापध्वंसवत् मुक्तेरनश्वरत्वं स्यादित्यत्राह । ध्वंसात्मत्वेऽपीति । ध्वंसरूपा मुक्तिर्ब्रह्मणोऽन्याऽनन्या वा नाद्यः कार्यस्य सर्वस्य घटतद्ध्वंसादेः

स्वप्नप्रपञ्चतद्ध्वंसादेरिव बाध्यत्वाभ्युपगमात् । अबाधे च मुक्तावपि भेदसिद्धिप्रसङ्गात् भावाद्वैतपक्षश्च न युक्तः क्वचिन्निर्बाधितभेदसद्भावेऽन्यत्रापि तदविरोधात् तत्र चोक्तानां बाधकानां त्वदिष्टेऽपि संचारयितुं शक्यत्वात्, न द्वितीयः ध्वंसस्य साध्यत्वात् ब्रह्मणस्तु नित्यत्वात् तयोस्तादात्म्यायोगात् तदिदमभिप्रेत्याह । तच्च नित्यमिति ॥ ४४ ॥ इति निष्प्रपञ्चीकरणनियोगवादभङ्गः ॥

यस्त्वाह किं ध्याननियोगेन नियोगान्तरेण वा तत्त्वावेदकवाक्यजन्यज्ञानादेव कल्पितबाधोपपत्तिः दृष्टश्च दृढप्रतीतस्यापि वाक्यतो बाधः । ज्ञानमात्रादेव च मुक्तिश्श्रूयते भवति वाक्यादद्वैतधीः अतस्सैव द्वैतनिवर्तिकेति सोऽयमनुयोक्तव्यः किं श्रवणजन्यज्ञानमात्रात्प्रतिष्ठापितान्मुक्तिः उताद्वैतज्ञानजनितविकल्पवैमुख्यस्य तेनैव वाक्येन जनिताद्विशदज्ञानादिति तत्राद्यं निरस्यति । वाक्यार्थेति ॥

**मू० वाक्यार्थज्ञानमात्राद॒तमिति वदन्मुच्यते किं श्रुतेऽस्मिन् बाढं चेन्मानबाधस्स यदनुभवति प्रागिवाद्यापि दुःखम् । ध्यानादीनां विधानं भवति च वितथं तन्न युक्तं न चेष्टं ध्यानाद्यङ्गाद्यशब्दोदितचरममतेर्नाधिकं वः प्रकाश्यम् ॥ ४५ ॥**

बाधकज्ञाने सति बाधः कथं न स्यादिति शङ्कते । बाढं चेदिति । अत्र प्रमाणत्रयविरोधमाह । मानबाध इति । स्वात्मनि प्रत्यक्षेण स्वस्मिन् परत्र अनुमानागमाभ्यां ब्रह्मविदोऽप्यमुक्ताश्चिरजीविनः श्रुतिस्मृतिसिद्धाः शुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धं बुद्धे

चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत इत्यापस्तम्बोक्तं प्रसङ्गमभिप्रेत्याह । स इति । प्रसङ्गान्तरमाह । ध्यानादीनामिति । बहुवचनम् । उपासनात्मकत्वदर्शनरूपत्वादिविशेषणभेदात् । अत्र वेदोदितत्वान्न वैतथ्यं मोक्षार्थविद्यानां नान्यार्थत्वमित्यभिप्रायेणाह । तन्न युक्तमिति । अपसिद्धान्तत्वमप्याह । न चेष्टमिति । ध्यानस्य हि भेदवासनानिरासार्थत्वं हि ब्रूय । द्वितीयं दूषयति । ध्यानेति । अयं भावः पश्चात्तनं वाक्यार्थज्ञानं पूर्वाविशिष्टविषयम् । अधिकविषयं वा उभयत्र प्रागेव दूषणमुक्तमिति ॥ ४५ ॥

इति वाक्यार्थज्ञानस्य मोक्षोपायत्वभङ्गः ॥

प्रत्यक्षभ्रमस्य प्रत्यक्ष एव बाधक इति निर्बन्धो नेत्युक्तं तत्सद्भावेऽपि शब्दः प्रत्यक्षरूपबाधकधीजनक इति न शक्यं कल्पयितुम् अन्यथा क्वचिदनुमानेऽपि तत्क्लृप्तिः । न च कोद्रवबीजस्य स्वाभीष्टफलमाङ्कुरजनकत्वक्लृप्त्या तत्सिद्धिः । ननु दग्धवेत्रबीजस्य रम्भाङ्कुरारम्भकत्वं दृश्यते यदि दृश्यते कस्तन्निषेधेत् अथ नेदं निदर्शनं वाक्येष्वपि दशमस्त्वमसि संवित् स्वप्रकाशा इत्यादिषु प्रत्यक्षधीजनकत्वं दृष्टमिति चेत् कथमेतत् । दशमोऽहमस्मि मम संवित् स्वप्रकाशा इति श्रोतुरपरोक्षा धीरिति चेन्न सेयं वाक्यश्रवणानन्तरजन्या तन्मूलस्वयंपरीक्षणजन्या वा आद्ये धर्मिप्रत्यक्षत्वेऽपि दशमत्वविशिष्टवेषो न प्रत्यक्षः अन्यथा धर्मवांस्त्वमसीति केनचिद्वैवज्ञेनोक्ते तादृशोऽहमिति बुद्धेरप्यापरोक्ष्यं स्यात् धर्मस्यातीन्द्रियत्वान्न तथेति चेन्न अयं पर्वतः परभागे वह्निमानित्याद्युपदेशे प्रसङ्गात् । स्वतोऽपरोक्षार्थविषयतयाऽत्र तादृशो विशेष इति चेन्न । नियामकाभावात् दशमत्वादिविशिष्टाकारेण स्वतोऽपरोक्षत्वासिद्धेश्च । तदिह वाक्यतो दशमत्वादिबोधे त्वमर्थस्य स्फुट-

प्रत्यक्षगृह्यमाणतया केषांचिद्दशमत्वादिविशिष्टाकारग्रहेऽपि प्रत्यक्षत्व-भ्रान्तिमात्रमित्याह । उद्देश्यांशमिति ।

**मू० उद्देश्यांशं त्वमाद्यं स्फुटमनुभवतां सम्यगाध्य-क्षवित्त्या प्रत्यक्षत्वभ्रमोऽयं त्वमसि दशम इत्यादिवाक्यार्थबोधे ॥ शब्दात्प्रत्यक्षबोधे प्रसजति शिथिला तद्व्यवस्था ततोऽर्थे साक्षा-त्कारं न शब्दो जनयति विमतस्सिध्यव-च्छब्दभावात् ॥ ४६ ॥**

एतेन विगीतं वाक्यं स्वार्थपरोक्षधीजनकं स्वतोऽपरोक्षार्थ-विषयत्वात् दशमस्त्वमसीत्यादिवाक्यवदित्यनुमानमपि निरस्तं दृष्टान्ताद्ययोगात् । ननु घटं पश्यतोऽयं घट इति वाक्यप्रयोगेऽपि प्रत्यक्षधीर्जायत इति चेन्न । युगपत्प्रमाणद्वयेन प्रमितिद्वयोत्पत्त्य-योगात् सम्भूयैकप्रमाणीभावस्यातिप्रसङ्गित्वादनभ्युपगमाच्च । क्रमे तु प्रत्यक्षज्ञानसमनन्तरभाविनि शाब्दज्ञाने प्रत्यक्षशिरस्के माषराशि-प्रविष्टमषी[1]न्यायेन तज्जातीयताभ्रमः दशमस्त्वमित्यादावपि कदा-चिदेवमेव । प्रतिकूलतर्कमप्याह । शब्दादिति । ज्ञातकरणानां हि परोक्षधीजनकत्वव्यवस्था शब्दप्रमाणस्याप्यन्यत्र व्याप्राङ्गीकृता तस्याः शैथिल्यं स्यात् । इष्टप्रसङ्गोऽयमिति चेन्न । तुल्यन्यायतयाऽन्यत्रापि तत्तन्नियतित्रि हेतुकार्यानुमानप्रसङ्गस्यानिष्टत्वात् । विपक्षे बाधकाद्विशेष इति चेन्न शब्दजन्यप्रत्यक्षाभावेऽपि विरोधप्रसङ्गाभावात् तस्मै मृदि-तकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः इति उपदेशा-दपरोक्षधीः श्रूयत इति चेन्न । दृशेः प्रत्यक्षविशेषरूढत्वात् अनु-

१ मसीन्यायेनेति गौडपाठः ।

पपन्या साक्षात्कारसामान्यपरत्वं कल्प्यमिति चेत् तर्हि विरुद्धक्लृप्तित्यागेन वैशद्यार्थत्वक्लृप्तिर्युक्ता । प्रतिप्रयोगमप्याह । तत इति । व्याप्तिबलादित्यर्थः । अर्थे—स्वप्रतिपाद्ये । एतेन स्वविषयसाक्षात्कारजनकतया बाधप्रसङ्गोऽपास्तः । अत्र तु विपक्षे बाधकः प्रदर्शित एवातिप्रसङ्गः ।

प्रत्यक्षज्ञानहेतुत्वं यत्त्वयाऽत्र प्रसाध्यते ।
निषेध्यमिदमस्माकं न नस्तच्छोधनं भरः ॥ ४६ ॥

इति शाब्दप्रत्यक्षभङ्गः ॥

उपदेशो न प्रत्यक्षधीजनक इत्युक्तं स एव परस्य न घटत इति वक्तुं विकल्पयति । शिष्य इति ॥

**मू० शिष्योजीवस्त्वसिद्धः किमु तव यदि वा भ्रान्तिसिद्धोमितो वा नासिद्धायोपदेशो भ्रमविषयमितौ नोपदेशार्हताऽस्य ॥ भेदे-नैक्येन वाऽन्यः कथमुपदिशतु ज्ञातभेदोऽप्यभेदं तादात्म्ये जागरूके सति किमुपदिशेत्स्वात्मने तद्विदे सः ॥ ४७ ॥**

त्वन्मते वक्तुः श्रोता किमप्रतीतः प्रतीतो वा भ्रान्तिसिद्धः प्रमितिसिद्धो वेति विकल्पः । अत्राद्यं निरस्यति । नासिद्धायेति । अप्रतीत्य शिष्यं कस्मै उपदिशेत् । द्वितीयं दूषयति । भ्रमेति । यदि शिष्यं भ्रान्तिसिद्धत्वेन न जानाति स्वयमतत्त्ववित्कथं तत्त्वोपदेष्टा । अथ तथा प्रमिणोति तथाऽपि तस्मै कथमुपदिशेत् न ह्यसावुपदेशग्रहणार्हः स्वयमपि नोपदेष्टृत्वार्हः अस्येत्युभयार्थम् । एतेन प्रतिबिम्बवद्बाधितानुवृत्त्या प्रतीयमानेभ्य उपदेश इत्यपि निरस्तं तद्वदे-

वोपदेशानर्हत्वात् । न ह्यनुन्मत्तः प्रतिबिम्बाय प्रब्रूते । तृतीयं विकल्पयति । भेदेनेति । आद्ये विरोधमाह । कथमिति । भेदप्रमितावभेदमुपदिशन् कुहकः स्यात् । द्वितीयेऽपि प्राग्वदसम्भवमाह । तादात्म्य इति । अद्वैतप्रमितिदशायां स्वभ्रान्तिसिद्धशिष्यो हि बाधितः स्वतादात्म्येन वा भातः तस्मै चेदुपदिशेत् स्वात्मानं प्रति नित्यमुपदिशेत् शिष्यस्य हि स्वतादात्म्यं पश्यन् तस्यापि तत्त्ववित्त्वं पश्यति तथा च तस्य किमुपदिशेदिति भावः ॥ ४७ ॥

इत्यात्माद्वैतिन उपदेशानुपपत्तिः ॥

यदपि वर्ण्यते । अद्वैतवाक्यजन्यधीरेवाविद्यातत्कार्यकृत्स्नाध्यासबाधिका प्रत्यक्षादेर्भेदवासनामूलतया भेदस्वरूपमात्रबोधकत्वात् तत्त्वमस्यादीनां तु तत्त्वावेदकत्वात् पूर्वा च भेदबुद्धिः परा त्वद्वैतबुद्धिः, अतः अपच्छेदनयात्पूर्वबाधः स्यात् । आहुश्च पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यति इति । एवं तत्त्वज्ञानादज्ञानबाध एव मुक्तिरिति तन्निरस्यति । नैवेति ॥

**मू० नैवालं भ्रान्तिबाधे परमपि तदिदं तत्त्वमस्यादिवाक्यं भ्रान्तोक्तिर्यद्वदादौ श्रुतिकृतनिखिलभ्रान्तिमूलत्वबोधात् । रज्जौ सर्पभ्रमे किं जनयति विदितभ्रान्तवाक्सर्पबाधं स्वप्नेऽहिः स्वप्नबुद्ध्या किमु गलति यदा तत्र च स्वाप्नताधीः ॥ ४८ ॥**

तदिदमित्यविद्यामूलत्वाभिप्रायं, न हि भवति पौर्वापर्यमात्राद् बाध्यबाधकभावः अतिप्रसङ्गात् उपक्रमनये च वैपरीत्यात् अद्वैतवाक्यानामपि माध्यमिकवाक्येन बाधप्रसङ्गात् । करणदोषतद-

भावाभ्यां विशेष इति चेन्न प्रत्यक्षादिष्वपि तदभावात् प्राचुर्य्येण दोषमूलत्वदर्शनादन्येष्वप्यनाश्वास इति चेन्न । वाक्येऽपि समत्वात् अविद्याभेदवासनामूलत्वस्य चाविशेषात् समानदोषेष्वपि भ्रमेषु परं बाधकं दृष्टमिति चेन्न । तथात्ववेदने तदयोगात् तत्र सन्देह एव स्यात् नित्ये वेदवाक्ये कारणदोष एव नेति चेन्न । वक्तृदोषाभावेऽप्यविद्यादोषमूलत्वस्य त्वयैवोक्तेः । अथ प्रसङ्गे दृष्टान्तमाह । भ्रान्तेति भ्रान्तोक्तेरबाधकत्वं भ्रान्तिमूलत्वेन ज्ञातत्वादिति चेन्न । अविशेषात् । तदाह । आदाविति । प्रथममेव प्रयोजकशिष्यया ब्रह्मव्यतिरिक्तं कृत्स्नं मिथ्येति श्रवणात्ततश्च प्रत्यक्षधीजननार्थः प्रयासः तज्जनने कुहकशक्तिजनितप्रत्यक्षबुद्धाविव विश्वासश्च न स्यात् भ्रान्तिसिद्धवाक्यादपि पूर्वभ्रान्तिनिवृत्तिस्तत्फलनिवृत्तिश्च दृष्टेत्यत्र तदुभयमिह न सम्भवतीत्याह । रज्जावित्यादिना पादद्वयेन । भ्रान्तोऽयमिति विदितेन नायं सर्प इत्युक्तेऽपि न विस्रम्भः स्वप्नसर्पभ्रमजनितं साध्वसं नायं सर्प इति स्वप्नभ्रमेण न शाम्यति यदा स्वप्नसर्पनिषेधेऽपि स्वाप्नबुद्धिर्जायेत, अतो न वाक्याद् भ्रमनिवृत्तिः तत्फलनिवृत्तिश्चात्र वक्तुं न शक्यत इति ।

भ्रान्तिसि*द्धं च धूमादिस्वरूपासिद्धि दोषतः ॥
यदृच्छा†याऽर्थसद्भावेऽप्यमानमनुमन्यसे ॥ ४८ ॥

इति तत्त्वमस्यादेः प्रपञ्चबाधभङ्गः ॥

ननु व्यावहारिकमर्यादातिक्रमाल्लिङ्गविभ्रमे प्रामाण्यानादरः इह तु न तथा प्रागद्वैतबोधाच्छास्त्रे सत्यत्वाध्यवसायात् असत्याच्च

* वाष्पे धूमभ्रमेण यत्र वह्निमति वह्न्यनुमितिस्तत्रापि विद्यत एव स्वरूपासिद्धिदोष इति भावः ।

† मम पाणौ कति वराटिका इति कस्यचित्प्रश्ने यत्र वस्तुत एव पञ्चवराटिकासत्त्वे पाणौ ते पञ्च वराटिका इति यादृच्छिकोत्तरं तत्रेत्यर्थः ।

सत्यधीर्दृष्टा यथा दर्पणादिस्थया छायया मुखादेस्सिद्धिः भूतलस्थय च गृध्रादेः । सन्ति चैवं बहून्युदाहरणानि असत्यादपि भयविस्मयादि सत्यं कार्यं दृश्यते । अतो मिथ्याभूतादपि तत्त्वमस्यादिवाक्यात्तत्त्वप्रमितिर्मुक्तिश्च युज्यत इति तत्राह । छायादिरिति ॥

**मू० छायादिर्नं त्वसत्यस्सदवगतिकरस्तत्र हेतुर्हि तद्धीस्साध्यज्ञप्त्यादिवत्सा स्वयमिह न मृषा नास्ति धीरित्यबाधात् ॥ सत्येनैव प्रसूता घट इव विमता शेमुषीकार्यभावाद्धेतुत्वालीकभावौ कथमिव विहतावेकमेवाश्रयेताम् ॥ ४९ ॥**

न हि मिथ्याभूतं प्रतिबिम्बादि मुखादिधीजनकं दर्पणे मुखप्रतीतेर्दोषमूलत्वात् परमार्थमुखप्रतीतिस्तु मुकुरविहितमिहिरकिरणन्यायेन प्रतिफलितनायनकिरणजन्यत्वात् स्वरूपच्छायया गृध्राद्यनुमानेऽपि नासत्यात्सत्यधीः छायास्वरूपस्य सादृश्यस्य च निर्बाधत्वात् मिथ्याभूतस्य च छायागृध्रस्य कार्यकरत्वे शुक्तिरूप्यादेरपि रजतादिकार्यं किं न स्यात् । युष्मद्दृष्ट्या च विमृशामः किं प्रतिबिम्बादिस्वरूपमेव सत्यधीहेतुः उत तद्धीः नाद्यः प्रातिभासिकसतोऽर्थक्रियाहेतुत्वानभ्युपगमात् । न द्वितीयः तद्बुद्धेस्सत्यत्वेन सत्यादेव सत्यसिद्धेः । तदिदमभिप्रेत्याह । तत्रेति । एतेनासत्यात्सत्योत्पत्तिरपि निरस्ता । कर्त्ता हि भयादिहेतुरिति तत्राप्येतदेवोत्तरम् । तत्रेति । यत्रासत्यात्सत्योत्पत्तिं वदसि तत्रेत्यर्थः । ननु यदि धीः स्वरूपमात्रेण कार्यविशेषहेतुस्स्यात् बुद्ध्यन्तरेऽपि तत्प्रसङ्गः अविशेषात् अथ विषयविशिष्टोहेतुस्तदा विषयस्यापि हेतुत्वं दुस्त्यजं तत्राह ।

साध्येति । यथा साध्यघटादिबुद्धया तन्निर्माणे बुद्धेरेव कारणत्वं न तद्विषयस्य सिद्धत्वे साध्यत्वस्य असिद्धत्वे हेतुत्वस्यायोगात् अन्यथाऽऽत्माश्रयोच्छेदप्रसङ्गात् । तद्वदिहापि विषयस्यासिद्धत्वान्न हेतुत्वम् । आदिशब्देनातीतज्ञप्तिः कामना च गृह्यते । नष्टधीरपि यथाहं तत्तत्कारणं न तु नष्टं पूर्वत्वेऽप्यनन्तरपूर्वत्वाभावात् स्वर्गादिकामनाऽपि तदुपायनिष्पत्तिहेतुः न तु काम्यं चक्रकापत्तेः, तद्वदिह भ्रान्तिसिद्धस्याहेतुत्वेऽपि तद्वियस्तदुत्पत्तिः । अथ स्यात् सविषया हि बुद्धिरध्यस्यते अतः कथं विषयस्य मिथ्यात्वे विषयिणस्सत्यत्वमिति तदेतत्स्वाभीष्टं विश्वसाक्षिणं पृच्छ । अथ सोऽपि मिथ्याभूतः तन्न स्वतस्सिद्धौ तदयोगात् अन्यथा तत्साक्ष्यन्तराऽपेक्षणेऽनवस्थादिप्रसङ्गात् विषयमिथ्यात्वे च व्यवहारसत्यत्ववद्धीसत्यत्वं चाविरुद्धम् एतदभिप्रेत्याह । सेति । इह अन्यस्मिन्नन्यथा बुद्ध्यमाने । सा धीः स्वयं न मृषा विषयतस्तु कदाचित्तथात्वोपचारः । तदेतद्बाधकवृत्तान्तेन व्यनक्ति । नास्तीति । धीर्नास्तीत्येवंरूपस्य बाधस्याभावादित्यर्थः आरोपितं हि नञाऽन्वेति । न त्वारोपः नास्ति धीविषयत्वाभावे ह्यसद्व्यवच्छित्तिस्स्यात् न त्वनिर्वचनीयत्वहानिरिति चेन्न । ब्रह्मण्येवं प्रसङ्गात् । अथास्ति धिया तत्सत्त्वं प्रकृतेऽपि समं माभूदसत्यात्सत्यसिद्धिः साधनं त्वदिष्टस्य किं साधकमित्यत्राह । सत्येनेति । अन्तःकरणादिभिस्सिद्धसाधनत्वमवधारणेन व्युदस्यते । अत्र व्यवच्छेद्यसिद्ध्यसिद्ध्योर्विरोध इति चेन्न । स्वोत्पादकतयाऽवधृतसामर्थ्यसम्प्रतिपन्नसत्यवर्गातिरिक्तजन्यत्वनिषेधे प्रतियोगिसिद्धेः तथाऽप्यस्मदिष्टं शृङ्गग्राहिकया न निषिद्धमिति चेत्त्वयाऽपि वा किं तथा विहितं तथा हि असत्यात्सत्यसिद्धिं वदद्भिरप्यसत्यमिथ्यालीकादिशब्दाः किं क्वचिद्व्युत्पन्नाः प्रयुज्यन्ते । अव्युत्पन्ना वा ।

पूर्वेष स्वदेशादिषु सतामेवान्यथारोप्यमाणतया बाध्यमततया चासत्यादिशब्दवाच्यत्वमिति नासत्यात्सत्यसिद्धिः उत्तरत्र परानभीष्टं न किंचित्कारणमुक्तं स्यात्। यद्वा प्रतीतप्रतियोगिकनिषेधस्य त्वदिष्टत्वात् त्वदुक्त्यप्रतीतं व्यवच्छेद्यं त्वया चैवमनुमातुं शक्यमिति प्रसङ्गे तात्पर्यं यत्रानुरूपो बलिः पिशाचानां पिशाचभाषयैवोत्तरं देयमिति न्यायाच्च। प्रातिभासिकसतश्च हेतुत्वाभ्युपगमे कथमसतोऽपि न हेतुत्वं तदपि हि कुतश्चित्प्रतिभासते न ह्यस्ति खपुष्पं दर्पणमुखमित्यनयोर्विशेषः अत्र व्याघातं च विपक्षे बाधकमाह। हेत्वेति। अनर्थक्रियाकारित्वात् प्रातिभासिकानामसत्यत्वम्। तानि चेद्दीरूपामर्थक्रियां कुर्युः कथं तेषामलीकत्वम् ननु सर्वस्यापि सत्यानृतमिथुनादुत्पत्तौ साध्यविकलो दृष्टान्तः मैवं घटाद्युत्पादकमृदादेर्व्यावहारिकसत्यत्वाभ्युपगमात् तदपेक्षया च मृत्तिकेत्येव सत्यम् इत्यादिश्रुतिनिर्वाहाच्च। अनुमानमप्यत्र तावता निष्प्रतिघमिति।

सत्यधीर्मम सत्येन तवासत्यादसत्यधीः।
सत्यादसत्यधीर्वेति क्वासत्यात्सत्यधीर्भवेत्॥ ४६॥

इत्यसत्यात्सत्यसिद्धिभङ्गः।

विश्वबाधकमद्वैतज्ञानं कारणानुपपत्त्या दूषितम्। अथ स्वप्रध्वंसकारणाभावाच्च दूष्यते। यत्तदविद्याध्वंसकमन्तिमज्ञानं तत्केन विनाश्यं न तावत्तद्विषयेण ब्रह्मणा शुद्धस्य तस्य किंचित्प्रति हेतुत्वानभ्युपगमात् अशुद्धेश्च निश्शेषध्वंसात् अत एव नानिर्वचनीयान्तरेण एवं तत्प्रध्वसेनेत्यपि दुःस्थं तस्य सदन्यत्वानन्यत्वसत्यमिथ्यात्वादिविकल्पक्षोभात् ज्ञानध्वंसस्याहेतुकत्वे च कादाचित्कत्वव्याघातः अनादित्वापाताच्च कथं प्रतियोगिसंभवः परिशेषात्स्वेनैव

स्वस्य नाश इत्यायातं तच्चायुक्तं न हि प्रतियोगिमात्रात्प्रध्वंसः क्वचिदपि दृष्टः एतत्सर्वमभिप्रेत्याह । ज्ञानस्येति ॥

**मू० ज्ञानस्याशेषभेदोदयविहतिकृतो न स्वनाश्यत्वयुक्तिर्वातादेरेव सद्मप्रशममधिकुरुते दग्धदाह्योऽपि वह्निः ॥ तस्मात्तस्यान्यदेव प्रशमकमपरं तस्य चेत्यव्यवस्था तच्चेच्छान्तिं न गच्छेत्कथमिव भविता सर्वभेदोपमर्दः ॥ ५० ॥**

वह्नेर्दाह्यं विनाश्यानु विनाशवत्तद्विनाश इति चेन्न । तत्रापि हेत्वन्तरादेव विनाशदृष्टेः निर्वाप्यते हि कदाचिद्वातेन दीपः कदाचिज्जलभादिभिः यदाऽस्य स्वयं विनाश इति मन्यसे तदाऽप्यदृष्टप्रेरितवेगवदवयवकर्मणां मिथो विभागात्सङ्घातशैथिल्यमात्रं न तु क्वचिदपि द्रव्यनाशः अवस्थान्तरापत्त्या चादर्शनं कतकरजोनिदर्शनं च बालप्रलोभनं न हि पयसि पङ्कः कतकरजसा शा*म्यते विश्लेषमात्रदृष्टेः न च स्वयं तत्र नश्यति असंश्लेषमात्रसिद्धेः अस्तु तर्हि ज्ञानान्तरेण तन्निवृत्तिरित्यत्राह । तस्मादिति । ज्ञाननिवर्तकस्यापि ज्ञानस्य तुल्यतया ज्ञानान्तरेण निवृत्तावप्युपर्युपरि तथेत्यनवस्था उक्तदोषपरिहाराय निवर्तकज्ञानस्य स्वतोऽन्यतश्च नाश्यत्वं नेति शङ्कते । तच्चेदिति । परिहरति । कथमिवेति । ज्ञानं तावत्तिष्ठति तदनुबन्धादहङ्कारदेहानुबन्धश्च दुर्वार इति भावः ॥ ५० ॥

इति निवर्तकज्ञाननिवर्तकानुपपत्तिः ॥

---

* अत्र शमुधातोर्णिचि मितां ह्रस्वस्यावश्यंभावेन कर्मणि शम्यते इत्येव प्रयोगोयुक्तः । नापि कर्तरि शाम्यते इति प्रयोगस्तस्य परस्मैपदित्वेन तथा प्रयोगायोगादर्थासंगतेश्च । ततश्च शाम्यते इति प्रयोगस्य सर्वथाऽसाधुत्वम् ॥

अथ निवर्तकज्ञानं सविषयं निर्विषयं वा सविषयत्वे ब्रह्म-विषयं तदन्यविषयं वा ब्रह्मविषयत्वेऽपि शुद्धब्रह्मविषयं वा माया-न्वितब्रह्मविषयं वा । अन्यविषयत्वे प्रपञ्चविषयं तन्मिथ्यात्वविषयं वेति विकल्पयति । बोधस्येति ॥

मू० बोधस्यान्त्यस्य वेद्यं किमु तव विशदं ब्रह्म
मायान्वितं वा किं वा भेदप्रपञ्चः किमु तद-
नृतता किन्तु वेद्यं न किञ्चित् ॥ आद्ये
स्याद्ब्रह्म दृश्यं तदुपरि युगले मोहसत्त्वाथ
तुर्ये सूते द्वैतं सती सा स्वविहतिमनृता
पञ्चमे स्यान्न धीत्वम् ॥ ५१ ॥

आद्यं दूषयति । आद्य इति । ब्रह्म दृश्यं स्यात् । शुद्धस्य दृग्विषयत्वेऽपसिद्धान्तः त्वदुक्तौ च दृग्दृश्यसम्बन्धानुपपत्तिः दृश्य-त्वानुमानस्यानैकान्त्यं ब्रह्मणोऽपि वा मिथ्यात्वाभ्युपगमप्रसङ्गश्चेति भावः । द्वितीयतृतीयौ दूषयति । तदुपरीति । मायान्वितब्रह्म-प्रतिभासः प्रपञ्चप्रतिभासश्च मोह एवेति भावः । चतुर्थे प्रपञ्चस्या-नृतता सत्याऽसत्या वेति विकल्पे पूर्वत्राद्वैतभङ्गप्रसङ्गमाह । सूत इति । उत्तरत्र स्वव्याघातमाह । स्वविहतिमिति ।

मिथ्यात्वस्य हि मिथ्यात्वे मिथ्यात्वं बाधितं भवेत् ।
सत्यत्वस्य तु सत्यत्वे सत्यत्वं साधितं भवेत् ॥

निर्विषयत्वे दोषमाह । पञ्चम इति । वृत्तिज्ञानं सर्वं सवि-षयमित्यभ्युपगच्छतां कथमस्य निर्विषयत्वं तथात्वे वा कथं वृत्ति-धीत्वमिति भावः ॥ ५१ ॥

इति निवर्तकज्ञानवेद्यानुपपत्तिः ॥

बाधकज्ञानसाध्यं विकल्पयति । साध्येति ।

मू० साध्या वस्सर्वमायाविरतिरपि परं ब्रह्म तस्मात्परा वा पूर्वत्र प्रागपि स्यात्परमपि न भवेदुत्तरत्राभ्युपेते ॥ साऽपि स्याच्चेन्निवर्त्या पुनरपि विलगेत्पूर्व एव प्रपञ्चो नो चेत्सत्यैव सा स्यात्प्रसजति च ततो ब्रह्मतत्सद्वितीयम् ॥ ५२ ॥

ब्रह्मस्वरूपत्वेऽनादित्वान्न साध्यत्वमित्याह । पूर्वत्रेति । स्वरूपादन्यत्वे सर्वभेदनिवृत्त्यसम्भवमाह । परमपीति । निवृत्तिरपि निवर्त्यैत्यविरोधं शङ्कते । साऽपीति । परिहरति । पुनरिति । लब्धस्वरूपस्य भावस्य ध्वंसो यदि न स्यात् स्वरूपं तदवस्थमेव स्यात् । प्रागभावस्य तु प्रध्वंसः भावश्च तत्प्रध्वंसश्च उत्तरत्वे सति विरोधित्वाविशेषात् । प्रध्वंसस्य च प्रागभावः भावश्च तत्प्रागभावश्च पूर्वत्वे सति विरोधित्वाविशेषात् इहापि प्रध्वंसस्तन्निवृत्तिश्च भावस्य प्रध्वंसः स्यातामिति चेत् तर्ह्यनवस्थितप्रध्वंसपरम्पराक्लृप्तिप्रसङ्गः तत्प्रध्वंसकज्ञानक्लृप्तिश्च । अस्मन्मते त्ववस्थापरम्परा प्रमाणसिद्धाऽङ्गीक्रियत इति न विरोधः । निवृत्तेरनिवृत्तौ सत्यत्वप्रसङ्गस्ततश्चाद्वैतभङ्गमाह । नो चेदिति । सत्याभावसाहित्यमदोष इत्येतच्च दूषितमेव ॥ ५२ ॥

इति प्रपञ्चनिवृत्त्यनुपपत्तिः ॥

विश्वबाधकबुद्धेराधारं विकल्पयति । अन्त्यज्ञानस्येति ।

मू० अन्त्यज्ञानस्य जीवः स्थितिपदमथवा केवलं ब्रह्म ते स्यादाद्ये तेनैव बाध्यो न तदुपजनयेद्धीः स्थितौ किं ततोऽस्य ॥ अन्त्ये-

**सत्यानृता वा तदधिकरणता नाद्य इष्टः**
**परस्मिंस्तत्क्लृप्त्यादेरयोगस्तदिह विमृशतां**
**किं न दुष्टं त्वदिष्टम् ॥ ५३ ॥**

न हि बाह्यषट्केन्द्रियमनसां ज्ञातृत्वं युष्माभिरिष्यते तुल्यन्याययतयाऽहङ्कारस्य महतो वा ज्ञातृत्वं निरस्तमेव परिशेषादहङ्कारोपहितोजीव एव ज्ञातेति कोटिः प्रथममिहोद्घाटिता केवलं सर्वोपाधिरहितमित्यर्थः । बाधकज्ञानस्य बाध्यजीवाधिकरणत्वे बाधकमाह । आद्य इति । अयं भावः बाधकेन जीवो नश्यति न वा आद्ये स्वनाशकधीसिद्धौ भेदवासनानिरासादौ न प्रयस्येदिति । न ह्यात्मनाशः परमः पुमर्थ इत्यौपनिषदपक्षः उतरत्राहमर्थविनाशे कथं जीवस्थितिः स्थापितं चाहमर्थस्यैवात्मत्वं जीवत्वे नष्टेऽपि ज्ञप्त्यात्मा तिष्ठेदित्यत्राह । धीरिति । न हि अहं विनङ्क्ष्यामि मदन्या धीर्मद्विधुरा तिष्ठत्विति मत्वा मुमुक्षुः प्रवर्तते । तथा च भाषितं मयि नष्टे*ऽपि मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता । इति तत्प्राप्तये यत्नः कस्यापि न भविष्यतीति । शुद्धस्य निवर्तकज्ञानाधारता सत्याऽसत्या वेति विकल्पयति । अन्त्य इति । सत्यत्वे ऽपसिद्धान्तमाह । नाद्य इति मिथ्यात्वेऽनुपपत्तिमाह । परस्मिन्निति । असत्यस्य ज्ञानाधिकरणत्वस्य क्लृप्तिर्हि कल्पकाविद्याहङ्कारादिसापेक्षा अतो निवर्तकज्ञानतदाधारत्वतत्प्रतिभासा यावत्स्युः तावदविद्याऽनुवृत्तेति न ततस्तन्निवृत्तिः अविद्यायाः तत्कल्पितस्य ज्ञानस्य च सुन्दोपसुन्दविषनाशकविषन्यायेन युगपद्ध्वंसादविरोध इति चेत् तदिदमन्योन्यध्वंसकत्वं दृष्टं कल्प्यं वा । नाद्यः असिद्धेः । न द्वितीयः कल्पकाभावात् ।

* आत्मसिद्धौ भगवद्भिर्यमुनाचार्यपादैः ।

गतिशून्यस्त्वं कल्पकमिति चेत् अस्ति सतां गतिः तामेवानुवर्तस्व । एवं परपक्षे दूष्यान्तराणि च सूचयन्निगमयति । तदिति । बहु-श्लोकोक्तबहुविधदोषप्रस्थानादित्यर्थः ॥ ५३ ॥

इति निवर्तकज्ञानाधारानुपपत्तिः ॥

यथा मृषावादिमते न बोधान्मुक्तिसम्भवः ॥ त्वन्मतेऽपि तथेत्येवमपन्यायेन शङ्कते । नाभुक्तमिति ।

**मू० नाभुक्तं कल्पकोट्याप्युपशमनमियात्कर्म निष्कृत्यभावे विद्यातस्तद्विनाशश्रुतिरिह तदसौ तत्प्रशंसेति चेन्न ॥ तादृग्विद्यैव तन्नि-ष्कृतिरिति हि विदां चक्रुराम्नायवृद्धा नान्यद्ब्रह्मानुभूतिप्रतिभटदुरितध्वंसतस्साध्य-मत्र ॥ ५४ ॥**

स्मर्यते हि अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥ इति । तर्हि प्रायश्चित्त-शास्त्रवैयर्थ्यं स्यादित्यत्रोक्तम् । निष्कृत्यभाव इति । ननु तद्यथैषीक-तूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते इति श्रूयते तदा विद्वान्पुण्यपापे विधूय तत्सुकृतदुष्कृते धुनुते इत्यादि च ।

न कर्मणां क्षयो भूप जन्मनामयुतैरपि ।
ऋते योगात्कर्मकक्षं योगाग्निः क्षपयेत्परम् ॥

यथाऽग्निरुद्धतशिखः इत्यादि च स्मर्यते अतः फलभोगा-भावेऽपि ज्ञानात्कर्मनिवृत्तिः स्यादित्यत्राह । विद्यात इति । न च तत्त्वज्ञानान्निश्रेयसाधिगम इत्याद्यसूत्रविरोधः दुःखजन्मप्रवृत्तिदोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायात् इति द्वितीयसूत्रे

ज्ञानस्य मिथ्याज्ञाननिवृत्तिद्वारा कर्मानारम्भार्थत्वस्य स्थापितत्वात् कृतन्तु कर्म स्वफलत एव नश्यतीत्यविरोधः अत्र कर्मणामवश्यभोक्तव्यत्ववचनमकृतप्रायश्चित्तविषयमित्यभिप्रायेण प्रत्याह । नेति । अत्रापि तर्ह्यकृतप्रायश्चित्तत्वाद्भोक्तव्यत्वमित्यत्राह । तादृगिति । त्रय्यन्तविहितपरब्रह्मध्यानरूपेत्यर्थः । आम्नायवृद्धाः स्मर्तारः ते चेश्वरदर्शनं सर्वप्रायश्चित्तमित्याहुः इज्याचारदमाहिंसाः प्रायश्चित्तान्यशेषाणि प्रायश्चित्तं ततस्त्वेकम् इत्यादि च । ब्रह्मप्राप्तिहेतुतया विहितस्य योगस्य कथं नैमित्तिकत्वमित्यत्राह । नान्यदिति । स्वतःप्राप्ता हि संसरतामपि ब्रह्मानुभूतिस्सूरिवत् तत्प्रतिबन्धकनिवृत्त्यै योग इति निष्कृतिरूपत्वं तस्य युज्यत इति । भावः । अत्र दुरितशब्देन बन्धकं पुण्यमपि सङ्गृहीतं प्रतिबुद्धं प्रत्यनिष्टफलप्रदत्वाविशेषात् । एते वै निरयास्तात स्थानस्य परमात्मन इति स्वर्गादीनां निरयत्वस्मृत्या तत्साधनस्य पापत्वोपपत्तेः । न सुकृतम् इत्यारभ्य सर्वे पाप्मानोऽतो निवर्तन्ते इति सुकृतस्यापि पापत्वेन सङ्कलय्याम्नानाच्च । तदेवं धीसङ्कोचककर्मध्वंसे धीविकास एव ब्रह्मानुभूतिरिति तत्कामनाव्यपदेशोऽपि न विरुद्धः अन्यच्च प्रतिबन्धकनिरासवृत्तान्ते एवं प्रतिसन्धेयम् ॥ ५४ ॥

इति विद्यायाः पापनाशकत्वोपपत्तिः ।

ननु पुण्यस्य दुरितशब्देन सङ्ग्रहो न युक्तः विरुद्धत्वात् क्वचित्प्रयोगश्छत्रिन्यायात् इत्यभिप्रायेण शङ्कते । प्रायश्चित्तमिति ॥

**मू० प्रायश्चित्तं न पुण्येन च सुकृतमनुश्रूयते धर्मबाध्यं नाधर्मत्वं विधानान्न यदि सुचरितं त्वङ्गमस्याश्च न स्यात् ॥ मैवं धर्मा-**

**ऽप्यधर्मो भवति हि बहुधाऽधिक्रियादेर्विशे-षाद्धर्मं त्रैवर्गिकन्तु स्वयमिह निगमः पाप्म-कोटौ पपाठ ॥ ५५ ॥**

न हि पुण्योद्देशेन क्वचिन्निष्कृतिविधिः धर्मेण पापमपनुदति इति च श्रूयते न तु धर्ममिति काम्यमपि अधर्मत्वाद्धर्मेणापनु-द्यत इति चेन्न । फलोद्देशेन विहितत्वात् न चात्र श्येनादिनयः स्वरूपतः फलतो वा निषेधानाघ्रातत्वात् धर्मेष्वपि च यद्यधर्मत्वं तदा तदङ्गत्वं विद्याया न घटते एषां चतुर्णां हेतूनामन्यथा-सिद्धिमभिप्रेत्य प्रत्याचष्टे । मैवमिति । अधिकारिभेदेन पापत्वापत्तौ तं प्रति निष्कृतिविधियुक्तः धर्मेण पापम् इत्यत्र च यथार्हं पापशब्द उभयग्राही विहितत्वं च कंचित्प्रति धर्मत्वं साधयेन्नान्यं प्रत्य-धर्मत्वं निरुन्ध्यात् तेषामेव च कर्मणां फलसङ्गादित्यागवतां निवृ-त्तिधर्मतापत्त्या विद्याङ्गत्वोपपत्तिः । एतत्सर्वं व्यनक्ति । धर्मोऽपीति । स्मर्यते हि ।

स एव धर्मस्सोऽधर्मस्तंतं प्रति नरं भवेत् ।
पात्रकर्मविशेषेण देशकालावपेक्ष्य च । इति ॥

एवं सति न सुकृतम् इत्यादौ सुकृते पाप्मशब्दो न भाक्त इत्यभिप्रायेणाह । धर्ममिति । अत एव हि त्रैवर्गिकांस्त्यजेद्धर्मा-निति मुमुक्षुं प्रत्यनुशिष्यते ॥ ५५ ॥

इति त्रैवर्गिकसुकृतस्यापि विद्यानाश्यत्वम् ॥

अस्तु विद्याऽपि प्रायश्चित्तान्तरवदुपात्तदुरितनाशिका उत्प-त्स्यमाननिष्कृतिर्न स्यात् निमित्तानुदयेऽपि नैमित्तिकप्रवृत्तावतिप्रस-ङ्गात् उदितत्वशङ्कयाऽपि क्वचिन्निष्कृतिः पाक्षिकोऽपि दोषः परिहार्य

इति न्यायात् न तूत्पत्स्यमानत्वशङ्कया तदवस्थस्य निमित्तत्वेन प्रायश्चित्तशास्त्रैरनुद्देशात् । एवं विदि पापं कर्म न श्लिष्यते तस्यैवात्मापदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन इत्यादयस्तु विद्यां प्रशंसन्ति अर्थायोगात् । ब्रह्मविदां बाल्येन तिष्ठासेत् इति विधौ कृत्स्नबालकृत्योपादाने कामचारप्रसङ्गाच्च । अस्त्विति धाष्ट्र्ये नाविरतो दुश्चरितात् इति श्रुतिरुपरुन्ध्ये । सर्वान्नानुमतिश्च प्राणात्यये हि तद्दर्शनात् इति च सूत्रं जडवद्भावयतामपि योगिनां सतां वर्त्म न दूषयन् इति प्रवृत्तिनियम उक्त इति एतत्सर्वमभिसन्धायाह । अश्लेष इति ॥

**मू० अश्लेषः पाप्मभिश्चेत्प्रसजति वितथा दुश्चरित्रान्निवृत्तिस्तेषु प्रामादिकेष्वप्यमतिकनिपतद्बीजवत्स्यात्प्ररोहः ॥ मैवं शास्त्रैकवेद्ये फलफलिविषये युक्तयो ह्यस्वतन्त्राश्शास्त्राद्बाधस्तु तिष्ठेन्मतिकृतविषये शब्दशक्त्यादिभिर्नः ॥ ५६ ॥**

प्रामादिकैरश्लेषे श्रुत्यादिविरोधो नेत्यत्राह । तेष्विति । प्ररोहः यथार्हकार्यारम्भः अन्यथा कथमकामकृतेषु प्रायश्चित्तविधिरिति अत्र श्रुतस्याश्लेषस्य किं न्यायतो बाधः उत वचनत इति विकल्पमभिप्रयन्प्रत्याह । मैवमिति । आद्यं दूषयति । शास्त्रैकवेद्य इति । फलफलिविषये साध्यसाधनभावेन मिथस्सम्बध्यमानेऽर्थे इति यावत् । अस्वतन्त्रा न हि वचनविरोधे न्यायः प्रभवति तथा सत्यतिप्रसङ्गादिति भावः । द्वितीये विषयभेदाद्विरोधं परिहरति । शास्त्रादिति । शब्दशक्त्यादिभिः नाविरतो दुश्चरितात् इत्यत्र ह्यविरतिः बुद्धिपूर्वचर्यानुवर्तनं तत्प्रसक्तस्य प्रतिषेधः उपस्तिश्च

प्राणधारणार्थमि*भ्योच्छिष्टं चखाद अनुपानप्रतिग्रहमिभ्येनार्थितस्स तत्राह । न वा अजीविष्यमिमानखादन् कामो म उदपानम् । इति ब्रह्मविदोऽपि मे कामतो निषिद्धकरणं परिहार्यमित्यर्थः ॥

अपि चेत्पातकं किंचिद्योगी कुर्यात्प्रमादतः ।

योगमेव निषेवेत नान्यं यत्नं समाचरेत् ॥ इति च स्मर्यते ।

अश्लिष्टस्य पातकस्य किं योगरूपेणापि प्रायश्चित्तेनेति चेन्न । तत्र तद्विधौ तात्पर्याभावात् अन्यप्रायश्चित्तप्रसक्त्या योगं न विच्छिन्द्यात् इत्येव हि तात्पर्यम् । यद्यपि जीवितात्ययमापन्नः प्राणसंशयमापन्नः इत्यादिवचनानि विद्वदविद्वत्साधारणानि तथाऽप्यत्रानापद्दशायां प्रामादिकेष्वपि विद्यामाहात्म्यादश्लेष उच्यत इति सार्थत्वम् अतः पापानां वा विनाशवदश्लेषोऽपि विद्यासाध्यं फलमिति ॥ ५६ ॥

इति प्रामादिकोत्तराघाश्लेषोपपत्तिः ॥

यद्यपि पापस्याश्लेषः तथाऽपि कथमितरस्याप्येवमसंश्लेषः पाते तु इति सूत्रोक्तः पुण्याश्लेष इति विकल्पानुपपत्त्या शङ्कते श्लिष्टमिति ॥

**मू० श्लिष्टं विद्याङ्गपुण्यं स्वफलवितरणान्नेतरार्थं विरागे रागादारभ्यमाणं फलवदमतिकं सम्भवेन्नैव पुण्यम् ॥ पुण्याश्लेषस्ततोऽस्मिन्न घटत इति चेन्नोपयुक्तातिरिक्तैर्विद्याङ्गैस्तस्य योगादमतिकृतमपि ह्यामनन्त्येव पुण्यम् ॥५७॥**

अत्र हि पुण्यस्याश्लेषः किं बुद्धिपूर्वस्य तदन्यस्य वा । आद्ये

* इभ्यो हस्ती तत्पालक इभ्य ।

विद्याऽङ्गस्य तदनङ्गस्य वा । अङ्गत्वे विरक्तकृतस्य अन्यकृतस्य वेति विकल्पः तत्र विद्याङ्गस्याश्लेषो न सम्भवति स्वफलभूतविद्याप्रदानात् । वीतरागस्य न फलान्तरार्थप्रवृत्तिः यतस्तदश्लेषोक्तिः स्यात् सरागकृतं तु स्वफलं दद्यादेव धीपूर्वस्याश्लेषायोगात् अधीपूर्वं तु सुकृतं न सम्भवत्येव चोदितानुष्ठानरूपत्वात् निषिद्धे त्वधीपूर्वत्वसम्भवः चोदनानपेक्षानुष्ठानत्वात् अतो ब्रह्मविदि पुण्याश्लेष उक्तो न सम्भवतीत्याक्षेपः । एवमाक्षेपेषु कंचिदंशं विशेषयिष्यन्नाह । नेति । हेतुमाह । उपयुक्तेति । उपायविरोधिशमनेषु कर्मसु कानिचिदधिकानि सम्भवन्ति अन्यैर्विद्यापूर्तेः, न च निष्फलत्वं युक्तम् । अतस्स्वानुगुणं फलान्तरं दातुमर्हन्तीति शङ्कायामश्लेषस्सूच्यते निष्कामानुष्ठितानां ह्येतेषां न फलान्तरसम्भव इति यच्चाधीपूर्वकाम्यं न सम्भवतीति तदपि न विषण्वायतनदीपाद्युपाख्याने तद्दृष्टेः स्वप्ने च विद्वानपि वासनाविशेषान्निषिद्धमिव काम्यमप्यनुतिष्ठेत् पित्रादयश्च निरपेक्षं प्रति हितबुद्ध्या काम्यमाचरेयुः तच्च प्रामादिकप्रायं सर्वं विदि न संश्लिष्यत इत्यभिप्रायेणाह । अमतिकृतमिति ॥ ५७ ॥

इति पुण्याश्लेषः ॥

अत्र कश्चिच्चोदयति । कर्मेति ।

**मू० कर्माश्लेषप्रणाशौ तदुपधिभगवन्निग्रहादेर्निवृत्तिर्नष्टाश्लिष्टातिरिक्तं न च किमपि ततः सङ्क्रमः कस्य मैवम् ॥ तत्तत्कर्मप्रसूतौ स्वभजनशमितौ निग्रहानुग्रहौ यौ तत्तुल्यावेव देवः प्र*यति विदुषि तच्छत्रुमित्रेषु धत्ते ॥ ५८ ॥**

* मुक्तिमुपगच्छति ।

द्विविधं हि कर्म बन्धकं विद्योत्पत्तेः पूर्वमुत्तरं च पूर्वं च द्विविधम् आरब्धकार्यमन्यच्च तत्राद्यं चरमदेहावधिभोगनाश्यं भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते इति सूत्रोक्तेः । द्वितीयं विद्यया नाशितम् । उत्तरं च द्वेधा प्रामादिकराशिप्रविष्टमन्यच्च । प्रथममिहाश्लिष्टम् । अन्यच्च निष्कृत्या भोगेन वा निश्शेषितम् । अत्र मुक्तिविलम्बमनिच्छतां निश्शेषकर्मनिर्वेशार्थे युगपद्बहुदेहसङ्ग्रहोपयोगः । एवं स्थिते विदुषश्चरमदेहादुत्क्रान्तिकाले तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्याम् अस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतं तत्सुकृतदुष्कृते धूनुते प्रियेषु सुकृतमप्रियेषु च दुष्कृतम् । विसृज्य ध्यानयोगेन ब्रह्माऽप्येति सनातनम् । इत्यादेः को विषय इति तदेतत्सङ्क्रमश्रुतितात्पर्यानभिज्ञतामूलमित्यभिप्रायेण प्रतिक्ति । मैवमिति । श्रुतितात्पर्यं विवृणोति तत्तदिति । अयं भावः न ह्यत्र मुख्यकर्मणां सङ्क्रान्तिः असम्भवात् अतः ।

आदाय सुकृतं सर्वं तस्य गच्छेदरक्षितः ।
शपता यत्कृतं पुण्यं शप्यमानमुपैति तत् ।
शप्यमानस्य यत्पापं शपन्तमधिगच्छति ॥

इत्यादिन्यायात् अचिरोगादिसङ्क्रमणवादवच्छ्वावपि तादृशफलोत्पादने तात्पर्यमिति ॥ ५८ ॥

इति प्रियाप्रियसङ्क्रमः ।

पुनरनिर्धारितश्रुतितात्पर्यश्चोदयति । अन्य इति ।

**मू० अन्यश्चेदन्यकर्मप्रजनितफलभुक् शास्त्रवैयाकुली स्याद्ब्रह्मज्ञैरुज्झितानां क्वचिदपि न**

**ततः कर्मणां सङ्क्रमः स्यात् ॥ उद्वेलस्स्याच्च धातेत्यसदविषमताद्यन्वितेनैव धात्रा विद्यानिष्ठोपकारादुचितफलमिदं दीयते वर्गयुग्मे ॥ ५९ ॥**

अन्यस्यान्यकृतकर्मफलभोगे शास्त्रफलं प्रयोक्तरीति व्यवस्थाभङ्गाच्छास्त्रस्य व्याकुलता स्यात् ऋत्विक्कृतं हितैषिकृतं चान्यार्थमेव करणात्परत्र फलतीति युक्तम् अभिचारकर्म च भ्रातृव्यस्य पूर्वदुष्कृतोत्थापितत्वात्तत्पीडाहेतुः अभिचरिता च स्वकृतफलं भ्रातृव्यमरणं स्वयं भुङ्क्ते इह तु नैवं सम्भवः। अतः परवित्कर्मणामश्लेषविनाशसम्भवेऽपि नान्यत्र स्वरूपत इव फलतोऽपि सङ्क्रमस्सम्भवतीति ईश्वरस्य स्वमर्यादाऽतिक्रमः स्यादित्याह। उद्वेल इति। उक्तं चोद्यद्वयं स्वकर्मफलभोगव्यवस्थयैव परिहृतमित्यभिप्रायेण प्रत्याह। इत्यसदिति। हार्दं विवृणोति। अविषमतेति। एतेन ब्रह्मविदुपकारापकारयोरपरिमितफलत्वं च सिद्धं भवति॥ ५९॥

इति प्रियाप्रिययोर्विद्वत्कर्मफलसमानसृष्टेः स्वकर्मफलत्वम् ॥

अथ विधूतपुण्यपापस्य विदुषः स्थूलशरीरान्मूर्धन्यनाड्या निष्क्रान्तस्यार्चिरादिपादोक्तमातिवाहिकक्रममाह। अर्चिरिति।

**मू० अर्चिर्घस्रोऽथ पक्षस्सित उदगयनं वत्सरो मातरिश्वा मार्तण्डस्तारकेशस्तडिदपि वरुणामर्त्यनाथप्रजेशैः ॥ आदिष्टो विश्वनेत्रा स्वयमतिवहने देवयानाध्वगानाम्। यः प्रोक्तोऽमानवाख्यस्स तदिदधिपतिर्विश्रुतो मानसोऽपि ॥ ६० ॥**

तत्पुरुषोऽमानवस्स एतान्ब्रह्म गमयति इत्यव्यवहितब्रह्म-गमयितृत्वेन निर्दिष्टस्य प्राधान्यसूचनार्थं वरुणादिषु तृतीया । अमानवः किमिह नोक्त इत्यत्राह । य इति । वैद्युतपुरुष इह तडित्पतित्वात्तडिच्छब्दोक्त इति भावः । तथा ऽपि वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान्गमयति इत्युक्तस्येह नोपादानमित्यत्राह । विश्रुत । इति । शेषं भाष्यादौ । अत्रैवं तत्त्वसारे सङ्गृहीतम् ।

अर्चिरहस्सितपक्षानुदगयनाब्दमरुदर्केन्दून् ।
अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुः ॥

इति । अन्ये त्वाहुः ।

अर्चिर्वासरशुक्लपक्षषडुदङ्मासांश्च संवत्सरम् ।
वायुं भास्करचन्द्रविद्युदुदपान् सेन्द्रं प्रजानां पतिम् ॥
गत्वाऽथो विरजां विमुच्य च तनुं सूक्ष्मां ततोऽमानव-
स्पर्शात्क्षालितवासनास्सुकृतिनो गच्छन्ति विष्णोः पदम् ॥ इति ॥

अत्र वासनाशब्देन फलप्रदानरहितनष्टाक्लिष्टकर्मराशेरनुप्रवृत्तौ धीसङ्कोचकश्शक्त्यंशस्तन्नियतसूक्ष्मप्रकृत्यंशो वा विवक्षितः । अपरे तु ब्रुवते ।

भूलोकेशाग्नयोऽष्टौ प्रथममहरतः पूर्वपक्षस्सितात्मा ।
मासाष्षडुदवत्सरोऽथोदशतनुपवनस्सैक आदित्यवर्गः ॥
चन्द्रो विद्युज्जलेशस्समरुदधिपतिस्सप्रजानामधीशस्ते
मार्गस्यार्चिरादेरतिवहनविधौ विश्वनेत्रा नियुक्ताः ॥ इति ॥

अत्र सैक इति पवनविशेषणम् । अथ वायोरेकादश पुरुषस्य इत्यादिश्रुतेः ॥ ६० ॥

इत्यातिवाहिकक्रमक्लृप्तिः ।

एवं देवयानेन गतस्य यस्सर्वविशिष्टब्रह्मानुभवलक्षणो धीविकासः तत्र विकल्पतः पराभीष्टमाक्षेपमनुवक्ति । बुद्धेरिति ॥

मू० बुद्धेर्योऽसौ विकासः कबलितनिखिलोपस्कृतब्रह्मतत्त्वस्स प्राक्चेन्नित्यमुक्तिर्न यदि कथमसौ नश्वरत्वं न गच्छेत् ॥ मैवं प्रध्वंसवत्ते स खलु मम तथा शौनकाद्युक्तनीत्या शान्ताशेषापराधेन च भवति पुनस्तत्र सङ्कोचहेतुः ॥ ६१ ॥

स प्राक् चेत् स धीविकासः प्रागप्यस्ति चेदनादिश्चेदित्यर्थः तत्र बाधकमाह । नित्यमुक्तिरिति । बद्ध एव न स्यादित्यर्थः आगन्तुत्वकोटिमनुभाषते । न यदीति । तत्रापि जातानां विनाशध्रौव्यात् बाधक इत्याह । कथमिति । स्वपरसिद्धान्तविवेकविकलोऽसीत्यभिप्रायेण प्रत्याह । मैवमिति । तद्विवृणोति । प्रध्वंसवदिति । पूर्वावधिमानपि प्रध्वंस उत्तरावधिरहित इति मन्यसे एवं भावोऽपि कश्चित्तथा स्यात् अनुपपत्त्या तत्र तथात्वमिति चेत् अत्राप्यस्ति श्रुतिभङ्गानुपपत्तिः भावान्तरमेव च वयमभावं ब्रूमः निश्शेषविरोधिनिवृत्तौ हि ज्ञानस्य परसङ्कल्पसिद्धसर्वगोचरविकासवत्तया सदाऽभिव्यक्तिः स्मर्यत इत्याह । शौनकादीति । मुक्तविषयश्रुतिषु च परात्परं पुरुषमीक्षते सर्वं हि पश्यः पश्यतीत्यादिनिर्देशस्य सङ्कोचकादर्शनात् ईक्षणस्य सदानुवृत्तिर्हि स्वतः प्राप्नोति भावः । ननु यदि मुक्तोऽपि चेतयते पुनरपि सङ्कोचकमारभेतेत्यत्राह । शान्तेति । सङ्कोचहेतुकरणमपि हि कर्ममूलं निश्शेषितकर्मणः कथं तत्स्यादिति ॥ ६१ ॥

इति मुक्तधीविकासनित्यत्वम् ।

मुक्तस्य ज्ञानं चिन्तितम् अथ तस्य चिकीर्षाप्रयत्नशक्तिविषया चिन्ता तत्र मुक्तो देहप्राणतद्व्यापारैर्मुक्तो न वेति विकल्पं भावयन् क्रमादाक्षिपति मुक्ताविति ।

**मू० मुक्तौ देहाद्यभावे मुकुलितविषयो जक्षदादिप्रवादस्तत्सत्त्वे चाशरीरश्रुतिविहतिरतः का चिकित्सेति चेन्न ॥ इच्छातस्स्यादवस्थाद्वयमुभयविधश्रुत्यबाधाद्विमुक्तौ कर्मायत्तैर्वियोगः परमिह कथितस्तस्य देवोपमस्य ॥ ६२ ॥**

आद्ये मुक्तमधिकृत्य प्रवृत्तः जक्षत्क्रीडन् इत्यादिप्रवादो निर्विषयः स्यात् । द्वितीये धृत्वा शरीरमशरीरं वाव सन्तम् इत्यादिश्रुतिविरोधः स्यात् इति । अत्र द्वादशाहवदुभयविधं बादरायणोऽतः । इति सूत्रोक्तप्रकारेण स्वेच्छाकर्मकृतदेहादियोगायोगाभ्यामवस्थाद्वयवानिति मन्वानः प्रत्याह । नेति । प्रथमचोद्यपरिहारतयाऽभिप्रेतं प्रथयति । इच्छात इति । श्रुतिविरोधं तु विषयव्यवस्थातश्शमयति । कर्मायत्तैरिति । यत्र विषयभेदसम्भवः तत्र क्वचिद्बाधेऽतिप्रसङ्ग इति भावः । देवोपमस्य ईश्वरेण साम्यं प्राप्तस्येत्यर्थः एतेन परविषयशरीरविधिनिषेधश्रुत्योरिवात्रापि व्यवस्थोपपत्तिर्व्यज्यते ॥ ६२ ॥

इति मुक्तस्यैच्छिकशरीरयोगानियमः ॥

इच्छागृहीतदेहत्वं देवोपमत्वं च मुक्तस्य प्रसक्तं तस्य च शारीरकान्ते जगद्व्यापारवर्जमैश्वर्यं साधितं स किं शक्तोऽप्यनिच्छया जगत्सृष्ट्यादौ न व्याप्रियते उताशक्त एवेति विकल्पे पूर्वं यदीत्यादिनाऽनूद्य तत्र बाधकमाह । स्यान्मुक्त इति ॥

मू० स्यान्मुक्तो विश्वदेही यदि भवति जगद्व्या-
पृतौ तस्य शक्तिः स्वातन्त्र्यं क्वाप्यशक्तौ
विगलति स च नः स स्वराडित्यधीतः ॥
धत्तेऽनुच्छेद्यसारा तदियमुभयतः पाशतां
तर्करज्जुर्मैवं देवस्तदिच्छां क्वचिदपि न
विहन्त्येवमस्तु स्वराट् सः ॥ ६३ ॥

विश्वदेही स्यात् अन्यथा कथं बहु स्यामिति सङ्कल्पार्हत्वं विश्वदेहत्वं चानेकेषां निष्प्रमाणकं प्रमाणतर्कप्रत्यूढं च अत एव शक्तोऽपि प्राप्त्यभावान्न व्याप्रियत इति पक्षोऽपि प्रत्यादिष्टः । उत्तरस्योत्तरमाह । स्वातन्त्र्यमिति । क्वचिदशक्तौ ।

पारतन्त्र्यं परे पुंसि प्राप्य निर्गतबन्धनः ।
स्वातन्त्र्यमतुलं प्राप्य तेनैव सह मोदते ॥ इत्यादिप्रसिद्धं निस्सीमस्वातन्त्र्यं विगलेत् । श्रुतिविरोधमप्याह । स चेति । स स्वराड्भवति इति ह्याम्नायते द्वयोरपि दुरतिक्रमतया संशयडोलाकेलिसान्तत्यमित्यभिप्रायेणाह । धत्त इति । उत्तरकोटिपरिग्रहाभिप्रायेण प्रत्याह । मैवमिति । श्रुतिविरोधमुपशमयति । देव इति । अकर्मवश्यस्याप्रतिहतेच्छत्वमिह स्वातन्त्र्यम् ईश्वरो हि बद्धानां यथाकर्म क्वचित्क्वचिदिच्छां विहन्ति मुक्तस्य तु न क्व चिदपि परिमिते पराधीनस्वदेहदृष्ट्यादावित्यर्थः ॥ ६३ ॥

इति पराधीनस्यापि मुक्तस्येच्छाविहतिराहित्यम् ॥

अत्र कश्चित्सिद्धान्त्यभिमतायाम्मुक्तौ दोषं विवक्षुस्तामनुभाषते । आविर्भूतेति ॥

मू० आविर्भूतस्वरूपा निरवधिकसुखब्रह्मभुक्ति-

स्तु मुक्तिः सेवात्वाद्दुःखकृत्सा भवति यदि न तद्धर्मिमानेन बाधात् ॥ पाप्मा चास्मिन्नु- पाधिस्स च न खलु तदा पुण्यपापव्यपाया- दात्मानो विष्णुशेषा इति च सुखमयी सा स्वरूपानुरूप्यात् ॥ ६४ ॥

परशेषतैकरसस्वरूपाविर्भावयुक्तेत्यर्थः बाढमित्यत्र बाधकं शङ्कते । सेवात्वादिति । अयमाशयः स्वामिभृत्यभावबुद्ध्यनुवृत्तिस्से- वात्मा प्रसिद्धा सा च दुःखात्मतया तद्धेतुतया वा व्याप्ता । तद- त्रापि तथा स्यादिति । अत्र धर्मिण्यप्रसिद्धे हेतोराश्रयासिद्धिमभिप्रे- त्याह । न तदिति । प्रमिते तद्ग्राहकेण बाधमाह । धर्मीति । श्रूयते हि रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति इति । आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते इति । स्मर्यते च तदस्य त्रिविधस्यापि इत्यारभ्य निरस्तातिशयाल्हादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता । इति । सोपाधिकत्वम- प्याह । पाप्मेति । नित्यानामनित्यानां वा दुःखकृत्त्वं हि सहका- रिणि पापे सत्येव । अनित्यानान्तु पापजन्यतयाऽपि एवं साध्यव्या- पकत्वं सिद्धम् । साधनाव्यापकत्वमप्याह । स चेति । पुण्यपापव्य- पायादित्यनेन श्रुतिस्मृतिसूचनम् । अस्तु तर्हि सुखरूपत्वाभावे सेवात्वं हेतुः इत्यत्राऽपि धर्मिसिद्ध्यसिद्धिविकल्पदोःस्थ्यस्य तदव- स्थत्वादव्यक्तमप्रयोजकत्वं व्यनक्ति । आत्मान इति । अयं भावः कर्मोपाधिकसेवा हि कर्मवैचित्र्यात्प्रतिकूला उदासीना किञ्चिदनुकूला च स्यात् इयं तु निरुपाधिकस्वामिसेवा यथाऽऽगमं निरवधिकसुखरू- पेति । एतेन प्रसङ्गोत्थानमपि निरस्तं श्रुतिविरोधे व्याप्तिशैथिल्ये

च तस्याऽप्ययोगात् । ये च मुक्ते ज्ञानचिकीर्षाप्रयत्नसुखदेहादियोगाद् दुःखादिसाधकाः प्रयोगाः तेऽपि यथोक्तप्रकारेण प्रतिषेध्याः ब्रह्मणा चानैकान्त्या इति । अथाऽपि यदि मुक्तो सुखं तदा सुखरागान्मुमुक्षुः प्रवर्तेत इति कथं वीतरागाधिकारः रागाच्च प्रवृत्तः प्रागिव बध्येत । हन्त यदि रागस्सर्वो बन्धहेतुरिति मन्यसे तद्विशेषो वा आद्ये सर्वाभीष्टसंसारनिवृत्तिरागोऽपि तथा स्यात् । द्वितीये कोऽसौ विशेषः सुखविषयत्वमेवेति चेन्न । तादृशस्यापि पापानारब्धत्वादेव दुःखहेतुत्वायोगात् । अथ तदप्यत्र शङ्क्येत तदा आगमबाध इति । एवं मुक्तस्य स्वदेहसृष्ट्यादिरागोऽपि व्याख्यात इति ॥ ६४ ॥

ननु यदि मुक्तस्सर्वज्ञस्स कथं न दुःख्येत् विषयविशेषे सन्दर्शनं हि बद्धस्यापि दुःखहेतुः अबुद्धिपूर्वकदुःखोत्पत्त्यसम्भवात् न चानुकूलमात्रविषया मुक्तधीः सर्वं हि पश्यः पश्यति इति श्रुतेस्सङ्कोचानभ्युपगमात् न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् इति पूर्वोक्त्या सोढव्यस्सङ्कोच इति चेन्न । सङ्कोचकानां निश्शेषक्षीणत्वात् न चात्र कारणतां जनयेद्दीपो निम्बबृन्दाकरेणुमान् इतिवत्किञ्चिन्निमित्तमन्तरेण स्वतःप्राप्तप्रकाशैकदेशभङ्गः स्यात् । मण्डूकवसयाऽक्ताक्षा वंशानुरगबुद्धिभिः इतिवद्वा केनचिद्धेतुना प्रागनुकूलेषु प्रतिकूलबुद्धिर्युक्ता इदानीं तु प्रतिकूलेष्वनुकूलधीर्यदि तादृशोपाधितस्स्यात् तथा सति भ्रान्त्यनुवृत्त्या कर्माद्यनुवृत्तिरपि दुर्वारा एतेन नित्यानां मुक्तानां च क्वचिदस्थानभयशङ्कावादोऽप्यन्यपरतया नेतव्यः, एवम्मुक्तबुद्धेस्सङ्कोचासङ्कोचविकल्पासहतयाऽत्र पाषाणकल्पपक्ष एव ज्यायानिति तत्राह । सर्वस्येति ।

**मू० सर्वस्याप्यानुकूल्यं स्वत इह जगतो वासुदेवात्मकस्य व्यक्तिं तन्मुक्तिकाले भजति**

**भवकृतज्ञानसङ्कोचहानेः ॥ प्राचीनप्रातिकूल्यक्रमविषयधिया नैष दुःख्येत्तदानीं प्रागप्येतत्स्वकर्मोपधिकृतभगवन्निग्रहैकप्रयुक्तम् ॥ ६५ ॥**

यदि स्वतोऽनुकूलस्वामिभूतितया दृश्यमानं हि सर्वमपि स्वतोऽनुकूलमेव भायात् तर्हि बद्धदशायामपि तथा भासेतेत्यत्राह । व्यक्तिमिति । तादृक्कं प्रतिबन्धकविगमे हि प्रकाशेत अनुकूलस्वभावं ब्रह्मवत्तदात्मकं सर्वमिदानीं कैश्चित्प्रतिकूलतया गृह्यत इति चेत् इत्थं कर्मसंवृतधियां यथाकर्म भानभेदोपपत्तेः । यथाऽऽहुः ।

वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च ।
कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं कुतः ॥ इति ।
तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ।
तदेव कोपाय यतः प्रसादाय च जायते ॥ इति च ।

अत उपाधिविगमे स्वतःप्राप्ताभिव्यक्तिर्युक्ता । ननु संसृत्यवस्थासिद्धं निरयाणां प्रातिकूल्यं स्वानुभूतं च दुःखं मुक्तः पश्यति वा न वा आद्य गन्धाश्मरजसा स्पृष्टो नष्टो दीपः पुनर्ज्वलेत् इति न्यायेन पुनरपि दुःखसन्ततिरुदियात् उत्तरत्र धीसङ्कोचाभ्युपगमप्रसङ्गः तथाऽपि दुःखित्वं स्यात्तस्य तद्व्याप्त्यङ्गीकारादित्यत्राह । प्राचीनेति । क्रमशब्दः तदातनसन्तानसूचनार्थः कर्मानन्तर्यपरो वा । तदानीं मुक्तिकाले न हि प्राप्ताभिषेकं प्राचीनकारागृहवासधीर्दुःखाकरोति । स्वाधारवर्तमानसुखादिसाक्षात्कारं च भोगमाहुः प्रसिद्धं च ।

प्राप्तानि दुःखान्यपि दण्डकेषु सञ्चिन्त्यमानानि सुखीबभूवुरिति । पूर्वमपि प्रातिकूल्यं यत्प्रयुक्तं तन्निवृत्तौ कथं तत्स्यादित्यभिप्रायेणाह । प्रागपीति ॥ ६५ ॥

इति निरुपाधिकब्रह्मानुभवस्य दुःखरहितनिरतिशयानन्दत्वम् ॥

यत्तु तन्त्रान्तरस्थैरुच्यते । मुक्तात्मानोऽपि शिवाः किं त्वेते यत्प्रसादतोमुक्ताः सोऽनादिमुक्त एको विज्ञेयः पञ्चमन्त्रतनुः । इति तच्च श्रुतिविरोधमभिप्रेत्याह । अन्य इति ॥

**मू० अन्ये चानादिशुद्धाः श्रुतिसमधिगतास्सूरयस्सन्त्यसङ्ख्याः कर्माभावादनादेर्न तु भवति कदाऽप्येष संसारबन्धः ॥ शेषाणां शेषिणश्च स्फुरति सुखतया सर्वदा सर्वतत्त्वे नित्यानाम्मुक्तिभाजामपि भुवनकृता भोगमात्रं समानम् ॥ ६६ ॥**

श्रुतिसमधिगताः सदा पश्यन्ति इति श्रुत्या निर्बाधमधिगता इत्यर्थः । न ह्यसौ श्रुतिर्मुक्तविषया मुक्तानामेकैकशस्सदा दर्शनाभावात् । इयं हि दर्शनं सदेति विशिंषत्यपि सदा दर्शनविशिष्टान् सर्वान् स्वरसतोऽवगमयति । न त्वादिमद्दर्शनप्रवाहसातत्यं तच्च बहुवचनस्य सङ्कोचकादृष्टेः उपबृंहणतश्च कपिञ्जलन्यायानवताराद्सङ्ख्या इत्युक्तम् । ननु परतन्त्रचेतनानामस्मदादिवत्संसृतिरवर्जनीया । अथ कथमनादिसिद्धत्वमित्यत्राह । कर्माभावादिति । उक्तहेतुना कर्माप्यवर्जनीयमिति चेन्न । सदा दर्शनश्रुत्यैव मिथ्याज्ञानादिपूर्वकस्य कर्मणः प्रत्यासेधात् अन्यथा कथमीश्वरोऽप्यङ्गीक्रियते । माभूदिति चेत् । श्रुतिबाध इति शेषं पठ । सर्वप्रशासितुश्शास्त्रवश्यत्वाभावान्न कर्मवश्यत्वमिति चेन्न । पारतन्त्र्येऽप्यनादिसर्वज्ञानामपि तदभावं पश्य । अथापि कर्माभावो न तावदन्यो-

न्याभावः संसृत्यभावं प्रत्यप्रयोजकत्वात् । न प्रागभावः तस्य भावशिरस्कत्वात् न प्रध्वंसः भावपूर्वकत्वात् न संसर्गाभावः । तस्यापि प्रागभावादिविकल्पदोषः स्यादिति चेत् । तन्न । कर्मात्यन्ताभावस्य विवक्षितत्वात् अन्यथा ईश्वरेऽप्येवं विकल्पप्रसङ्गात् । नित्येषु च नाशकारणाभावान्नाशाभाव इत्यभ्युपगमस्य भङ्गप्रसङ्गात् । कस्य चिदनादिसिद्धत्वे कोहेतुरिति पृच्छन्तस्त्वहेतुविद्भिरनुग्राह्याः अत एव कथमीश्वरस्य क्वचिदिच्छा नित्या क्वचिदनित्येति वैषम्यानुयोगश्च विधूतः । न चाधिकारवैचित्र्यादनन्तादिष्वप्येष्विन्द्रादिवत् बद्धत्वानुमितिश्शक्या स्वच्छन्देशावतारवत् । यदा हि मुक्तानां शिवत्वमुक्तं तत्किमीश्वरतादात्म्यं तज्जातीयत्वं वा तद्गुणसाम्यं वा । नाद्यः हेतुमुक्तस्यानादिमुक्ततादात्म्यासम्भवात् । न द्वितीयः न तत्समश्चाभ्यधिकश्च न त्वत्समोऽस्तीत्यादिविरोधात् । न तृतीयः पारतन्त्र्येऽपि शुद्धिमाङ्गल्यसार्वज्ञ्यादिमात्रेण तत्सिद्धेः । अथ नित्यानां नमुक्तानामनीश्वरत्वे तद्भोगसाम्यं न स्यादिति मन्वीथाः तत्र ब्रूमः शेषाणामिति । स्वतन्त्रपरतन्त्रयोर्यथादृष्टिभोग्यसाम्यात् भोगसाम्यं युज्यते सूचितं चैतत् भोगमात्रसाम्यलिङ्गाच्चेति ॥ ६६ ॥

इति नित्यसूरिसिद्धिः । नित्यमुक्तेश्वराणामपि भोगसाम्यं च ॥

नन्वग्निहोत्रदर्शपूर्णमासादिसाधनविशेषात्तत्साध्यस्वर्गे तारतम्यमङ्गीकुर्मः तथा मोक्षेऽपि स्यादन्यथा कथमागमशास्त्रे क्वचित्सालोक्यादिमुक्तिभेदकथनमिति शङ्कते । सालोक्येति ।

**मू० सालोक्याद्याः प्रभेदा ननु परिपठिताः क्वापि मोक्षस्य मैवं सायुज्यस्यैव तत्त्वात्तदितरविषये मुक्तिशब्दस्तु भाक्तः ॥ तस्मिंस्ते च त्रयस्स्युस्तदपि च सयुजोर्भाव इत्यैक-**

**रस्यं युक्तास्यं लोकसाम्यादिवदपरधिया-**
**न्तावतैवैक्यमोहः ॥ ६७ ॥**

तेषु मुक्तिशब्दो न मुख्य इत्यभिप्रायेणाह । मैवमिति । मुख्यं मुक्तिशब्दविषयमाह । सायुज्यस्येति । अन्यत्र प्रयोगः कथमित्यत्राह । तदितरेति । तथा च नियम्यते ॥

लोकेषु विष्णोर्निवसन्ति केचित्समीपमिच्छन्ति च केचिदन्ये ।
अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ॥ इति ।

तर्हि सायुज्ये सालोक्यादिभोगाभावात् भोगसाम्यसूत्रं परिमितविषयं स्यादित्यत्राह । तस्मिन्निति । सायुज्ये हि सहस्रे शतादिकमिव सालोक्यादि चिक्रमन्तर्भवतीति एकस्मिन्वाक्ये ब्रह्मसायुज्यसालोक्ययोस्सहपाठोऽप्येवमन्तर्भावविवक्षया मुख्यगौणमुक्त्यपेक्षी पुरुषभेदानुरोधाद्वा यथार्हं निर्वाह्यः । ननु यदि सायुज्यमेव मोक्षः तदा पूर्वोक्तं भोगसाम्यं न स्यात् ऐक्यापत्तिरेव हि सायुज्यम् अतः कस्य केन भोगसाम्यमित्यत्राह । तदपीति । नन्वेकीभूतयोर्भावो हि सयुजोर्भावः तत्र परं प्राचीनब्रह्मानन्दानुवृत्तिमात्रमेव स्यात् अन्यूनश्चाप्यवृद्धिश्चेति स्थापनात् अतो भोक्तृद्वित्वाभावाच्चोद्यं तदवस्थमित्यत्राह । युक्तास्यमिति । अत्र सालोक्यादिनयात् भुज्यमानं युक्शब्दार्थः तेन भोगसाम्यमाक्षिप्यते । सायुज्यसार्ष्टिसहपाठे तु कण्ठोक्तं, न हि सयुक्शब्द एकपर्यायः तथा क्वचिदपि प्रयोगाभावात् । द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते इति द्वयोरेव प्रयोगाच्च तयोरन्यः इत्युत्तरवाक्ये च स्पष्टमेतत् एतासामेव देवतानाꣳसायुज्यम् इत्यत्र बहुदेवतासायुज्यं युगपत् क्रमेण वा । नाद्यः भिन्नैरेकस्य युगपदेकतापत्त्ययोगात् । न द्वितीयः विभागाविभागविकल्पदोःस्थ्यात् विभागयोग्यत्वे हि संयोगविशेषमात्र

स्यात् तदभावे तु क्रमेणोत्तरोत्तरतादात्म्यादेकपरिशेषः स्यात् न चैतत्क्वचिद्दृष्टमिष्टं वा । यदि कश्चिन्नैघण्टुकः ऐक्यं सायुज्यमिति पठेत् ततस्य स्वपक्षाभिनिवेशेन शब्दशक्तिग्रहणापरिबुद्धतया वा प्रयुक्तमित्युपेक्षणीयं द्वित्वे स्थितेऽपि सरित्समुद्रसलिलयोरिव सम्भेदविशेषकृतमेकराशित्वं वा विवक्षितम् ॥ ६७ ॥

इति मुक्तानुभवस्य समानभोगत्वलक्षणसायुज्यैकरूपत्वम् ॥

यदि मुक्तोऽपि परतन्त्रः तर्हि स्वच्छन्दप्रवृत्तपरबुद्ध्या पुनरपि बन्धः किं भवेदिति नित्यं शङ्काकलङ्कितः स्यात् अतः पारतन्त्र्यादिपरिहारेण परब्रह्मसाम्यसिद्धिरवधार्या । अन्यथा निरञ्जनः परमं साम्यमुपैति इति परमत्वविशेषणं व्यर्थं स्यादित्यत्राह । विश्वाधारस्येति ।

**मू० विश्वाधारस्य लक्ष्मेत्यभिहितमखिलं सम्भवेन्नापवृत्ते तन्निष्ठत्वादि सर्वं न हि विलयमियात्तच्छरीरस्य तस्य ॥ तन्निघ्नत्वेऽपि मुक्तो न भवति पुनरावृत्तिशङ्काकलङ्की तादृक्सौहार्ददृष्टेर्वयमिह तदनावृत्तिशास्त्रेण विद्मः ॥ ६८ ॥**

अयं भावः ईश्वरस्य यल्लक्षणत्वेनोक्तं तत्सर्वं मुक्ते न स्यात् लक्ष्येतरगामित्वे लक्षणत्वायोगात् एकस्सर्वशरीरीति च शास्त्रसिद्धम् अतो मुक्तस्याप्याधेयत्वादिनियमो न निवर्तेत । परमत्वविशेषणं तु तुलाधृतसुवर्णपाषाणयोरिव न सर्वाकारसाम्यं साधयितुमर्हतीति । अतिशङ्कामपाकरोति । तन्निघ्नत्वेऽपीति । मुक्तस्य शङ्कानिवृत्तिहेतुमाह । तादृगिति । स्वतन्त्रेऽपि स्वाभाविकसौहार्दद-

शेनादित्यर्थः । मुमुक्षूणां मुक्तावर्तनशङ्का केन निवर्त्येत्यत्राह । वयमिति । श्रुतिस्मृतिचक्षुषो वयं चैविद्याः तस्मादस्माकमपि परस्रोहाद्देदर्शनं सिद्धमिति भावः । सर्वेषु लोकेषु कामचारो भवति इमान् लोकान् कामान्नीकामरूप्यनुसञ्चरन् स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति इत्यादिशास्त्रदृष्ट्या च पुनरावृत्तिं वयं शङ्कमहीति चेन्न । ईदृशवाक्यानां विधूतपुण्यपापस्य स्वच्छन्दवृत्तौ तात्पर्यात् अन्यथा महावाक्यविरोधात् । ननु एतेन प्रतिपद्यमाना इमम्मानवमावर्तं नावर्तन्ते इति सविशेषणश्रवणादावर्तान्तरेष्वावृत्तिश्शङ्क्येतेति चेन्न । अहेतुकावृत्त्ययोगाद्बहुश्रुतिविरोधात् विशेषणोक्तेश्च घोरत्वानुवादपरत्वेन सफलतयाऽन्यत्रावृत्तावौदासीन्यात् अन्यथा उपबृंहणशतं च प्रकुप्येत्, गीयते च ।

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ इति ।
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ इति ॥

एतत्सर्वमभिप्रेत्य सूत्रम् अनावृत्तिश्शब्दादिति ॥ ६८ ॥

इति पुनरावृत्तिप्रसङ्गपरिहारः ॥

अथ वैवशेषिकादिपठितं प्रस्तरप्रायमोक्षं पराचिकीर्षुस्तदुक्तं प्रयोगमनुवदति । विश्वैरिति ।

**मू० विश्वैर्वैशेषिकैस्तैर्भवति विरहितो नाशिताद्दृग्गुणत्वाज्जीवात्मा जन्मकाले घटवदिति यदि स्यादिहाम्नायबाधः ॥ दृष्टान्तस्साध्यहीनः क इव निगमविल्लिप्सते मुक्तिमेतां धी-**

**नित्येच्छादयस्तत्परिणतय इति स्याच्च हेतो-रसिद्धिः ॥ ६९ ॥**

जीवाः पार्थिवपरमाणव आकाशश्च कदाचिदशेषविशेषगुण-शून्याः अनित्यविशेषगुणत्वात् उत्पत्तिक्षणे घटवत् न चाऽत्र दृष्टा-न्तस्साध्यविकलः कार्यद्रव्यगुणानां तद्धर्म्युत्पत्त्यनन्तरभावित्वनिय-मात् सहोत्पत्तावुपादानोपादेयभावायोगात् न च भावस्समवायि-कारणेन विना कश्चिदुत्पद्यते । ननु जीवः सर्वदा विशेषगुणवान् आत्मत्वात् ईश्वरवत् इति प्रतिप्रयोगः स्यात् । तन्न निरीश्वर-वादिनां दृष्टान्तासिद्धेः भूषणस्य तु मुक्तिदशायां ज्ञानं कार्यमकार्यं वा आद्य कारणसापेक्षत्वान्नश्वरत्वादिप्रसङ्गः उत्तरत्र इदानीमप्युप-लभ्यत । एकदा चैकस्य ज्ञानद्वयमयुक्तम्*। किंच नित्यज्ञानं मुक्तौ भासते न वा आद्ये स्वतोऽभावेऽपसिद्धान्तः परतो भाने ज्ञानान्तरा क्लृप्तिगौरवं तदपि कार्यमकार्यं वेति विकल्पदोःस्थ्यं च । उत्तरत्र-निर्विषयं सविषयं वा । नाद्यः तादृशख्यात्यनभ्युपगमात् द्वितीये तु सर्वविषयं नियतविषयं वा आद्येऽनेकानादिसर्वज्ञवादप्रसङ्गः मुक्तिदशायां सर्वज्ञत्वं भवत्विति चेन्न तथाऽपि तादृशत्र्यन्तवादान-ङ्गीकारात् नियतविषयत्वे त्वीश्वरज्ञानस्येव मुक्तज्ञानस्यापि नित्यस्य दुस्साधं सामग्रीभेदतो हि सर्वत्र धियां विषयनियमः विषयश्च तस्य

आनन्द इति चेत् स किं कार्योऽकार्यो वा नाद्यः अनभ्युपगतेः हेतुनिरूपणायोगाच्च । न द्वितीयः अद्याप्युपलब्धिप्रसङ्गात् विषय-विषयित्वानुपपत्त्याऽनुपलब्धिरिति चेत् तन्न किं तयोः स्वरूपम-तिरिक्तं वा । आद्येऽनाद्युपलब्धिप्रसङ्गः उत्तरत्र भावस्योत्पन्नस्य ध्वंसित्वं स्यात् । उत्पन्नोऽपि कश्चिद्भावो न नश्यतीति चेन्न अद-

र्शनात् कल्पकाभावात् । आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते इति श्रुत्या तथाऽङ्गीकुर्म इति चेन्न । अयमानन्दशब्दो जीवविषयः परविषयो वेत्यनिर्धारणात् स्वानन्दश्च साक्षात्क्रियामाणस्साधारो निराधारो वा भाति पूर्वत्रानन्दमात्रविषयत्वव्याघातः परत्र अहं सुखीति भानाभावादानन्दाभिव्यक्त्यापि न पुरुषार्थभोक्तृत्वसिद्धिः सुखादेस्स्वसमवेततयाऽनुभवो हि भोग इति आस्तामेतत् यदि कश्चित्कौमारिल एवं प्रयुञ्जीत देवदत्तमुक्तिकालः एतज्ज्ञानवान्कालत्वादिति तस्य देवदत्तसुषुप्त्यादिकालैरनैकान्त्यं तेषामपि पक्षीकरणे तदातनज्ञानस्य निर्विषयत्वसविषयत्वादिविकल्पक्षोभः । अत एव ।

निजं यत्त्वात्मचैतन्यमानन्दोऽध्यक्त्यते च यः ।
यच्च नित्यविभुत्वादि तेनात्मा नैव मुच्यते ॥
मनःकरणकेनात्मा प्रत्यक्षेण प्रतीयते ।

इत्युपदेशोऽप्यश्रद्धेयः । यच्च कैश्चिच्चिन्मात्ररूप आत्मा चेतयितृत्वादिरहितः प्रकाशत इत्यनुशिष्यते तदा प्रमाणकम् अतस्समस्तविशेषगुणशून्यात्मानुमानं निष्कम्पमिति तत्राह । स्यादिति । यद्यत्र कदाचिज्जीवः स्वधर्मभूतज्ञानरहित इति साध्यं तदा तन्नित्यत्वश्रुतिविरोधः । अथ तद्विकारविशेषरहित इति तत्राव्यवहिताधारत्वनिषेधे सिद्धसाधनं व्यवहिताधारत्वनिषेधे तु शास्त्रबाधः स्वमतेन साध्याप्रसिद्धिश्च । उत्पत्त्यवस्थघटदृष्टान्तश्च साध्यविकल इत्याह । दृष्टान्त इति । प्रागसद्द्रव्योत्पत्तेर्निरस्तत्वेनाश्रयहान्या तन्निदर्शनायोगात् नित्यस्य तु विगुणस्य द्रव्यस्य नित्यं यत्किंचिद्विशेषगुणवत्त्वादिति शेषः । अनुमानस्य बाधकतर्कमाह । क इवेति । अयेदमाकूतं केवलं दुःखनिवृत्त्यर्थो न क्वचिदपि कस्यचिदपि प्रवृत्तिर्दृश्यते

त्तरसुखमभिसन्धायैव सर्वेषां दुःखनिरासप्रवृत्तिरिति लोकवादविदः । अन्यथाऽपि ब्रूमः सुषुप्त्यवस्थजीवमुपदिष्टवति प्रजापताविन्द्रः प्राह । न खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापि इतो भवति नाहमत्र भोग्यं पश्यामि इति । ततः प्रजापतिरपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणकं ब्रह्मसमं मुक्तमुपदिदेश, अतः केवलं दुःखनिवृत्तिर्न मुक्तिरिति जानन् कथं त्वदुक्तमुक्तिकामः प्रवर्त्स्यतीति हेतावपि विकल्पाक्षमत्वं मत्वाह धीरिति । अनित्यविशेषगुणवत्त्वादिति वदता किं धीस्वरूपं तत्परिणतयो वा आत्मगुणत्वेन कथ्यन्ते स्वसिद्धान्तदृष्ट्या पुरुषगुणभूताऽऽगन्तुकचैतन्मादयो वा तत्राद्यस्य दूषणम् । धीर्नित्येति । अनित्यविशेषगुणवत्त्वमसिद्धमित्यर्थः । द्वितीये त्वात्मनस्तद्वत्त्वं नेति । मतद्वयेऽपि स्वरूपासिद्धिमाह । इच्छादय इति । तृतीयेऽपि पय्यन्तविद्भिरनङ्गीकारादसिद्धिस्सुगमेति तस्य पृथगनुद्धारः । एवं दुःखसन्ततिः अत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवत् इत्यनुमानमपि निरस्तम् आगमसिद्धाभिर्नित्यसन्ततिभिरनैकान्त्यात् प्रदीपावयविसन्ततेश्चास्मान्प्रति निदर्शनायोगात् अवस्थासन्ततेश्चोच्छेदाभावात् दीपत्वावस्थासन्ततिवदिति त्वया निदर्शयितुमयुक्तत्वादिति ॥ ६६ ॥

इति पाषाणवन्मोक्षभङ्गः ॥

अथ साङ्ख्योक्तं चिदचिद्विवेकं संसारं तन्निवृत्तिप्रकारं च सङ्गृह्णाति । आत्मेति ।

**मू० आत्मा चिन्मात्ररूपो विकृतिमति जडे बिम्बितो बुद्धितत्त्वे तच्चास्मिंस्तद्विवेकाग्रहणविरचितः पुंसि संसारमोहः ॥ अन्त्या विज्ञा-**

**नवृत्तिः प्रकृतिपुरुषयोरन्यतां गाहमाना तद्धर्वंसाऽरभेत्त्री पुरुष इह सदा मुक्त एवेति साङ्ख्याः ॥ ७० ॥**

चिन्मात्ररूप इति । पुरुषस्वरूपशोधनं नासावचित्स्वभावः, न च ज्ञातेत्यर्थः । विकृतिमति जड इत्यचेतनधर्माणामुपलक्षणम् एवं हि विवि*च्यते ।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥
त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ इति ।

बिम्बित इत्यादिना प्रकृतिपुरुषयोरितरेतरधर्माध्यासे हेतुविशेष उच्यते अप्रकाशमाने कथं तद्धर्माध्यास इत्यत्रोक्तम् । तस्मिन्निति । स चाध्यास एवं कथ्यते ।

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ इति ।

फलितमाह । तदिति । विवेकः—भेदः तदग्रहणशब्देन सामग्र्येकदेशोपादानम् ॥

ज्ञानेन चापवर्गो विपर्ययात्तद्विपर्यासः ।
वैराग्यात्प्रकृतिलयः संसारो भवति राजसाद्रागात् ॥

इति कारणान्तरमपि हि सङ्गृह्यते कृपाणप्रतिफलितमुखमलिनतान्यायसूचनाय मोहशब्दः । अस्य किं निवर्तकमित्यत्राह । अन्त्येति । विज्ञानवृत्तिः—विज्ञानरूपान्तःकरणवृत्तिः विज्ञानस्य वा बुद्धितत्त्वस्य विवेकख्यातिरूपा परिणतिः ।

* व्युपसृष्टस्योभयपदिनोरौधादिकस्य ।

विवेकख्यातिपर्यन्तमज्ञानं चित्तचेष्टितम् ।
एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ॥
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ।
तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम् ॥
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितस्सुस्थः ।
प्रकृतेस्सुकुमारतरं न किंचिदस्तीति मे मतिर्भवति ॥
या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ इति ।

स्फटिकरागनिवृत्तिन्यायसूचनाय तादृक्शब्दः । यद्यपि संसारः पुरुषस्यारोपितः तथाऽपि तद्भ्रमो दुस्त्यज इत्यत्राह । पुरुष । इति । इह संसारे वर्तमानेऽपि पुरुषस्तु भ्रान्त्याऽप्यनाघ्रातस्सर्वदा पुष्करपलाशवन्निर्लेप इत्यर्थः । तथा चाहुः ।

तस्मान्न बध्यतेऽद्धा न मुच्यते नाऽपि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाऽऽश्रया प्रकृतिः ॥ इति ।

इति समीचोक्तसंसारानुवादः ॥

एवमनूदितेष्वर्थेषु चिन्मात्ररूपत्वस्य प्रागेव ज्ञातृत्वसाधनेन निरस्तत्वात्तदनन्तरोक्तं बिम्बितत्वं दुदूषयिषुः तन्मुख्यममुख्यं वेति विकल्पं भावयन्मुख्यं दूषयति । नीरूप इति ।

**मू०** **नीरूपे बिम्बितत्वं क्व नु भवति कथं रूपशून्यस्य तस्यान्निर्लेपे संसृतिः का कथमतिविशदो निष्क्रियश्चैष मुह्येत् ॥ नित्यं वा किं न मुह्येदुपधिभिरितरैर्वस्तु भेदं कथं वा को वा मोक्षोऽद्य पुंसः प्रथममपि न खल्वस्य दुःखादिगन्धः ॥ ७१ ॥**

मुकुरादीनाम्मुखादीनां च रूपवत्त्वनियमादात्मान्तःकरणयोस्तदुभयस्थानीयत्वं न घटत इति वाक्यद्वयाभिप्रायः। दृक्शक्तिरूपः संसरन् आत्मा पुरुषस्स्वभोगार्थं स्वनिष्ठां बुद्धिं व्यनक्ति, तेनाबोद्धाऽपि सन् बोद्धेव भवति, बुद्धिरपि सलिलादिवत्स्वच्छस्वभावतया स्वनिष्ठां चिच्छक्तिं व्यनक्ति, तेन स्वयमबोध्री सती बोध्री भवति। एतावतैव बिम्बितत्ववाचोयुक्तिरित्यमुख्यपक्षेऽपि संसरन्नात्मेति विशेषितं न तावदिदं निरर्थकं वाक्येऽनन्वयापत्तेः। मुक्तबुद्ध्योरपि परस्पराभिव्यञ्जकत्वप्रसङ्गाच्च। सार्थकत्वे निर्लेपत्वसमर्थनविरोध इत्यभिप्रायेणाह। निर्लेप इति। एतेन शास्त्रारम्भहेतुभूता मुमुक्षा दुःखत्रयाभिघातकजिज्ञासाऽपि च संभवतीत्यपि सूच्यते। संसृतिहेतुं भेदाग्रहं तन्मूलं भ्रममपि निरस्यति। कथमिति। चिद्रूपस्यात्मनो भेदः स्वरूपं धर्मो वा। आद्ये चिद्रूपतयैवातिविशदो भातीति कथं भेदस्याग्रहः, तस्य तत्त्वात्। द्वितीये ज्ञातृत्वकर्तृत्वभोक्तृत्वादिधर्मस्त्वयैवात्मन्यपोढ इति न तादृशधर्माग्रहः प्रकृतिपुरुषसाधारणयोस्तु नित्यत्वविभुत्वयोरग्रहो न ते भेदाग्रहः, कार्यप्रकृतौ तयोरभावाद्वैधर्म्यरूपत्वमिति चेन्न। कार्यकारणप्रकृत्योस्तादात्म्याभ्युपगमात् कार्येऽपि तयोरङ्गीकर्तव्यत्वादन्यथा कथन्नासत्कार्य्यवादः। धर्मधर्मितादात्म्यवादे च धर्मिभाने धर्मोऽपि भायादेवेति कथञ्चिदपि न भेदाग्रहसंभवः। अत एवात्मा न मुह्येन्निष्क्रियत्वाच्च ज्ञानमेव क्रियेति भीत्या जहतः कथन्तद्विशेषाग्रहः अमुह्यन्नप्यन्यमोहं स्वस्मिन्नध्यवस्यतीति चेत्तदिदं शतमदित्सतश्शताद्र्धद्वयदानमिति। ननु विकृतिविशेषवदुपाधिसंनिधानमेवास्य मोहोऽस्त्वित्यत्राह। नित्यमिति। ईदृशोपाधिसन्निधानस्य कालान्तरेऽपि सुलभत्वात् कदा मुक्तिः। निरधिकारप्रकृतिदशायामिति चेन्न सर्वनित्यत्ववादिभिरधि-

कारस्यापि ध्वंसपरिग्रहायोगात्। अनभिव्यक्तिश्च तस्य दुर्वचा अभिव्यक्तेरपि निवृत्यसंभवादेवेति मोहनिवृत्यर्थो भेदग्रहश्च न स्यादित्याह। वेन्विति। प्रकृतिधर्माध्यासश्च प्रत्यूढ इति भावः। क्रियावती प्रकृतिरेव विच्छायापत्तिमती वेत्री भवतीति चेन्न छायापत्तेर्निरस्तत्वात् पुरुषस्य भेदग्रहाभावे च स्ववाक्यविरोधः यदात्य प्रकृतिं पश्यति पुरुषः दृष्टा मयेत्युपेक्षते एक इत्यादि भाक्तमिदं दृष्टत्वमिति चेत्तर्हि प्रागिव भेदाग्रह एव अस्तु वा प्रकृतिरनुपकारिणः पुंस उपकारिणी तदर्थं भेदग्राहिणी तथाऽप्यनया तस्य न किञ्चिदुपकर्तव्यमित्याह। कोवेति। संसारनिवृत्तिरिति चेत्तत्राह। प्रथममिति। पूर्वमित्यर्थः। माभूदुपकर्तव्यं का हानिरिति चेत्तस्यार्थमपार्थकञ्चरति पुरुषविमोक्षनिमित्तन्तथा प्रवृत्तिः प्रधानस्य। कृत्स्नं पुरुषस्यार्थे प्रकाश्य बुद्धौ प्रयच्छन्तीति स्वोक्तहानिः। रूपैस्सप्तभिरेवं बध्नात्यात्मानमात्मना प्रकृतिः। सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेणेत्यप्युक्तमिति चेत्तयाऽपि स्वोक्तहानिरेव पुरुषार्थं प्रतीत्यपि व्यर्थं वचः सृष्टिप्रलयबन्धमोक्षादयश्च त्वन्मते कथं पौर्वापर्य्यं भजेरन् सर्वनित्यत्ववादिनस्तत्तद्धेतुभूतगुणवैषम्यादेरपि क्रमभावित्वायोगादिति ॥ ७१ ॥

अत्र नित्यं वेति वाक्ये बद्धमुक्तव्यवस्था न स्यादित्युक्तम्।

अथ जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च। पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्य्ययाच्चैवेति पुरुषबहुत्वसाधकनयोक्ता च व्यवस्था न सिद्ध्यतीत्याह। व्यापिनीति ॥

**मू० व्यापिन्येकापि सांख्यैः प्रकृतिरभिहिता सर्वसाधारणी सा व्याप्ता जीवाश्च सर्वे प्रकृतिपरिणतिर्भोग एषामभीष्टः ॥ सर्वे सर्वस्य**

भोगाः स्युरिह तत इमे सन्निधानादिसाम्याद्
बुद्धीच्छाद्यञ्च सर्वं प्रकृतिगतमतो न व्यव-
स्था ततोऽपि ॥ ७२ ॥

एकत्वं सत्त्वरजस्तमोरूपद्रव्यसंघातात्मकतया शेषन्तु पूर्वोद्धं सूहन्ततः किमित्यत्राह । सर्वं । इति । इमे प्रत्यक्षानुमानागमैस्सर्वेषामात्मसाक्षिकं प्रतिनियततया प्रख्याता इत्यर्थः । व्यवस्थापकानुपपत्तिमात्रे हेतुमाह । सन्निधानेति । स्वरूपसन्निधिस्तावत् सर्वत्र सर्वेषां समः । तद्विशेषो दुर्वचः विशेषवतां सन्निधिरेव सन्निधिविशेष इति चेन्न औलूक्यपठितविशेषस्यानादरात्, अङ्गीकारे ऽपि तस्य भोगहेतुत्वाभावेन व्यवस्थापकत्वायोगाद्विहितनिषिद्धजनितादृष्टभेदैरेव हि भोगव्यवस्था अन्यथा निर्निमित्तभोगवादप्रसङ्गात् । अस्तु तर्हि तादृशनिमित्तोपश्लेषाद्व्यवस्था मैवं निष्क्रियस्य ज्ञानचिकीर्षाप्रयत्नानभ्युपगमेन कर्तृत्वाभावव्यवस्थापनात् । अकर्तुश्च न क्रियाजन्यादृष्टाश्रयत्वं तत्फलभोक्तृत्वं वा समस्ति ।

अस्वधर्मसमानीतैरन्यनिष्ठैरुपाधिभिः ।
यदि लिप्येत यः कश्चिन्न लिप्येरन् कथं परे ॥
प्रकृत्यंशगतैर्धर्म्मैर्य्यदि तादृग्व्यवस्थितिः ।
अजागलस्तनप्रायः पुमान् किमिति कल्प्यते ॥
तत्प्रायःपिण्डनीतिश्च नोदाहर्तुमिह क्षमा ।
तत्र संसर्गिसंसर्गभेदात् सर्वोपपत्तितः ॥
न सत् प्रच्यवते यस्य नासदात्मानमृच्छति ।
तस्य बन्धश्च मोक्षश्च कथं न सह तिष्ठतः ॥

तदेतत् सर्वमभिप्रेत्याह । बुद्धीति । प्रकृतिगतमित्यनेन बाह्यगतत्वं मूलप्रकृतौ नित्यस्थितत्वञ्चाभिसंहितम् ॥ ७२ ॥

इति सांख्यसंसारमोक्षादिनिरासः ॥

अथ मुख्यामुख्यप्रयोगानभिज्ञकल्पितां जीवन्मुक्तिं दूषयति । मुक्तिरिति ॥

**मू० मुक्तिः प्राणादेहादिभिरुपधिभिरत्यन्तविश्लेषरूपा जीवद्भावोऽपि तैस्संगम इति विहतेर्जीवतस्सा कथं स्यात् ॥ आपस्तम्बादयश्च श्रुतिगतिभिरिमां युक्तिभिश्च व्युदासुर्जीवन्मुक्तादिशब्दः क्वचिदुपचरितस्तत्समावस्थयैव ॥ ७३ ॥**

यदि कतिपयनिवृत्तिमात्रे मुक्तिशब्दः तदाऽतिप्रसङ्ग इति भावः । नित्यसिद्धस्य पुरुषस्य जीवनमपि ह्युपाधिविशेषसम्बन्ध इत्याह । जीवद्भाव । इति । फलितमाह । विहतेरिति । अत्र महर्षिवाक्यविरोधमप्याह । आपस्तम्बादय । इति । प्रागेवैतत् प्रदर्शितम् अमृत इह भवति । जीवन्मुक्ता भवन्तीत्यादेः का गतिरित्यत्राह । जीवन्मुक्तादिशब्द इति । श्रुत्यादिष्वप्यगत्यामुपचारः स्वीकृत इति भावः ॥ ७३ ॥

इति जीवन्मुक्तिभङ्गः ।

अद्वैतिनस्त्वाहुः श्रवणमननाभ्यां भेदसत्यत्वविभ्रमे निरस्तेऽप्यविद्याबाधकमद्वैतज्ञानं नोदेति ध्यानेन तु निरस्तसमस्तभेदवासनस्याद्वैतवाक्यादविद्यानिवर्तकधीसंभवः निवृत्ताविद्यस्यापि द्विचन्द्रदर्शनन्यायेन यावच्छरीरं बाधितानुवृत्तिः स्यात् तादृश्यां

दशायां ब्रह्मविज्जीवति च मुक्तश्चेत्यव्याहतिरिति एतदपि दूषयति । चन्द्रैकत्वेति ॥

मू० चन्द्रैकत्वादिबुद्ध्या न हि विलयमियाच्चतुरर्थादिदोषस्स्याद् बाधे पि द्विचन्द्रप्रभृतिषु हि ततो भ्रान्तिमात्रानुवृत्तिः ॥ विस्रम्भाभावतः स्यात् फलमपि न तु ते जाघटीति द्वयन्तद् ब्रह्मान्याशेषबाधादनतिबलतया बाध्यतो बाधकस्य ॥ ७४ ॥

तत्र तावल्लोके बाधितानुवृत्तिर्युज्यते बाधकज्ञानेन भ्रमानुवृत्तिहेतोर्दोषस्याबाधितत्वात् न हि चक्षुर्गतास्तिमिरादयः शुक्त्यादिगता वा दूरत्वसादृश्यादयो बाधकज्ञानेनापह्रियन्ते सत्यत्वात् तत्प्रकाश्याकारविरोधित्वाभावान्न बाध्यन्ते इति भावः । मात्रचाऽभिप्रेतं व्यनक्ति । विस्रम्भाभावत । इति । एवं बाधितानुवृत्तिर्बाधकधीसाफल्यञ्च त्वन्मते न सम्भवतीत्याह । न त्विति । प्रथमस्यासंभवं विवृणोति । । ब्रह्मान्येति । ब्रह्मव्यतिरिक्तं कृत्स्नं मिथ्येति हि बाधकप्रत्ययः । तत्र यदि महीयसी बलीयसी च मूलाऽविद्या विलीयेत कथन्तदा तूलकल्पस्तदेकदेशो विलयं न गच्छेद्यदि चास्य ज्ञानादन्यद् बाधकं तदाऽपसिद्धान्तः सत्यत्वप्रसङ्गश्च स्यात् । अविद्याबाधकेनाबाधितञ्च कथमन्यदपि ज्ञानं बाधेत । अहेतुकनिवृत्तिश्च प्रागेव दूषिता । अन्त्यशब्दचरमसंस्कारादीनामपि हेतुविशेषत एव निवृत्तेरत्र बाधकफलस्याप्यसंभवमाह । अनतिबलतयेति । अयं भावः श्रवणमननदशायामेव हि निषेध्यप्रपञ्चज्ञानं निषेधकज्ञानञ्चाविद्यामूलमित्यध्यवस्यति तथा सत्येकदोषप्रसूतत्वे परत्वस्याकिञ्चित्करत्वात् अन्यथा माध्यमिकविजयप्र-

सङ्गाच्च नोत्तरे बाधकत्वविस्रम्भः स्यादत एव न तदर्थध्याने प्रवर्तेत न च रागद्वेषादिभिरुज्झितः स्यादिति ।

इति परोक्तबाधितानुवृत्तिभङ्गः ।

अथ मुक्तिविषये वादिनाम्प्रलापान् संक्षेपेणोद्गृह्णन् प्रत्येकदोषःश्रोतृभिः स्वयमूह्य इति मत्वा साधारणं श्रुतिविरोधन्तावत् सूचयति । स्वातन्त्र्यमिति ॥

**मू० स्वातन्त्र्यं ब्रह्मणैक्यं पशुपतिसमतां वासनो-**
**च्छेदमात्रं धीसन्तानप्रणाशन्निजमतिसुख-**
**योर्नित्ययोस्सन्निकर्षं चित्तेन स्वात्मसौख्या-**
**नुभवमुपलवद्भावमूर्द्धप्रयाणं शून्याद्वैतञ्च**
**मुक्तौ श्रुतिरुपकृतये कल्पतां जल्पतां**
**वः ॥ ७५ ॥**

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु तत्त्वमुक्ताकलापे जीवसरो द्वितीयः ॥

सिद्धिवासनासितासितमनोभिरेतदिष्यते न च तद्युक्तम् । सर्वेषां सर्वनियन्तृत्वायोगात् ब्रह्मणैक्यन्तु चत्यन्तैकदेशिनस्सङ्गिरन्ते तच साम्यसाधर्म्यसहशब्दादिभिर्बाध्यः भेदसहं केवलं वा नित्यतादात्म्यमिच्छतां किमिदानीमैक्यं साध्यम् एकत्वनानात्वविभाग विभागशक्तिमत्त्वपक्षश्च न प्रामाणिकैः श्रद्धेयः कल्पादौ उत्पन्नाः कल्पान्ते ब्रह्मणैक्यं लभन्त इति पक्षे त्वकृताभ्यागमकृतविप्रणाशप्रसङ्गोऽप्यधिकः । पशुपतिसमतां तन्मतस्थाः प्राहुः तत्रावान्तरभेदेषु विशेषश्च द्रष्टव्यः प्रत्युक्तन्तन्मतं पत्युरसामञ्जस्यादिति । वासनोच्छेदमात्रन्तु

बौद्धैकदेशिनः तत्र सर्वज्ञानसन्तानैकतापत्तिः स्यान्न वेति विभागस्तत्र तत्प्रक्रियाप्रतिषेध एवोत्तरम् । धीसन्तानप्रणाशन्तु प्रज्ञाकरमतस्थाः तत्रान्तिमस्यार्थक्रियाविरहादसत्त्वे तत्पूर्वेषामपि तथेति शून्यवादावतारः । निजमतिसुखयोर्नित्ययोस्सन्निकर्षन्तु न्यायैकदेशिनः । इदञ्च मतं प्रागेवापास्तम् । चित्तेन स्वात्मसौख्यानुभवं भाट्टाः । उपलवद्भावन्त्वौलूक्याः । न्यायमीमांसैकदेशिनश्च । अनयोरपि साधकासंभव उक्तः । ऊर्द्ध्वप्रयाणन्तु जैनाः । तत्र भूम्यान्नित्यपतनवन्नित्योर्द्ध्वगमनमेके । अन्ये तु लोकाकाशमतिक्रम्य सकललोकमस्तकस्थायिन्यलोकाकाशे देहमेकमनेकं वा परिगृह्य वसन्त इति । इदन्तु तत्कथामात्रसिद्धं शून्याद्वैतन्तु माध्यमिकाः । तत्र सर्वतोमुखी व्याहतिरुक्ता तया च तत्प्रतिक्षेपसूत्रं सर्वथाऽनुपपत्तेश्चेति चकारोऽनुक्तान्मुक्तितारतम्यचिन्मात्रस्फुरणादिपक्षान् संगृह्णाति । एतत् सर्वं जल्पतां अनिरुपकृतये कल्पतामित्युपालम्भकाक्वा बाधकत्वपरं, सर्वभूतदयालुत्वस्मरणादिदं सानुग्रहवाक्यं वा आयुर्वेदविद्भिरप्यन्वाख्यायते आत्मद्रोहममर्य्यादं मूढमुन्मुक्तसत्पथम् । सुतरामनुकम्पेत नर*कार्चिष्मदिन्धनमिति । तदिह परात्परं पुरुषमुपैति दिव्यमित्युपनिषत्सिद्ध एव मोक्ष इतिभावः ॥ ७५ ॥

इति परमते विरुद्धानामर्थानां मोक्षविरुद्धत्वप्रतिपादनम् ।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्य्यस्य कृतिषु तत्त्वमुक्ताकलापव्याख्यायां सर्वार्थसिद्धौ जीवसरो द्वितीयः ।

---

* नरकदुःखाग्नेर्ज्वलदिन्धनमित्यर्थः ।

श्रीमते रामानुजाय नमः ।

श्रीमते वेदान्तमहागुरवे नमः ।

# अथ तृतीयो नायकसर आरभ्यते

तदेवं प्रत्यगर्थद्वये प्रथमोद्दिष्टो जीवश्चिन्तितः । अथेश्वरश्चिन्त्यते तत्र तावत् प्रमाणविशेषात् सिद्धिं प्रस्तौति । व्याघ्राद्यव्याकुलाभिरिति ॥

**मू० व्याघाद्यव्याकुलाभिः श्रुतिभिरधिगतो विश्वनेता स विश्वं क्रीडाकारुण्यतन्त्रः सृजति समतया जीवकर्मानुरूपम् ॥ रोषोऽपि प्रीतये स्यात् सुनिरसविषयस्तस्य निस्सीमशक्तेः स्वेच्छा*तस्सर्वसिद्धिं वदति भगवतोऽवाप्तकामत्ववादः ॥ १ ॥**

धर्मप्रवृत्तियुक्तसर्वदेशकालव्यापितयाऽन्यथाकरणशङ्कानर्हाभिरित्यर्थः । यद्वा अनुमानवद्व्याप्तिपक्षधर्मतानिरूपणजनितव्यभिचारसंभवादिरहिताभिरिति । श्रुतिभिरिति भ्रमादिमूलत्वासंभवख्यापनम् शब्दानां सिद्धे व्युत्पत्तिस्तत्र तात्पर्यञ्च साधयिष्यते। विश्वनेता विश्वेषां यथेष्टं विनियोक्ता स कथं श्रुतिभिरधिगतः कारणवाक्येषु सदादिशब्दैस्तद्धेदन्तर्ह्यव्याकृतमासीदित्यादिप्रदर्शितस्याव्यक्तापरपर्यायस्य प्रधानस्याभिधानादिति चेत् तन्न अव्यक्तस्य तदैक्षत सोऽकामयत इत्याद्युक्तस्वसंकल्पपूर्वकसृष्ट्याद्यसम्भवान्न खल्वीक्षणादिशब्दो भाक्तः मुख्ये बाधकाभावस्य साधकभूयस्त्वस्य च शारीरके स्थापितत्वात्

* स्वेच्छायामिति पा० ।

सदेव सोम्येदमग्र आसीदित्याद्यचेतनसामानाधिकरण्यात् कारणमचेतनमिति चेन्न सामानाधिकरण्यस्य स्थूलसूक्ष्मचिदचिद्वस्तुविशिष्टविषयताऽप्युपपत्तेः। सर्वेषां जगत् कर्तुश्शरीरतयाऽऽम्नातम्। अस्मान्मायी सृजते विश्वमेतदिति ईदृशी च सृष्टिस्सोऽभिध्याय शरीरात् स्वादित्युपबृंहिता। अधीयते चाथर्वणिकाः विकारजननीमज्ञामष्टरूपामजां ध्रुवां ध्यायते ऽध्यासिता तेन तन्यते प्रेर्यते पुनः सूयते पुरुषार्थञ्च तेनैवाधिष्ठिता जगत्। गौरनाद्यन्तवती सा जनित्री भूतभाविनीति। अगीयत चैतत् मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरमिति अतस्साक्षात्-संकल्पाश्रयत्वं व्यवधानेन तु विकाराधारत्वमिति सर्वाविरोधः। ननु सद्विद्यायां मृत्पिण्डलोहमणिनखनिकृन्तनदृष्टान्तैर्यथा पृथिव्यामोषधयस्सम्भवन्तीत्याथर्वणिकवाक्याच्चाचेतनमात्रोपादानत्वं जगतः प्रतीयत इति चेन्न मृत्पिण्डादिनिदर्शनानामेकविज्ञानेन सर्वविज्ञानस्यासंभवचोद्यपरिहारपरत्वाद्यथा पृथिव्यामिति वाक्यस्य त्वेकस्माद्विचित्रानन्तोत्पत्तिसंभवार्थत्वान्न तु चेतननैरपेक्ष्यमेतैस्सूच्यमन्यथा यथा सतः पुरुषात् केशलोमानीति चेतनसन्निधिसापेक्षोत्पत्तिनिदर्शनायोगात्। अस्तु तर्हि तद्वदयस्कान्तादिनयेन निर्व्यापारपुरुषसन्निधानात् प्रकृतेः प्रवृत्तिस्सर्वस्य च कार्यजातस्य जीवकर्महेतुकत्वात् अपहतपाप्मत्वसर्वज्ञत्वादीनाञ्च तस्मिन्नवस्थाभेदेनोपपत्तेरिति तन्न यथोर्णनाभिस्सृजते गृह्णते चेति प्रथमोक्तदृष्टान्तविघट्यात्।

प्रकृतिं पुरुषञ्चैव प्रविश्यात्मेच्छया हरिः।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययाविति॥

पुरुषस्यापि पराधिष्ठानेन जगत्सृष्ट्युपयोगोक्तेः। न च जीवस्य संवर्तसमयसंहृतकरणकलेबरस्य मुख्येक्षणादिसंभवः। मुक्तस्तर्हि प्रकृतिपुरुषयोरधिष्ठाता स्यात्। तस्य सत्यसंकल्पस्य स्वेच्छया पितृ-

लोकादिविचित्रकार्य्यप्रवृत्त्या ज्ञानान्मुख्येश्वरसिद्धेः जीवान्यत्ववशा-दाश्च सिद्धा*न्यत्वविषयाः स्युः । ममैवांशो जीवलोके जीवभूतस्स नातन इति जीवस्यावस्थारूपत्वोक्तेः मुक्तस्यैव हिरण्यगर्भादिदे-हाधिष्ठानेन सृष्टिस्थित्यादिहेतुत्वमिति सर्वपुराणादिसामरस्यमिति तदपि मन्दम् । एकस्यैवानाद्यन्तस्य सर्वमुक्तोपसृप्यत्वश्रवणात् मम साधर्म्यमागताः । स्वातन्त्र्यमतुलं प्राप्य तेनैव सह मोदत इत्याद्यु-पबृंहणविरोधाच्च । सायुज्यं प्रतिपन्ना ये तीव्रभक्तास्तपस्विनः । किङ्करा मम ते नित्यं भवन्ति निरुपद्रवाः ॥ इति च भगवदुक्तिः । मोक्षधर्मे च अनेन साम्यं यास्यामीति मुमुक्षोरभिसन्धिवचनम् । प्रपञ्चितञ्चैतत् परेण परधर्मेण भवत्येष समेत्य वै । इत्यादिभिरेकस्य च स†र्वप्रशा-स्तृत्वं निस्सीमत्वञ्च श्रुतिस्मृतिशतसिद्धम् । अपि च मुक्तास्सर्वे किं संभूय जगत् सृजन्ति उत प्रतिनियतकार्याः । नाद्यः स यदि पितृलोक-काम इत्यादिभिरव्यवस्थितेच्छादृष्टेः, सर्वेषामेकरूपेच्छाक्लृप्तौ गौरवात् तथा चाश्रवणात् । न द्वितीयः इदं सर्वमसृजतेत्यादिभिरेकस्य सर्व-कर्तृत्वोक्तेः समुदायैकत्वविवक्षा तु क्लिष्टा निर्मूला च श्रुत्या क्लृप्त्या वा तदयोगात् । अतः पतिं विश्वस्यात्मेश्वरमिति श्रुत एक एव सर्वकर्त्तेश्वरः ।

प्रयोजनादिविरहान्न कर्त्तेश इति ब्रुवन् ।
तस्य सिद्धावसिद्धौ च व्याघातादिपराहतः ॥

माभूदनुमानं प्रसङ्गस्तु स्यादिति चेत् न प्रयोजनशून्यत्वे कर्तृत्वं न स्यात् । अस्ति च कर्तृत्वमतः प्रयोजनवानिति विपर्य्ययवि-

* बद्धान्यत्वाविषया इति पा० ।

† प्रशासितृत्व-प्रशास्तृत्वशब्दयोः साधुभावं व्याकरणभावनाभावितान्तः करणाः स्वयं विभावयन्तु ।

श्रमात् । तथा सति नेश्वरस्य बाधः प्रयोजनसाधकानुग्रहार्थत्वात् । अथ प्रयोजनवत्त्वे कर्मवश्यत्वप्रसक्तिः तदभावात् प्रयोजनशून्य इति । एवमपि प्रयोजनशून्यविश्वकर्तृत्ववादिनामिष्टप्रसङ्गः प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत इति चेन्नहि प्रवृत्तिदर्शनात् प्रयोजनं किञ्चिदङ्गीकुरुष्व । स्वार्थं परार्थं वा प्रवर्तते इत्यत्रोभयार्थमित्याह । स इति । विषमसृष्ट्या साम्यं दुःखसृष्ट्या कारुण्यञ्च भज्येतेत्यत्राह । समतयेति । साम्यकारुण्यवत् यथा कर्म फलदायित्वमपि श्रुतिबलादङ्गीकार्यम् । अतस्तदविरोधेन गुणान्तरं व्यवस्थाप्यमिति भावः । दुःखनिवर्तनांशे कारुण्यसिद्धिः । ननु स्वसृष्टदुःखनिवर्तनेन कारुण्यलाभाद् वरं दुःखानुत्पादनमेव अतस्सुखैकतानं जनयेत् जगत् करुणया सृजन्निति चेत् किमयमीश्वरं प्रत्युपदेशः अन्यान् प्रति वा । नाद्यः तस्य परोपदेशाधीनप्रवृत्तित्वाभावात् । न द्वितीयः तत्तत्प्रमाणसिद्धवस्तुस्वभावानामपर्य्यनुयोज्यत्वात् । स्मर्य्यते च ।

शक्तयस्सर्वभूतानामचिन्त्यज्ञानगोचराः
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ।
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णतेति ॥

ननु दयावैकल्यपरिहारायाऽनुग्रहांश एव भगवतः कर्तृत्वमङ्गीक्रियतां, स्यादेतदेवं यदि वयमेव स्वेच्छया वस्तु व्यवस्थापयामः किन्तु प्रमाणदृष्ट्यैव अतो निग्रहांशे ऽपि निरङ्कुशं कर्तृत्वम् अथ स्यात् क्रोधो हि निग्रहहेतुः स च स्वाश्रयदुःखाविनाभूतः अरोषणो ह्यसौ देव इति प्रसिद्धस्य च कथं क्रोध इति चेन्न यतो द्वौ विबुधश्रेष्ठावित्यादिषु कण्ठोक्तेः । भाक्तोऽयं क्रोधशब्द इति चेतन्न प्रसादशब्दस्यापि तथात्वप्रसङ्गात् । अस्त्वेवमिति चेन्न भिक्षुपादप्रसारणन्यायेन निरीश्वरवादावतारादतः क्रोधावश्यम्भावादीश्वरस्यापि

दुःखावश्यम्भाव इत्यत्राह । रोषोऽपीति । क्रोधरोषादिशब्दार्थो हि परपीडेच्छामात्रं स तावन्न स्वहृदयतो दुःखं दुःखहेतुत्वमप्यस्याशक्यविषये तथा दृष्टः स्मर्य्यते हि ।

द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ इति ।

न सर्वशक्तेरीश्वरस्य चिकीर्षितमशक्यं किञ्चिदस्ति, अतोऽस्य न दुःखाय क्रोधः प्रत्युत निग्रहो विहारेण प्रीतये स्यादिति । ननु इह विहारः क्रीडा सा चारतिपरिहारार्था लोके प्रसिद्धार्था जगतः सृष्टारमधिकृत्य स एकाकी न रमेतेति श्रूयते अतः क्रीडायोगादरतियोगः तदभावाद्वा तदभावः स्यात् ,मैवं क्रीडा हि प्रीतिविशेषप्रभवः स्वयंप्रियो व्यापारः । अन्यथा तल्लक्षणमव्यापकं स्यादतोनारतिप्रसङ्गः । अरतिश्रुतिश्च तदानीमेकाकित्वमनिष्टमतोब्रह्मादिसृष्टावुद्युङ्क्तेत्यभिसन्धत्ते न पुरुषान्तरवदप्रवृत्तिजन्यदुःखभयात् प्रावर्त्ततेति । अशास्त्रवश्यस्य दुःखानर्हत्वात् तथाऽपि क्रीडार्थं सृजतो विश्वं विहन्येत कृतार्थतेत्यत्राह । स्वेच्छायामिति । अवाप्तसमस्तकामवादो हि न काम्यनिवृत्तिपरः अवाचकत्वात् सत्यकामत्वश्रुतिविरोधाच्च । नापि कामनानिषेधार्थः सोऽकामयत सत्यसंकल्प इत्यादिबाधादतो यथाकामं सर्वसिद्धिमभिसन्धत्ते इति ॥

सहकारिभिरारम्भे न स्वातन्त्र्यं विहन्यते ।
तत्सद्भावप्रवृत्त्योश्च स्वाधीनत्वव्यवस्थितेः ॥
कारकान्तरवैधुर्य्ये किमपेक्ष्य स्वतन्त्रता ।
शरीरमप्यधिष्ठेयं सहकार्येव कुर्वतः ॥
निरपेक्षस्वतन्त्रस्य सहकारिमतस्सदा ।
अप्रवृत्तिः प्रवृत्तिर्वा नित्यं स्यादिति चेन्न तत् ॥

तत्तदिच्छाविशेषेण तत्क्रमस्योपपत्तितः ।
इच्छासन्तत्यनादित्वान्न च मूलक्षयः क्वचित् ॥
गुणेतरविपर्य्यासमन्योन्यसहकारिताम् ।
विवक्षातः क्वचित् प्राहुः निस्समत्वान्निमित्तताम् ॥
प्राप्यः परमभोग्यत्वान्निषेव्यः स्वामिभावतः ।
शक्तिकारुण्यभूम्ना च शरण्यस्सीदतां प्रभुः ॥
बहिरन्तश्च तद्व्याप्तिस्तत्र यथोभयम्भवेद् ।
विभोरणोश्च न बहिर्नान्तस्तस्मान्न सा तयोः ॥
विभोर्नच्छिद्रमणुना नाणूनां विभुना च तत् ।
यथाप्रमाणं संबन्धमात्रमेव तयोर्भवेत् ॥
आकाशव्यतिभेदादेरसम्भाव्यस्य चोदना ।
आकाशादिकमिच्छद्भिरनिच्छद्भिश्च दुर्वचा ॥
न विभज्येत गच्छद्भिर्न विहन्ति गतिञ्च यत् ।
अस्पर्शत्वात्तथाभूतं विभु वाऽविभु वाऽस्ति नः ॥
विभ्वणुप्रतिषेधेन मध्यमञ्च निषेधता ।
सर्वासत्त्वञ्च दुस्साधं सदसत्त्वविकल्पतः ॥
समस्तमूर्तसंयोगस्सम्भवेद्यस्य तद्विभुः ।
तत्संभावोज्भितं द्रव्यं महत्त्वाणुत्वचिन्तितम् ॥
अणोरणीयान्महतोमहीयानित्यनुश्रवः ।
विश्वव्यापित्वतात्पर्य्यान्न मिथोबाधमृच्छति ॥
यदल्पपरिमाणेन पृथूनां ग्रसनं श्रुतम् ।
अचिन्त्यमिदमित्येके चिन्तनश्रमभीरवः ॥

इत्यागमिकेश्वरसिद्धिः ।

यद्यङ्कुराद्युत्पत्तौ कश्चित् कर्ता स कथन्न दृश्येत अतो यूपादित्यैक्यमिव प्रत्यक्षबाधितत्वान्न श्रुतिः प्रतिपादयतीत्याह । अप्रत्यक्ष । इति ॥

**मू० अप्रत्यक्षः परमात्मा तदिह न घटते धातुरध्यक्षबाधो योग्यादृष्टेरभावान्न खलु न भवता स्वीकृतः स्वेतरात्मा ॥ तस्मिन्देहानपेक्षे श्रुतिभिर*वसिते देहबाधान्न बाधो वेदेभ्यो नानुमानं न च पुरुषवचस्तिष्ठ†ते बद्धवैरम् ॥ २ ॥**

सर्वेषां स्वव्यतिरिक्तस्यात्मनः प्रत्यक्षत्वासिद्धेः ईश्वरेऽपि योग्यानुपलब्ध्यभावान्नाच प्रत्यक्षबाध इत्यर्थः । इह—दूर्वादिकार्योत्पत्तौ कर्तुरदृष्टस्य कथं सिद्धिरिति चार्वाकचोद्यं वारयति । न खल्विति । अयं भावः न तावद्बुद्धलौकायतिकैरद्वैतिभिरिवात्मभेदोऽनङ्गीकृतः । भिन्नाश्चात्मानः परस्परमप्रत्यक्षाः एवमीश्वरोऽपि स्वप्रत्यक्षोऽन्याप्रत्यक्षतया निषेद्धुं न शक्य इति । अनुमानादात्मान्तरस्वीकार इति चेत् आगमादीश्वरोऽपि स्वीकर्तव्यः प्रमाणत्वेन अद्वैयत्वाविशेषात् । परोक्षत्वेन न्यक्कारस्यानुमानेऽपि प्रसङ्गात् लोकायतिकानां तु यद्यपि भूतपरिणतिरूपः परमात्माऽपि प्रत्यक्षः तथाऽपि चैतन्यविशिष्टो न प्रत्यक्षेण गृह्यते यद्यन्यतस्तु कुतश्चित् तद्विशिष्टतया गृहीतः एवमीश्वरोऽपि किन्न गृह्येत बाधानर्हत्वात् शरीरतया परात्मग्रहणमिति चेत् आत्मनश्शरीरत्वे सिद्धे हि तथा

* अधिगते इति पा० ।

† प्रकाशनस्थेयाख्ययोश्चेति पाणिनीयेनात्मनेपदमिह साधु अर्थसङ्गतिश्चेद स्फुटैव ।

ग्रहणं तदन्यत्वसिद्धौ तु परशरीरेऽपि तथैव स्यादिति। अस्तु तर्हि व्यापकानुपलब्ध्या बाधः कर्तुर्हि शरीरं व्यापकम्। न चाङ्कुरोत्पत्तौ शरीरं दृश्यते अतीन्द्रियन्तच्च शरीरमस्त्विति चेन्न अङ्कुराद्युत्पादकतया तादृशशरीरानभ्युपगमात्। तदभ्युपगमेऽपि करणकलेवरसापेक्षस्य कर्तुः कथमीश्वरत्वं तत्राह। तस्मिन्निति। देहानपेक्ष इत्युपलक्षणम्। श्रूयते हि पश्यत्यचक्षुस्स शृणोत्यकर्णः अपाणिपादो जवनो ग्रहीतेति यदि सर्वशरीरत्वस्य श्रुतिस्मृतिसिद्धत्वात् सर्वेषु कार्य्येषु शरीरसापेक्षत्वमिति तथा सति न व्यापकाऽनुपलब्ध्या बाधः। सर्वकार्यानुगुणतत्तद्द्रव्यशरीरकतया शास्त्रैरुपलब्धेः। अथ विगीतमकर्तृकं कर्मवश्याजन्यत्वादित्याद्यनुमानैरीश्वरस्य बाध इत्युच्येत तत्राह। वेदेभ्य इति। अयं भावः आप्तशास्त्रस्यानुमानैर्विरोधे शास्त्रेणैव तेषां बाधोपपत्तिः अन्यथा स्वर्गनरकादीनामतीन्द्रियाणां कुतश्चिदनुमानाद् बाधप्रसङ्गात्। शक्यं हि विगीतं न दुःखासंभिन्नसुखसाधनं साधनत्वात् कृषिवद्वदिति। एवमन्यत्राप्यूह्यम्। किञ्चात्र नैयायिकादिसम्मतैरीश्वरानुमानैर्बाधः प्रतिरोधो वा दुर्वारः विपक्षे बाधकसदसद्भावो समपक्षौ। अस्तु तर्ह्यादिविदुषस्सिद्धस्य कपिलस्यागमेन ब्रह्मकारणवादभङ्ग इत्यत्राह। न चेति। नित्यनिर्दोषश्रुतिविरोधे हि स्मृतेरेव बाध्यत्वं विरोधाधिकरणसिद्धम् अन्यथा बौद्धाद्यागमैरपि किन्न कृत्स्नवेदबाधः। तेषां भ्रमादिमूलत्वसंभावनयेति चेत् सममेतत्। सर्वज्ञस्सांख्याचार्य्यः परमाप्त इति चेन्न समाधिजनितसार्वज्ञ्यानामपि कर्मभेदैः कदाचिद् भ्रमसंभवात्। न च सार्वज्ञ्यप्रमाणमस्ति। आहुश्च—

कपिलो यदि सर्वज्ञः कणादो नेति का प्रमा।
तावुभौ यदि सर्वज्ञौ मतभेदः कथं भवेत्॥ इति।

ननु ददृशुः कपिलन्तथ वासुदेवं सनातनमित्यादिभिः स्वतस्सर्वज्ञपरमकारुणिकावतारतया सिद्धस्य कथमनाप्तत्वशङ्केति चेन्न बुद्धेऽपि समत्वात्, आविष्टत्वमाचन्तवेति चेदत्रापि तथा विरोधाभावात् अन्यथा बुद्धादीन् प्रेरयत ईश्वरस्यासुरादिषु विप्रलिप्सा दुस्त्यजा मोहयिष्यामि मानवानित्यादि च स्वयमेवाह अतः पौरुषेयवाक्यमार्षमपि वेदाविरोधेन नेतव्यमिति । एवं निरीश्वरमीमांसका अपि निर्मूला निगमान्तविद्भिरनुग्राह्याः ।

य एवं स्यादसर्वज्ञः सर्वज्ञं न स बुद्ध्यते ।
इति ब्रुवाणाः सार्वज्ञ्यं लभन्तां तन्निषेधतः ॥

इतीश्वरस्य निर्बाधत्वम् ।

ननु श्रुतिभिरधिगत इत्याद्युक्तं स्वयंप्रकाशतया तत्सिद्धेः अतो वेद्यत्वमेव न यत्र तत्र कथं शब्दवेद्यत्वं यतो वाचो निवर्तन्ते अप्राप्य मनसा सह यद्वाचाऽनभ्युदितमित्यादिभिश्च तदुभयं निषिध्यत इत्यत्राह । वाच्यत्वमिति ॥

**मू० वाच्यत्वं वेद्यताञ्च स्वयमभिदधति ब्रह्मणोऽनुश्रवान्ता वाक्चित्तागोचरत्वश्रुतिरपि हि परिच्छित्त्यभावप्रयुक्ता । नो चेत् पूर्वापरोक्तिस्ववचनकलहस्सर्ववेदान्तबाधस्तत्सिद्धिर्हेतुभिश्चेत् प्रसजति विहतिर्धर्मिसाध्यादिशब्दैः ॥ ३ ॥**

अयं भावः स्वप्रकाशत्वं तावन्निगमवेद्यत्वेऽपि घटते दर्शनस्पर्शनाभ्यामेकार्थग्रहणवदुपपत्तेः । अथाऽनन्यवेद्यत्वमेव स्वयंप्रकाशत्वं तदा कथन्ततस्तत्साध्यत्वमवेद्यत्वग्राहकात्तत् साध्यत इति

चेत् किन्तद्ग्राहकं, न तावद् ब्रह्मस्वरूपं तस्य स्ववेद्यत्वावेद्यत्वयोरुदासीनत्वात् अन्यथा तव तत्संशयाद्यनुत्पत्तिप्रसङ्गात् । नापि वृत्तिज्ञानानि तद्ग्राहकत्वे तदभावे च तदवेद्यत्वसाधनायोगात् । एवं सान्निध्यप्यवेद्यत्वग्रहणायुक्तिभीत्या ग्राहकान्तरैरग्राह्यं गृह्यत इत्यविरोध इति चेत्तर्हि घटादेरप्यवेद्यत्वं सिद्धं स्वग्राहकेतराग्राह्यत्वात् । यैश्च वय्यन्तैरवाच्यत्वादिकं सिसाधयिषसि ते एव स्वयं वाच्यत्वादिकमभिदधति तस्योदिति नाम अथ नामधेयं सत्यमित्यादिषु तद्वाचकविधानात् । सर्वे वेदा यत्रैकं भवन्ति यो वेद निहितं गुहायां परमे व्योमन् यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तान्तत्त्वतो ब्रह्मविद्यामित्यादिषु वाक्यतोऽन्यतश्च वेद्यत्वप्रतिपादनादिति तर्हि यतो वाचो निवर्तन्त इत्यादेर्निर्विषयत्वप्रसङ्ग इत्यत्राह । वाङ्चितेति । सैषाऽऽनन्दस्य मीमांसा भवतीत्यादिना ब्रह्मानन्दस्यापरिच्छेद्यताप्रतिपादने हि वाक्यतात्पर्य्यं गम्यते अन्यथा ब्रह्मविदाप्नोति परम् आनन्दं ब्रह्मणो विद्वानित्यादिपूर्वापरविरोधः स्ववचनविरोधश्च स्यात् तदिदमाह । नोचेदिति । ब्रह्मप्रतिपादकभागश्च सर्वो निर्विषयः स्यादित्याह । सर्वेति । उपलक्षणमेतत् वेदोपबृंहणशतबाधस्य वेदैश्च सर्वैरहमेव वेद्यः । वचसां वाच्यमुत्तममित्यादिभि*श्च यतो वाचो निवर्तन्त इत्यादेरान्य†पर्य्ये ग्राह्यं मास्त्वत्र श्रुतिभिरवाच्यत्वादिसिद्धिः अनुमानतस्तु स्यादिति शङ्कते । तत्सिद्धिरिति । श्रुतिवदेव विरोधप्रसक्त्या परिहरति । प्रसजतीति । ब्रह्मावाच्यमवेद्यं वा एवन्त्वादिति हि प्रयोक्तव्यं तत्र ब्रह्मपदं साध्याधारं ब्रूते न वा आद्ये कथन्तद्विरुद्धसाध्य‡-

* आदिपदेन तस्य वाचकः प्रणवः । इत्यादिपातञ्जलसूत्रमभिप्रेयते ।

† अन्यपरत्वमित्यर्थः । तद्धितप्रयोगप्रिया दाक्षिणात्या इति प्राचामपि प्रवादः ।

‡ साध्यविधिरिति पा० ।

धीः । द्वितीये तु निरर्थ*कता निराश्रयसाध्योक्ति†श्च । एवं साध्यपद-मपि धर्मिपदसमानाधिकरणं न वा पूर्वत्र स्वस्य धर्मिणं ब्रूते स्वव्यापार-विरुद्धञ्च ब्रूत इति चित्रमेतत् उत्तरत्रानन्वयः । हेतुपदे च स्वपक्ष धर्मत्ववाचिनि प्रकृत्यंशो धर्मिविषयः अन्यथा कथं प्रत्ययांशस्य तन्नि-ष्ठभावाभिधायित्वम् अतो धर्म्युल्लेखनतद्भाववाचकं हेतुपदं न स्व-प्रवृत्तिविरुद्धं साध्यं साधयेत् । एवमनुग्राहकतर्केऽपि धर्मिप्रसञ्जक-प्रसञ्जनीयपदेषु विहतिरवधार्य्या । प्रतिप्रयोगोऽपि विगीतं वेद्यं वा-च्यञ्च भासमानत्वादिति नात्र द्वितीय‡स्य व्यत्ययाऽनैकान्त्यं जाति-वद्युक्तेरपि वाच्यत्वस्य वक्ष्यमाणत्वात् । युष्माकञ्च तत्र विमत्यभा-वात् । नन्वत्र धर्मिपदस्य धर्मिणि मुख्यवृत्तिरसिद्धा सिषाधयिषिताव-स्थत्वात् । उपचाराभ्युपगमे तु विवक्षितविरोधः स्यात् मैवं वृत्तिमा-त्रस्य स्वपरसम्मतत्वेन वाच्यत्वानिश्चयेऽपि प्रयोगोपपत्तेः ।

दुस्साधं क्वचिदप्येवमवाच्यत्वादि कस्यचित् ।
किं पुनस्सर्ववचसां प्रतिष्ठा यत्र तत्र तु ॥

इत्यवाच्यत्वावेद्यत्वादिपरिहारः ।

ननु लक्षणया धर्म्यादिपदानि प्रवर्त्तन्तां मुख्यवृत्तिविषय-त्वाभावस्तु साध्यत इति को विरोध इत्यत्राह । नित्यमिति ॥

**मू० नित्यं ब्रह्मादिशब्दा निरुपधिकसतो लक्ष-का इत्ययुक्तं मुख्यस्यान्यस्य हानेर्न्न च निपु-णधियो मुख्यमिच्छन्ति लक्ष्यम् ॥ मुख्यत्वे बाधकञ्च क्वचिदपि न वयं किञ्चिदालोक-**

---

* निग्रहस्थानमेतदिति भावः । † पक्षाप्रसिद्धिरित्यर्थः ।
‡ प्रतिप्रयोगस्य ।

**यामो मुख्यं लक्ष्यञ्च वाचः पदमिति न च तद्गोचरत्वातिपातः ॥ ४ ॥**

अयुक्तत्वं कुत इत्यत्राह । मुख्यस्येति । तीरं गङ्गापदलक्ष्यमितिवन्मुख्यवृत्त्यनर्हं किञ्चिन्न लाक्षणिकं दृष्टं सामान्यतो विशेषतो वा स्ववाचकपदान्तरनिर्दिष्टे हि पदान्तरस्य लक्षणा वाच्या अन्यथा ब्रह्मादिशब्दा लक्षणया प्रवर्तन्त इत्युक्ते परोक्तमाचोक्तिः स्यात् । व्यक्तिविशेषमनिष्कृष्य ब्रह्मशब्दवेद्ये लक्षणया प्रवर्तन्त इत्युक्तेऽपि प्रकृत्यादौ तथा प्रवृत्तेरुक्तदोषो दुर्वारः । अथ सर्वकारणत्वादिलक्षिते लक्षणावृत्तिर्ब्रह्मादिशब्दानां साध्येत तदा तत्र मुख्यवृत्तौ न काचिदनुपपत्तिः प्रवृत्तिनिमित्तपौष्कल्यादुपपत्तिरेव अन्यस्य तु मुख्यस्य हानिः तद्गुणलेशयोगात् प्रयोगोपपत्तेः, वाच्यवाचकपदमप्यवाच्यसम्बन्धिनि लक्षणया वर्तत इति वक्तव्यं न चान्यत् किञ्चिदवाच्यं दृष्टमिष्टं वा तदभ्युपगमेऽप्यत्र ब्रह्मणस्तत्सम्बन्धित्वं साधितं स्यात् न त्ववाच्यत्वं स्वयंप्रकाशत्वादिति हेतुपदन्त्वत्र स्वयं प्रकाशसंबन्धिपरं स्यात् तथा सत्यन्यत् स्वयं प्रकाशं ब्रह्म तु तत्सम्बन्धिमात्रमिति साधु सिद्धान्तस्समर्थितः । अथ काल्पनिकमुख्यवृत्तिविषयत्वं ब्रह्मणः स्यादित्यत्राह । न चेति । अयं भावः त्वन्मतेऽन्येषामपि हि मुख्यत्वं काल्पनिकमेव तथा सति यस्य पदस्य यन्मुख्यं तत्तस्य लक्ष्यमिति तवैवेदं शोभते लक्षणानिमित्तञ्चात्र नास्तीत्याह । मुख्यत्व इति । क्वचिदपि सद्ब्रह्मादिशब्देषु कुत्रचिदपीत्यर्थः । किञ्च श्रुतिविरोधपरिहाराय मुख्यवृत्तिबाध इष्टः लक्षणावृत्त्यङ्गीकारेऽपि तद्विरोधस्ते स्थित एवेत्याह । मुख्यमिति । विरोधशमनन्त्वस्मदिष्टमेव साधीय इति भावः ॥ ४ ॥

इति सद्ब्रह्मादिशब्दानां नित्यलक्षकत्वानुपपत्तिः ।

एवमीश्वरस्य वय्यन्तवेद्यत्वं शब्दवाच्यत्वञ्च स्थापितं, स तु हिरण्यगर्भादिष्वन्यतम इति शङ्कायां पुरुषनिर्णयादि साधितं विशेषनिधारणं संगृह्णाति । निस्साधारण्येति ॥

**मू० निस्साधारण्यनारायणपदविषये निश्चयं यान्त्यबाधे सद्ब्रह्माद्यास्समानप्रकरणपठिताश्शङ्कितान्यार्थशब्दाः । अन्तर्य्यन्ता च नारायण इति कथितः कारणश्चान्तरात्मेत्यस्मादप्यैककण्ठ्यं भवति निरुपधिस्तत्र शंभ्वादिशब्दः ॥ ५ ॥**

साधकबाधकाभ्यामप्राप्ते शास्त्रमर्थवदित्यभिप्रायेणोक्तम् । अबाध इति । सदादिशब्दानां कथं शङ्कितान्यार्थत्वम् इत्थं सच्छब्दस्तावत् सत्तायोगिषु सर्वेषु *प्रवृत्ततया न विशेषनिर्धारणार्हः ब्रह्मशब्द एकरूढोऽपि बहुषु रूढवत् प्रयुक्ततयाऽन्यार्थत्वशङ्कार्हः स्यात् आत्मशब्दश्च जीवपरादिसाधारणप्रयोगः एवं पुरुषप्राणाक्षरादिशब्दा अपि । नारायणशब्दस्तु न जात्युपाधिवचनो न चाऽनेकरूढः अतस्तेनान्येषां विष†यविशेषनिर्धारणं युक्तं तत्र च हेतुः समानप्रकरणपठितत्वमन्यथा पञ्चधिकरणादेरपि भङ्गः स्यात् प्रकारान्तरेणापि निर्द्धिधारयिषुराह । अन्तर्य्यन्तेति । यथा सुबालोपनि-

---

* सर्वजगत्सत्तावादिनां सिद्धान्तिनां स्वस्वरूपविश्रान्तस्यासद्वैलक्षण्यलक्षणसत्त्वस्य जगत्साधारण्यमिति भावः । शुक्तिरजतादेश्चानङ्गीकारपराहतत्वेन युक्त्यसहत्वेन च न तत्र व्यभिचारः शक्यः प्रदर्शयितुमिति तु चरमार्थः ।

† संज्ञायामेव पूर्वपदात्संज्ञायामग इति पाणिनीयेन णत्वानुशासनान्नारायणशब्दस्य च विष्णुसंज्ञारूपतायाः सुनिर्धारिततयाऽयमर्थः स्फुट इति भावः ।

यदि एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण इति एतेनान्तर्य्यामिब्राह्मणमप्येतद्विषयमिति निर्धारितम् । ततः किमित्यत्राह । कारणमिति । तत् सृष्ट्वा तदेवानुप्राविशदित्यादिना हि सर्वस्रष्टुस्सर्वान्तर्य्यामित्वमप्याम्नातम् । फलितमाह । अस्मादिति । नारायणशब्देन सदादिशब्दानामिति शेषः । ननु कारणन्तु ध्येय इत्यत्र शम्भुराकाशमध्य इति समाख्यान्तरं दृष्टं ततः किं कारणानुवादेन ध्येयत्वविधिपरं ह्येदं वाक्यं पुरोवादे च नारायणत्वनिर्णये तस्मिन्निरुपाधिकावयवार्थभूम्ना तद्वृत्तिरुपपन्ना, तथा च नारायणानुवाकेऽपि विश्वशम्भवमित्युच्यते शाश्वतं शिवमिति च । अतोऽन्यपरवाक्यस्थसमाख्यामात्रमकिञ्चित्करमिति भावः ॥ ५ ॥

शिवशब्दस्य न केवलं शुद्ध्या*दिपौष्कल्यमात्रान्नारायणे वृत्तिः किन्तु नामतयाऽपीत्याह । विष्णोरिति ॥

**मू० विष्णोरप्यस्त्वभिख्या शिव इति शुभता रूढिरत्रानुपाधिस्तस्माज्ज्ञेयः श्रुतोऽसौ शिव इह शिव एवेति वाक्यन्त्वनुक्तिः । उक्तन्नारायणाधिष्ठितमिति च तमोऽनेकबाधोऽन्यथा स्यात् ब्रह्मेशादेर्महत्यामुपनिषदि लयादुक्तमेवन्तु नात्र ॥ ६ ॥**

सर्वश्शर्वश्शिवः स्थाणुरिति हि तन्नामसहस्रे पठ्यते । ननु शुभतया रुद्रस्य रूढिः स्यादित्यत्राह । शुभेति । शुभतया जनिता ह्यस्य रूढिः मङ्गलानाञ्च मङ्गलमित्यादिभिर्निरुपाधिकशुभत्वशालिनि भगवत्येव युक्ता । अन्यत्र तु तद्गुणयोगाद्वृत्तिः स्यात्, प्रसिद्धिप्रकर्षस्तु

* शुभादि इति पा० ।

प्रणववेदादिषु ब्रह्मशब्दवत् प्रचुरप्रयोगमभावात् स्यात्, यत्र तु शिवस्य ध्येयत्वोक्तिस्तत्रापि शाश्वतशिवानुवादेन ध्यानं विधीयते नैतावता प्रसिद्धशिवस्य श्रुतिविरुद्धं कारणत्वं कल्पयितुं शक्यमित्याह । तस्मादिति । असौ—विष्णुरेव महापुरुषवेदनस्य हि मुक्तिहेतुत्वं प्रतिपाद्य नान्यः पन्था अयनाय विद्यत इति नियम्यते । ननु यदा तमस्तदिति वाक्ये शिव एव केवल इत्युच्यते अतः प्रसिद्धशिवः कारणमित्यत्राह । शिव एवेति । इदन्तावद्वाक्यं न कारणतमसः प्रतिपादकं यदेति कालविशेषप्राप्तानुवादात् । अव्यक्तमक्षरे लीयते अक्षरन्तमसि लीयत इति सुबालोपनिषद्वाक्येन तत्प्राप्तिः सा चोपनिषन्नारायणस्यैव कारणस्योपास्यत्वादिकं बहुधा वक्ति । अव्यक्ताक्षरक्रमेण तमःस्थाने यस्य मृत्युश्शरीरमिति पठ्यते अतो नारायणाधिष्ठिततमोवाक्यमिह पुरोवादः नासदासीन्नो सदासीत्तदानीन्तम आसीदित्यादिवाक्यमत्र पुरोवादः किन्न स्यादिति चेत्तथाऽपि तस्य सौबालवाक्यसमानार्थत्वं ग्राह्यम् अतः कारणतमोऽधिष्ठातृत्वेन प्रसिद्धो नारायण एवात्र शब्दान्तरपरामृ*ष्टः अनन्तरञ्च तदक्षरन्तत्सवितुर्वरेण्यमित्यादिना तत्प्रकारविशेषोपदेशः मानवे च आसीदिदन्तमोभूतमप्रज्ञातमित्यारभ्य तेन नारायणः स्मृत इत्यन्तेन स एव कारणतमोऽधिष्ठातेति स्पष्टमुक्तं, तदेतत्सर्वमभिप्रेत्याह । उक्तमिति । एवमनभ्युपगमे बहुश्रुतिस्मृतीतिहासादिबाधः स्यादित्याह । अनेकबाधेति । अपि च नारायणकारणत्वप्रतिपादिकायां महोपनिषदि न ब्रह्मा नेशानो नेमे द्यावापृथिवी इत्यादिना नारायणात् ब्रह्मेशानयोरुत्पत्त्यादिकं श्रुतं यदा तम इति वाक्ये न दिवा न रात्रिरित्येतावदुक्तम् एतेन हिरण्यगर्भस्समवर्त्तताग्रे इति वाक्यमपि

* प्रकरणान्तरपठितशब्दान्तरनिर्धारितस्वार्थविष्णुदेवताक इत्यर्थः ।

निरूढम् अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टाविति तद्विषयानुवाका-न्तरसमानार्थत्वसिद्धेश्चेति ॥ ६ ॥

ननु यस्मात् परं नापरमस्ति किञ्चिदित्यादिना तेनेदं पूर्णं पुरुषेण विश्वमित्यन्तेन पुरुषसूक्तादिप्रसिद्धं पुरुषमनूद्य ततो यदुत्त-रतरमित्यादिना तस्मात् परस्यैव वेदनममृतत्वादिसाधकमुक्तं स एव सर्वेश्वरः स्यादित्यत्राह । यः प्रोक्त इति ॥

**मू० यः प्रोक्तस्सर्वकर्तुः परमखिलतनोर्नापरं किञ्चिदस्तीत्यस्यैव स्यादनुक्त्योत्तरतरकथनं न त्वितोऽन्यस्य बाधात् । विश्वव्याप्तस्य तस्योचितमुपधिपरिच्छेदनादुन्मितत्वं स्व-स्यैव प्रापकत्वादशिथिलचिदचिद्धारणाच्चैष सेतुः ॥ ७ ॥**

सर्वकर्तृत्वं पुरुषसूक्तार्थप्रत्यभिज्ञया सिद्धम् । अखिलतनुत्वञ्च पुरुष एवेदं सर्वमितिवत् तेनेदं पूर्णं पुरुषेण सर्वमित्यनेन व्यञ्जितं यस्मात् अपरं किञ्चित् परन्नास्तीत्यन्वयः । तेन न तत्समश्चाभ्यधि-कश्च दृश्यत इत्ययमर्थोऽनूदितो भवति एवं समाभ्यधिकदरिद्रस्य विश्वव्यापिनोऽस्यैव सहेतुकमतो यदुत्तरतरमित्यनुवादः । अत एव तदरूपमनामयमित्यादिभिराकारान्तरोपदेशः प्रकार्य्यन्तरस्यासिद्ध-त्वाद्यदुत्तरतरमित्यनुवादायोगमभिप्रेत्याह । न त्वितोऽन्यस्येति । अयं भावः य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्तीति च तद्विषयमेव अन्यथा नान्यः पन्था अयनायेति पुंसूक्तवाक्येन व्याघातः । एकविषयत्व एव ह्युभयत्रान्यवेदनस्य मोक्षहेतुत्वाभा-वोक्तिस्संघटते । तत्र बहुधा विरोधमप्याह । बाधादिति । पूर्ववाक्ये

तावत् परान्तरनिषेधादुपक्रमनयेन तद्विरुद्धमुत्तरमुद्देतुं नालम्, उत्त-रत्र सर्वाननशिरोग्रीवत्वादिना सहस्रशीर्षा पुरुषः सहस्रशीर्षं देव-मित्याद्युक्तमिह प्रत्यभिज्ञानम् अतोऽपि न तदन्यस्योत्तरत्वोक्ति-संभवः । अन्यथा न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य इत्याद्युपबृंहणग-तबाधश्चैति । ननु पादोऽस्य विश्वा भूतानि एष त आत्माऽन्तर्हृद-येऽणीयान् व्रीहेर्वा यवाद्वेत्यादिभिः कारणपुरुषस्य परिच्छिन्नत्वो-क्त्या ततोऽन्यदपरिच्छिन्नं परतरमित्यत्राह । विश्वव्याप्तस्येति । अयं भावः यत्रयत्र परिच्छेदोक्तिः तत्रतत्र विश्वव्याप्तत्वमुक्तम् अतस्त-त्रातत्रोपासनार्थमौपाधिकः परिच्छेद उच्यत इति सेतुत्वश्रुत्या तेनोपायेन कूलान्तरवत् प्राप्यान्तरं गम्यत इति अत्राह । स्वस्यैवेति । अमृतस्यैव सेतुरित्यत्र तावदमृतशब्देन श्रुत्यन्तरवत् ब्रह्माभिधाने स्वप्राप्तेः स्वयमुपाय इत्येतावदेव सिद्धेत् मोक्षाभिधानेऽपि तदुपा-यतयाऽन्यः परतरो न कल्पयितुं शक्यते एष सेतुर्विधरण एषां लो-कानामसंभेदायेत्यत्र तु षिञ् बन्धने इति धातो स्वस्मिन्नाधारे विश्व-मसङ्कीर्णं बध्नातीति सेतुः । तथापि न ततः परसंभवः एतं सेतुं तीर्त्वे-त्यत्राप्यन्धस्सन्नन्धो भवतीत्यादिपूत्तरवाक्येषु पुरुषस्य प्राप्यान्तरान-भिधानात् तरतिः प्राप्तिवचनः एवं नेतं सेतुमित्यादावप्यन्यथा-सिद्धसेतुपदव्यपदेशो न प्राप्यान्तरकल्पनक्षम इति ॥ ७ ॥

अथ पुरुषसूक्तस्य विनियोगविशेषान्नारायणपरत्वे सिद्धेऽपि शब्दसाधारण्यात् सन्दिहानानां प्राकरणिकादनन्यथासिद्धलिङ्गाद्विशे-षनिश्चयमुत्पादयति । पुंसूक्तमिति ॥

**मू० पुंसूक्तं सर्ववेदप्रपठनमहितं यत्परत्वैक-**
**तानं तस्यैव श्रीपतित्वं विशदमभिदधे ह्यु-**
**त्तरत्रानुवाके । आम्नातश्चैष नारायण इति**

निखिलब्रह्मविद्यासु वेद्यस्तत्तद्विद्याप्रदेश-
श्रुतविविधपदप्रत्यभिज्ञप्तिपूर्वम् ॥ ८ ॥

सर्ववेदप्रपठनमहितमित्यनेन परतत्त्वविषयप्रमाणानामिथो-विरोधस्फूर्तौ बलाबलचिन्तायां परिग्रहातिशयादेतस्य प्राबल्यं सूच्यते उक्तञ्च तदभिप्रायेण महाभारते । इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते । इत्युत्तरानुवाकः पुरुषसूक्तोक्तमहापुरुषविषयः सन्निध्यनुगुण-शब्दार्थप्रत्यभिज्ञानात् तत्र । ह्रीश्च ते लक्ष्मीश्च पत्न्याविति । तैत्तिरीयास्समामनन्ति वाजसनेयिनस्तु । श्रीश्च ते लक्ष्मीश्च पत्न्याविति । न चात्रानुवाकद्वये धातृप्रजापतिशब्दाभ्यामन्यविषयत्वमाशङ्कनीयं विश्वकर्मत्वष्टृशब्दाभ्यामपि प्रसङ्गात् । अतः प्रसिद्धतमलिङ्गानुरोधेन धातृप्रभृतिशब्दानां योगत एव मुख्यत्वमेष्टव्यम् । किञ्च नारायणानुवाके सहस्रशीर्षं देवमित्यादिभिः पुरुषसूक्तप्रभृतिसर्वपरविद्यावेद्यं पुरुषं प्रत्यभिज्ञाप्य तस्य नारायणत्वं बहुशोऽभ्यस्तम् । अतो यत्रयत्र परब्रह्मपरतत्त्वपरज्योतिःपरमात्मादिशब्दा दृष्टास्तत्र सर्वत्र नारायण एव प्रतिपाद्य इति निश्चीयते । अतः परतत्त्वनिर्णयेऽयमेवानुवाकः पर्य्याप्त इत्यभिप्रायेणाह । आम्नात । इति ॥ ८ ॥

तथाऽपि त्वाष्ट्रवधादिलिङ्गैः प्रसिद्धेन्द्रादिविषयासु मोक्षार्थविद्यासु का गतिरित्यत्राह । रुद्रेन्द्रादिरिति ॥

मू० रुद्रेन्द्रादिश्च यत्र स्फुरति परतयाऽनन्यथा-
सिद्धलिङ्गैस्तत्तत्त्वैर्विशिष्टो हरिरखिल-
तनुस्तासु विद्यासु वेद्यः । पारम्यं त्वान्य-
पर्यान्न* न भवति न किरित्यादिभिः स्तोत्र-

* अन्यपरत्वादित्यर्थः ।

**वाक्यैरन्याकूतैर्नमस्यादिभिरपि न परः स्या-
दनैकान्त्यदुःस्थैः ॥ ९ ॥**

प्रसिद्धेन्द्रादिलिङ्गानां परमात्मलिङ्गानां चानन्यथासिद्धावुभयानुरोधेन सद्वारकमद्वारकञ्च तत्तद्विशिष्टब्रह्मोपासनपरत्वं स्वीकर्तव्यमित्यर्थः । कर्मविधिप्रकरणेषु न किरिन्द्र त्वदुत्तर इत्यादिभिः प्राकरणिकदेवताप्रशंसापरैः न तासां परत्वासिद्धिरित्याह । पारम्यमिति । न किरिन्द्र इत्यस्य सस्वादित्यादिषु त्वदुत्तरो नास्तीति याथार्थ्यसिद्धिः एक एव रुद्रो न द्वितीयोऽवतस्थे इति इदमपि तत्रत्यपशुविशेषद्वितीयानन्वयपरमिति मीमांसाभाष्यकारादिभिर्व्याख्यातम् । एवमीदृशवाक्यान्तराणि यथार्हं नेतव्यानि । यस्तु नमस्कारभूम्ना बहुप्रदेशबहुवाक्यप्रतिपन्नतया तत्तद्वरप्रदानविशेषैश्चान्यत्र क्वचित्तत्परत्वं शङ्कते तम्प्रत्याह । अन्याकूतैरिति । नमस्कारस्तावत् बाधभीत्या सान्त्वनाभिप्रायेण लोकवद्वेदेऽपि दृष्टः नमस्ते अस्तु मा मा हिंसीरिति, तद्भूयस्त्वञ्च भीतिभूयस्त्वादेरपि स्यात्, अस्ति च तेषुतेषु देवताविशेषेषु नमस्कारस्तद्भूमा बहुप्रदेशपाठादिकमतिशयितापदानञ्च । अतो नैतेरेकः परः स्यात् सर्वेषाञ्च सर्वस्मात् परत्वं व्याख्यानदुःस्थमिति भावः ॥ ९ ॥

नन्ववतारेषु भगवतश्चास्त्रार्थानुष्ठानं तत्फलभोगश्च श्रुतिस्मृतिषु बहुधा दृश्यते अतस्तस्यापि कर्मवश्यत्वं स्यादित्यत्राह । धर्माणामिति ॥

**मू० धर्माणां स्थापनार्थं स्वयमपि भजते शासिता शासनं स्वं स्वस्यापि प्रत्यवायानभिनयति न्टणां पापभीतिं विधित्सुः । शुद्धैस्स्वे-**

**च्छावतारैर्भजति सुलभतां तावतोऽत्पस्य-
नुक्तिः प्रोक्तो विष्णुश्शिखायामपि हि स
पुरुषः प्राप्ततारार्द्धमात्रः ॥ १० ॥**

तदेतत् न मे पार्थाऽस्ति कर्तव्यं, धर्मसंस्थापनार्थायेत्यादिभिस्सिद्धं यद्यपि जनितेन्द्रस्य जनितोत विष्णोरित्येतत्प्रीणनद्रव्यप्रशंसार्थं तथाऽप्यथर्वशिखायां ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते इति ब्रह्मादेरिव भगवतोऽपि प्रसूतिः श्रूयते अतस्तदतिरिक्तं कारणान्तरं ध्येयतयोच्यत इत्यत्राह । शुद्धेरिति । अकर्महेतुकेरप्राकृतेरित्यर्थः । सौलभ्यार्थावतारानुवादस्तस्यैव सर्वकारणस्य ध्येयत्वविधानार्थमिति भावः । तत्रेश प्रणवनिरूपणं स्वार्थस्थापनं व्यनक्ति । प्रोक्त । इति । प्रणवस्य तिसृणाम्मात्राणां वर्णभेदांस्त्रिमूर्तिदेवताकत्वञ्चोक्त्वा तस्य चतुर्थ्या अर्द्धमात्रायास्सर्ववर्णत्वं पुरुषदेवताकत्वञ्चोक्तं स च पुरुषस्सृष्टिस्थित्यन्तकरणीमित्यादावुक्त एव जनार्दनः तस्य हैतस्य पुरुषस्य रूपं यथा महारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोप इत्यादिना च पुरुषस्य सुसर्ववर्णविग्रहः श्रुतः भारतादौ च विश्वरूपादिविग्रहे व्यक्तमेतत् ।

भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधिश्च वर्त्तते वासुदेवे सनातने ॥

इति च स्मर्य्यते इति ॥ १० ॥

उक्तस्यार्थस्यानन्यथासिद्धस्थापकभूयस्त्वमाह । आद्यमिति ।

**मू० आद्यं रामायणं तत्स च निगमगणे पञ्चमः प-
ञ्चरात्रं सत्त्वोपज्ञं पुराणम्मनुमुखमुनिभिर्नि-
र्म्मितं धर्मशास्त्रम् । त्यक्ताऽन्यो मूलवेदः कठ-**

**परिपठिता वल्लिकास्तापनीयं सौबालब्रह्म-
बिन्दुप्रभृतिकमपि नस्तत्परं तत्परत्वे ॥ ११ ॥**

मानवादिभ्योऽपि पूर्वमित्यर्थः । तदिति परिग्रहप्रसिद्धिव्यञ्जनं, स चेत्यपि तथैव निगमगणे पञ्चमत्वं च वेदानध्यापयामास महाभारतपञ्चमानिति प्रदर्शितं, पञ्चरात्रस्य कार्त्स्न्येन प्रामाण्यं च महाभारतादिप्रसिद्धं शारीरके* स्थापितं च सत्त्वेन गुणेनादिभूतेन उपज्ञायमानत्वात् सत्त्वोपज्ञं वैष्णवादिपुराणं तेन मात्स्यादिषु विभक्तराजसतामसेभ्यः प्राबल्यं सूच्यते । मनुमुखमुनिभिरित्यनेन मन्वर्थविपरीता तु या स्मृतिस्सा न शस्यत इत्युक्तं मानवप्राबल्यं व्यज्यते त्यक्ताऽन्यः परित्यक्तदेवतान्तरतद्धर्मः मूलवेदः अनन्यधर्ममूलभूतो वेदभागः कठवल्लीषु—विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति प्राप्यविशेषदर्शनात्तासु पुरुषादिशब्दोक्त उपास्यो विष्णुरेवेति युक्तम् । तापनीयोपनिषत्तु नृसिंहरूपभगवदवतारैकविषया । सुबालोपनिषच्च नारायणस्यैव परत्वं बहुधा प्रपञ्चयति ब्रह्मबिन्दूपनिषदप्यहं वासुदेव इत्यहंग्रहोपासनदर्शनाद्वासुदेवविषया प्रभृतिशब्देन नारायणोपनिषदादिसङ्ग्रहः तत्परत्वे तत्परं भगवत्पारम्ये प्रधानाभिप्रायवदित्यर्थः ॥ ११ ॥

तथाभ्युच्चययुक्तिमाह । मध्यस्थोक्तिरिति ॥

**मू० मध्यस्थोक्तिर्विरुद्धे परमहिमपरे तत्र तत्रैतदुक्तिर्व्यक्तान्तास्ते विचित्राः स्वमतमभिहितं देवतातत्त्वविद्भिः । वैषम्यं शिल्पशास्त्रप्रभृतिषु विविधं वैदिकस्वीकृतत्वं प्रज्ञा-**

* वेदान्तद्वितीयाध्याये द्वितीयपादान्तस्याधिकरणसूत्रैः ।

**संस्कारभाजां भवति भगवति स्वप्रधाने प्रमाणम् ॥ १२ ॥**

राजसादिपुराणान्यतमेन सात्त्विकपुराणे विरुद्धे तदुभयमध्यस्थपुराणान्तरोक्तिसंवादान्निर्णयः स्यात् ब्रह्मरुद्राद्येकैकमहिमतत्परे च पुराणे बहुषु प्रदेशेषु भगवत्पारम्यं दृश्यते रक्त*रुष्टयोरपि दोषगुणोक्तौ प्रत्ययि†तत्वमाहुः। वृत्तान्ताः क्रान्त्वा निगीर्य पुनरुद्गिरतीत्या‡दिभिस्सङ्गृहीताः। देवतातत्त्वविद्भिः पराशरपा§राशर्य्यादिभिः विष्णोस्सका॥शादुद्भूतम्। आलोड्य सर्वशा¶स्त्राणि। सत्यं स**त्यं पुनस्सत्यमित्यादिभिः स्वमतमभिहितं शिल्पशास्त्रे च परावरभावेन वैषम्यं दृश्यते तच ह्युत्तमध्यमाधमविमानानि अधिकृत्योक्तम्।

स्यान्नागरद्राविलवेसरञ्च क्रमेण वै सत्त्वरजस्तमांसि।
महीसुरोर्वीपतिवैश्यकास्ते हरिर्विधाता हर आदिदेवः॥ इति।
विष्णोरन्ये राध्यमाना न साक्षाच्छ्रीकरास्सुराः।
सर्वदेवास्पदे विष्णौ धिष्ण्यं†† संपत्सुखावहम्॥

इति। प्रभृतिशब्देनायुर्वेदादिसङ्ग्रहः पठ्यते हरिं हरीतकीञ्चैवेत्यादि ज्योतिषे च धन्यन्तदेवल‡‡ग्नमित्यादि वैदिकस्वी-

* रक्तोऽनुकूलः। रुष्टः प्रतिकूल इत्यर्थः, रक्तेन दोषोक्तौ रुष्टेन गुणोक्तौ प्रामाण्याग्रधारणमित्यर्थः।

† विश्वसनीयत्वमित्यर्थः।

‡ आलुवन्दारुस्तवे संगृहीतोऽयं श्लोकः।

§ पाराशर्योव्यासः।

‖ जगत्तत्रैव च स्थितम्। स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः।

¶ विचार्य च पुनः पुनः। इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा।

** भुजमुत्थाप्य चोच्यते। न वेदान्तात्परं शास्त्रं न देवः केशवात्परः।

†† स्थानं धिष्ण्यं तच्च विष्णौ समर्पितं सर्वसुखसाधनमित्यर्थः।

‡‡ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव। विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि॥

कृतत्वं—वेदविदुत्तमैः सर्वैर्बोधायन—टङ्क—द्रमिड़--गुहदेव--कपर्दि—भारुचिप्रभृतिभिर्भगवत एव परत्वेनाङ्गीकृतत्वम् । एतत्सर्वं सदाचार्य्यशिक्षाजनितप्रज्ञासंस्कारभाजाम् आत्मेश्वरमिति स्वप्रधानतयाऽधीते भगवति प्रमाणं भवतीति ॥ १२ ॥

कश्चिदाह ईश्वरशब्दो निर्विशेषको महत्परमशब्दविशेषितश्च कस्यचित् समाख्या अन्यस्य त्वेवं विविधः पुरुषशब्दः अतस्तयोरवसीयते परावरभाव इति अचेन्द्रप्रतिबन्दिं सहोक्त्या सूचयन् प्रतिवक्ति । इन्द्रेशानादीति ।

**मू० इन्द्रेशानाद्यभिख्या स्वयमिह महदाद्युक्तिभिर्वा विशिष्टा तत्तत्पारम्यमानं न भवति बलवद्दुर्मिमानोपरोधात् । नो चेत्स्यान्नैक ईशो न भवति यदि वा कश्चिदन्योन्यबाधाल्लोकेऽप्यन्वर्थभावं न हि दधति महावृक्षमुख्यास्समाख्याः ॥ १३ ॥**

टी० अयं भावः इन्द्रशब्दो हि परमैश्वर्य्यवाचिधातुनिष्पन्नः केवलोऽपि परमेश्वरत्वं ब्रूते किमुत महत्पूर्वः तथाऽपि येन तत्र समाख्यासङ्कोचः स रुद्रेऽपि समः कार्य्यत्वकर्मवश्यत्वयोस्समचर्चत्वादिति । समाख्यातः श्रुत्यादेर्बलीयस्त्वं सूचयन् हेतुमाह । बलवदिति । एवमनभ्युपगमे बाधकप्रसङ्गद्वयमाह । नो चेदिति । समाख्यामात्रावलम्बने रुद्रेन्द्रादयो बहव ईश्वराः स्युः न वा कश्चित्तुल्ययोगक्षेमत्वादिति भावः । नाममात्रस्यासाधकत्वं सर्वसम्प्रतिपत्त्या दर्शयति । लोकेऽपीति । महौषधमहानद्यादिसंग्रहाय मुख्यशब्दः ॥ १३ ॥

इति भगवत्परत्वम् ।

अथात्र न्यायाभासमूलानि मतान्तराण्यनूद्य तेषां दत्तोत्तरत्वमाह । एकमिति ।

**मू० एकं त्रेधा विभक्तं त्रितयसमधिकं तत्त्वमीशास्त्रयस्ते विष्णवन्या मूर्त्तिरीष्टे प्रभवननियमः कल्पभेदात्त्रयाणाम् । इन्द्रादीनामिव स्यान्निजसुकृतवशादीश्वराणां प्रवाहः स्यादेकस्येश्वरत्वं प्रतिफलनवदित्यादि चैवं परास्तम् ॥ १४ ॥**

टी० एकस्यैव रामकृष्णादिवत् साक्षादवतारे त्रिधा विभाग इति पक्षः एकैव मूर्तिर्बिभिदे त्रिधा*ऽस्येत्यादिषु विवक्षितः, तत्र मूलभूतानां विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते । सृष्टिस्थित्यन्तकरणीमित्यादीनां तवान्तरात्मा मम चेत्यादिवाक्यान्तरानुविधानात् क्वचित्व्यवधानेन द्वयोरेकत्राव्यवधानेन च †प्रतीतिं व्याचख्युः त्रिमूर्त्युत्तीर्णं पुरुषान्तरं सच्चिन्मात्रं वा परतत्त्वमिति पक्षे स संज्ञां याति भगवानेक एव जनार्दनः इत्यादिभिरपि बाधः परस्परं भिन्ना ईश्वरास्त्रय इति पक्षश्चैकस्य सर्वप्रशासितृत्वादिभिर्निरस्तः विष्णोरन्य एव ब्रह्मा रुद्र आदित्यो वा कश्चिदीश्वर इति वादोऽपि विष्णोरेव सर्वेश्वरत्वस्थापनादपास्तः । त्रय ईश्वराः सत्त्वादिगुणोन्मेषभिदुरकल्पभेदाच्चक्रनेमिनीत्या निम्नोन्नतैश्वर्य्या इति कल्पनाऽपि निरस्ता प्रवाहेश्वरपक्षश्च न कर्मणा वर्द्धते नो कनीयान् स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानित्यादिश्रुतिभिरवधूतः । अस्त्वेक एवेश्वरः तस्येश्वरत्वं नित्यसत्त्वविशेष-

* त्रिधा सेति पा० । † वृत्तिमिति पा० ।

मन्दं चिकीर्षात्पत्यर्थमन्यत्र ज्ञानमपेक्ष्यते इह तु प्रयत्नस्य नित्यत्वेन चिकीर्षानिरपेक्ष्यात् किं ज्ञानेनेत्यपि सुवचत्वात् प्रयत्नस्य स्वतोविषयनियमाभावात्, ज्ञानविषयेण सविषयत्वं वक्तव्यमिति चेन्न उक्तोत्तरत्वात् न हि जीवनपूर्वकप्रयत्नस्य स्वाधारज्ञाननियतविषयत्वं, न च सर्वकार्यविषयस्य ईश्वरप्रयत्नस्य विषयनियामकापेक्षा, सत्याञ्च तस्यां सहकारिशक्तिभूतजीवादृष्टविशेषत एव प्रयत्नस्य नियतविषयत्वे संभवति सर्वविषयज्ञानेन प्रयत्नस्य विषयनियमकल्पनं बालिशकृत्यं विषयत्वमात्रञ्चात्र न यावद्धीविषयत्वं नित्यानामपि निष्प्रायत्वप्रसङ्गात् अशक्यविषयप्रयत्नवत्तया वा डिम्भादिकल्प ईश्वरः स्यात्। अथ स्वासाधारणधीविषयेणैव विषयवत्त्वं प्रयत्नस्येति मन्येत तदपि न धिय इव प्रयत्नस्यापि नियामकनिरपेक्षविषयत्वोपपत्तेः, अन्यथा कल्पनागौरवात् स्वतस्सविषयत्वे ज्ञानत्वप्रसङ्ग इति चेन्न धियोऽपि तन्नियामकत्वाभावात्, न च स्वाधारधीविषयस्य सर्वस्य प्रयत्नविषयत्वमिति मन्यसे सारूप्येऽप्यवान्तरलक्षणेन भेदोपपत्तेः अन्यथाऽतिप्रसङ्गात् । किञ्च सामग्रीनियतविषये निरीश्वरज्ञानेप्यप्रद्वेषहा ईश्वरज्ञानं त्वद्याप्यसिद्धं यदि च यथादृष्टप्रकारानादरेण बुद्धियत्नयोर्हेतुनिरपेक्षत्वं कल्प्यते तथा यत्नस्य बुद्धिनिरपेक्षविषयत्वमदृष्टमभिमन्यताम् अविशेषाल्लाघवाच्च एवं बुद्धिमात्रमवलम्ब्य प्रयत्नपरित्यागप्रतिबन्दिरपि प्रयोक्तव्या ईश्वर इच्छात्यन्ताभाववान् कर्मवश्यव्यतिरिक्तत्वात् घटादिवदित्यादिषु च तादृशप्रयोगः प्रतिप्रयोक्तव्यः धर्मिसिद्ध्यसिद्ध्यादिविकल्पेन दूषणजातञ्च दुस्तरमिति यथाश्रुतिबलादीश्वरज्ञानप्रयत्नस्थापनं शङ्कते। श्रुत्येति। तथा सोऽकामयतेत्यादिश्रुतिबलात्तदिच्छाऽपि स्वीक्रियतामित्याह । काम्यतामिति । नन्ववाप्तकामत्वपूर्णत्वादिश्रुतिस्मृतिशतैरिच्छाराहित्यमीश्वरस्य सि-

ध्येदित्यत्राह । निर्वाह्यमिति । तुश्शङ्कानिवृत्त्यर्थः, अयं भावः आप्तकामशब्दस्तावदीशितुरैश्वर्याभावमिच्छाराहित्यं वा न ब्रूते अत्र कामशब्दस्य काम्यपरत्वे कामनापरत्वे वा तत्प्राप्तिवचनतस्तन्निषेधायोगात् अत इष्टं सर्वमस्य प्राप्तमेव भवतीति तात्पर्यं ग्राह्यम् । अनित्यानां वा भोग्यानां प्राप्तत्वं प्रत्येतव्यम् । अत एव पूर्णशब्दोऽपि गुणादिवैकल्यमाह न तु श्रौतीं कामनां निरुन्ध्यात् विधिनिषेधविरोधशमनञ्च प्रागेव स्थापितं तदिह सर्वकार्यविषयाप्रतिहतानन्याधीनेच्छावानीश्वरः, जीवस्तु न तथा ईप्सितालाभजनितदुःखं च शेषत्वस्यैव नित्यमुक्तेश्वराणान्तदलाभ एव नास्तीति नियमः ।

इतीश्वरस्येच्छावत्त्वसिद्धिः ॥ ७८ ॥

अथ प्रस्तुतानुबन्धं पण्डितम्मन्यप्रलपितं प्रदर्शयति स्वीकृत्येति ।

**मू० स्वीकृत्येशानतत्त्वं कतिचन जहतस्तत्प्रसा-**
**दादिसाध्यं गङ्गाम्भःपञ्चगव्यप्रभृतिवदव-**
**दन् पावनत्वादि तस्य । तच्छ्रुत्यादिप्रतीपं**
**यदपि च फलदं दर्शितं निष्प्रसादं तच्चैतस्य**
**प्रसादादिति हि निजगदुर्दुर्मर्ममर्मज्ञचि-**
**त्ताः ॥ ७९ ॥**

टी० अयमत्राभिसन्धिः यद्यपि राजादिवत्कर्मवश्या देवताः कुप्यन्ति तृप्यन्ति च तथाऽपि न तथा परः पुरुषः निरपेक्षत्वात् सर्वभूतसुहृत्त्वाच्च अतस्तस्मिन् प्रसादकोपव्यपदेशो भाक्तो तदुपचारापचारयत्तित एवानुकूलप्रतिकूलसंपत्तिः पावनत्वं मोक्षप्रदत्वञ्च तस्य यस्य देवे परा भक्तिरित्यादिस्वारस्याद्गङ्गोदकादेरिव स्वविहितविषयानुष्ठा-

नसामर्थ्यात्स्यादिति इमं पक्षं पण्डितरूपपदव्या प्रतिक्षिपति । तदिति । धातुः प्रसादान्मत्प्रसादादित्यादिश्रुतिरिह प्रख्यापिता अत्र च मुख्ये संभवति न गौणत्वकल्पना न्याय्या प्रशस्तवस्तुविषयतत्तत्कर्मशक्त्यैव फलसिद्धिरित्युक्तं प्रतिवक्ति । यदपीति । निष्प्रसादमराध्य प्रसादनिरपेक्षमित्यर्थः । यद्वा क्रियादिस्वरूपं स्वयमचेतनत्वात् प्रसादवन्निष्प्रसादं फलप्रदमिति उपलक्षणमेतत् निष्कोपमित्यपि ग्राह्यम् एतस्य सर्वकर्त्तुः सर्वसुहृद इति भावः । धर्ममर्मच्चिता इत्यत्र धर्माणां कारणभूतं कार्य्यभूतञ्च भगवत्कटाक्षणं स्वपीडायां धर्मपीडनात् धर्ममर्मत्वेनोपचरितं धर्मस्य यथा परप्रसादः कारणमेवमधर्मस्यापि तत्कोपःकारणं श्रूयते हि तस्य साध्वसाधुकर्मकारयितृत्वं, स्मर्यते च बहुशः ।

इतीश्वरस्य साध्यप्रसादादिमत्त्वम् ॥ ७६ ॥

एवं सकलफलप्रदस्य सत्त्वस्थानां स्वयंफलभूतस्य च परस्य प्रतिपादनेन श्रोतॄणामनुनिष्पन्नं फलविशेषमाह । त्रय्यन्तेति ॥

**मू० त्रय्यन्तोदन्तचिन्ता सहचरणसहैरेभिरस्मिन् परस्मिन् भक्तिश्रद्धास्तिकत्वप्रभृतिगुणसिरावेदिभिस्तर्कयन्तैः । स्वार्थत्वस्वाश्रयत्वस्ववशयतनतादूहवर्गापसर्गाश्लिष्येता द्यपूर्वोत्तरसरयुगलस्यूततत्त्वस्थितीनाम् ॥ ८० ॥**

**इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु तत्त्वमुक्ताकलापे नायकसरस्तृतीयः ।**

टी० सर्वोत्तरयोस्सरयुगलयोः समर्थितानां चेतनाचेतनतत्त्वस्थितीनां यथासम्भवं स्वशेषत्वं स्वाधारत्वं स्वाधीनव्यापारत्व-

चेतनान्तरशेषत्वादिकञ्च विवेकशून्या मन्यन्ते सोऽयमुपद्रवः सर्वशेषिणस्सर्वाधारस्य सर्वनियन्तुरीश्वरस्य प्रतिष्ठापकैः प्रमाणानुग्राहकैः प्रतिक्षिप्येतेति ॥ ८० ॥

इतीश्वरनिरूपणप्रयोजनविशेषः ।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्य्यस्य कृतिषु सर्वार्थसिद्धौ तत्त्वमुक्ता-
कलापव्याख्यायां नायकसरस्तृतीयः ।



श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तगुरवे नमः ।

# अथ चतुर्थोबुद्धिसर आरभ्यते ।

---

आत्मतत्त्वं परमपरञ्च निरूपितम् । अथ यथोद्देशलक्षणं तद्धर्मभूता बुद्धिश्चिन्त्यते तत्र प्रथमं तत्स्वरूपस्य स्वतस्सिद्धिमाह । धीत्वादिति ।

मू० धीत्वाद्वेद्मीति सिद्धा स्वयमितरमतिर्बुद्धिलक्ष्मादिधीवद्यद्वा सर्वज्ञधीवन्न समतियुगवान्नापि चैकोनवेदी । नो चेद्धारा*मतौ सा प्रथममपि सती नावबुद्धेति धीः स्यात् स्वस्यां वृत्तेर्विरोधोऽप्युपशमनमियादुक्तदृष्टान्तनीत्या ॥ १ ॥

टी० इतरमतिः—विप्रतिपन्ना बुद्धिः, स्वयं सिद्धा—स्वगोचरज्ञाननिरपेक्षव्यवहारानुगुणेत्यर्थः, वेद्मीत्युपलम्भानुगुण्यप्रदर्शनमस्ति तावत्सर्वसिद्धान्तिनामिदमहं वेद्मीति कर्मकर्तृघटितक्रियाविशेषावभासः, सोऽयं पूर्वज्ञानगोचरेण मानसप्रत्यक्षेण प्राकट्यलिङ्गजनितेनानुमितिज्ञानेन वेति न केनचिद् दृष्टं तत्कल्पने तु गौरवं बुद्धिसामग्र्येवात्र वोद्धृविशेषणत्वेन भातीति चेत् तदेतदनुमेयवादिनं प्रत्युत्तरं स्यात् । न तु प्रत्यक्षरूपां बुद्धिसिद्धिमिच्छन्तं प्रति प्रत्यक्षाप्रत्यक्षसमुदायरूपा च सामग्री न प्रत्यक्षा स्यात् न च प्रत्यक्षं किञ्चिदन्यद्वेद्मीत्यत्र बोद्धृ-

---

* धारावाहिकबुद्धाविति तदर्थः ।

विशेषणतया भाति अतो यद्द्येवं प्रत्यक्षं तदेव ज्ञानमिति धर्मिसिद्धिः तथाऽप्यदृष्टचरं स्वयंप्रकाशत्वं न ज्ञाने कल्पयितुं शक्यं तत्रैव तत्सिद्धौ न कल्प्यत्वमन्यत्र तत्सिद्धिरसिद्धा एवन्तर्हि युष्मदिष्टमपि तत्र चान्यत्र चासिद्धं न तत्र कल्प्यमिति तत्र प्राकट्यानुमेयत्वस्यान्यथासिद्धावपि मानसप्रत्यक्षत्वं सुखादिषु स्वात्मनि च सिद्धमिति चेन्न सुखादीनि स्वात्मा च स्वयं भासन्ते मानसप्रत्यक्षतो वेति को विविङ्क्ते अस्तु वा तत्र तत्सिद्धिः अस्मदिष्टमपि क्वचित्त्वयेष्टव्यमित्यभिप्रायेणाह । बुद्धिलक्ष्मादिधीवदिति । बुद्धिलक्षणधीर्हि लक्ष्यभूतकृत्स्नबुद्ध्यभिव्याप्ता साधारणधर्मविषया तद्योगेन स्वात्मानमपि विषयीकरोति बुद्धिरस्तीति च बुद्धिः स्वात्मना विषयिणी बुद्धित्वसामान्योपष्टब्धसर्वव्यक्तिभासनात् । न च तदाऽनुव्यवसायाद्यवकाशः शब्दशब्दादिवत् सामान्यतः स्वात्मप्रकाशने तन्निरपेक्षत्वात् बुद्धिव्यतिरिक्तत्वादिबुद्धयोऽप्येवं ग्राह्याः । दृष्टान्तान्तरमाह । यद्वा सर्वज्ञधीवदिति । सामान्यतो विशेषतो वा सार्वज्ञ्यमिच्छतान्तद्बुद्धिः स्वात्मानमपि सर्वानुप्रविष्टं युगपदेव प्रकाशयति अन्यथाऽनवच्छिन्नसर्वशब्दप्रयोगादिकमपि न स्यादिति भावः । यत्तु केश्चिदुक्तं सर्वज्ञबुद्ध्यादीनां स्वसंवेद्यत्वमस्ति न तु स्वयं प्रकाशत्वमिति तत्तेभ्य एव रोचेत न ह्यत्र स्वात्मानं प्रति कर्मकारकत्वं स्वबोद्धृत्वं वा विधातुं युक्तं न च स्वगोचरधीनिरपेक्षव्यवहारानुगुण्यं निषेद्धुं शक्यम् । अथ केचिदूचुः स्वेतराशेषगोचरज्ञानद्वयवत्तया सर्वज्ञत्वमीश्वरस्येति तद् दूषयति । न समतियुगवानिति । अयं भावः ईदृशज्ञानद्वयवानीश्वर इत्यत्र न किञ्चित्प्रमाणं पश्यामः सर्वज्ञत्वान्यथाऽनुपपत्त्या तत्कल्पनञ्चायुक्तं स्वपरनिर्वाहकसमाधिनाऽपि तदुपपत्तेः । यच्च स्वयप्रकाशत्वमसहमानैरेकेनसर्वज्ञत्वमीश्वरस्योक्तं तत्प्रतिक्षिपति । नापि

चेति । यदि स्वज्ञानमीश्वरो न जानाति तदाऽन्येषां हेतूनां तद्बुद्धिविषयभूतानामेव हेतुत्वं तद्बुद्धेस्तु तदविषयभूताया इति विभागः स्यात् तथाऽन्येषां स्वगोचरधीविषयतयैव प्रकाशमानत्वं तस्यास्तु तन्निरपेक्षमिति किन्न विभज्येत अपि च स्वज्ञानमजानता सर्वज्ञेन स्वस्य तदाधारत्वमन्येषान्तदनाधारत्वं तद्विषयत्वतदन्यत्वादीनि स्वज्ञानविशेषणानि सर्वाणि दुर्ग्रहाणि स्युः । ततश्चानन्तज्ञानवत्त्वमिवानन्ताज्ञानवत्त्वमपि तस्य स्यात् तथा च जीवप्रायत्वे तैरेवालमायोजनहेतुश्च भग्नव्याप्तिकः अचेतनाऽपि हि तद्बुद्धिर्न चेतनायोजिता प्रवर्त्तते ततश्चादृष्टादेरपि तथात्वं लाघवादेष्टव्यम् अस्मिंश्च पक्षे सर्वज्ञत्वश्रुतिर्बाध्येत भवताञ्च सर्वज्ञपूर्वकत्वं साधयन्नवीतहेतुरलब्धविषयस्स्यादिति भावः । स्वयंप्रकाशत्वानभ्युपगमे अनिष्टप्रसङ्गमाह । नो चेदिति । क्वचित्क्वचिद्विषये कदाचिद्धारावाहिकबुद्धिस्सर्वसम्मता सा च पश्चादियन्तं कालमिमर्थमद्राक्षमिति परामृश्यते न चान्यतः पूर्वं तद्ग्रहसंभवः धाराविच्छेदप्रसङ्गात् अतोधारावाहिकधीः पूर्वमनवबुद्धेति भानाभावादवबुद्धेति परामर्शाच्चात्मनैव भातेति भाव्यते । ननु नाङ्गुल्यग्रं स्वात्मानं स्पृशति न कुठारः स्वात्मानं छिनत्ति न वह्निः स्वात्मानं दहति तद्वद्बुद्धेः स्वात्मनि वृत्तिविरोधात् न स्वयंप्रकाशत्वमित्यत्राह । स्वस्यामिति । उक्तदृष्टान्तनीत्या—स्वपरनिर्वाहकत्वगन्यायेनेति भावः । यथा चात्मा ग्राह्यश्च ग्राहकश्च यथा प्रत्यक्षविषयः स्वयं बोध्यः स्वगोचरबोधजनकश्च एवं यथादृष्टि सर्वमिति ॥ १ ॥

इति ज्ञानसत्तास्वयंप्रकाशत्वे ।

अपरे तु बुद्धेः स्वयंप्रकाशत्वं त्रातुकामा वेद्यत्वमपह्नुवते तान् प्रत्याह । स्मृत्वेति ।

मू० स्मृत्वा शब्दानुमानप्रभृतिभिरपि धीर्वेद्यते
स्वप्रकाशा धीत्वादेस्तामवेद्यामनुपधि वद-
तः स्वोक्तिबाधादयः स्युः। वेद्यत्वे सा जडा
स्यादिति च विहतिमद्व्याप्तिभङ्गश्च नो चे-
च्छिष्याचार्य्यादिसर्वव्यवहृतिविरहाज्जात-
मौनं जगत्स्यात् ॥ २ ॥

टी० अत्र स्वप्रकाशेति सम्मतांशानुवादो वेद्यत्वविरोधाभावज्ञापनार्थः, स्मृतिस्तावदिह देवदत्तमद्राक्षमित्यादिषु दृष्टा, शब्दश्च बुद्धिपर्यायस्सर्वो बुद्धिं बोधयति परबुद्धयश्च प्रवृत्त्यादिभिरनुमीयन्ते स्वबुद्धिं च भविष्यन्तीमनुमाय शृणोति प्रभृतिशब्देन योगिप्रत्यक्षादिग्रहणं पराभिमतप्रमान्तरानुधावनं वा अत्र परोक्तमवीतहेतुमपाकरोति। धीत्वादेरिति। आदिशब्देन स्वयंप्रकाशत्वधीशब्दवाच्यत्वादीनि गृह्यन्ते पुरुषभेदेन कालभेदेन च बुद्धेरवेद्यत्वमस्ति न तु सर्वैः सर्वदेत्यभिप्रायेणानुपधीत्युक्तम्, आदिशब्देन स्वबुद्धिबाधः स्वसिद्धान्तबाधश्च गृह्यते तत्र स्वोक्तिविरोधस्तावदनुभूतिः स्वयंप्रकाशा अनुभूतित्वादित्यादिभिर्धर्मिसाध्यहेत्वादिशब्दैरनुभूतिर्बोध्यते न वा आद्ये कथं न तद्बाधः। द्वितीये कथमयं प्रयोगस्त्वदिष्टं साधयेत् भ्रान्त्या बोध्यते न तु वस्तुत इति चेत्तर्हि भ्रान्तिसिद्धं बोध्यत्वमनुमतत्वान्न प्रतिषेध्यं वस्तुतस्तु बोध्यत्वं न क्वचित्सिद्धमिति तथापि न प्रतिषेध्यम्। अपि च तादृशस्य वेद्यत्वस्याभावस्सर्वत्र वस्सिद्ध इति सपक्षे सति पक्षमात्रवर्त्ती हेतुरयं कथम*नाभासः एवं परबुद्धीरहञ्जानामीति स्वबुद्धिबाधः ज्ञान-

* कथं नाभास इति पा०।

रूपब्रह्मबोधनार्थं शास्त्रमिति स्वसिद्धान्तबाधश्च अत्रानुग्राहकमपि परप्रयुक्तं दूषयति । वेद्यत्व इति । वेद्यत्वे जडत्वप्रसङ्ग इतिवदता प्रसञ्जकप्रसञ्जनीयधर्मान्वितत्वेन शब्दवेद्यत्वं स्वीकृतं न वा पूर्वत्र व्याघातः, उत्तरत्र वैयर्थ्यं किञ्चात्र प्रसज्यमानं जडत्वं वेद्यत्वमात्रं वा स्वगोचरवेदनेनैव सिद्धत्वं वा स्वयंप्रकाशत्वाभावो वा अविदिताव-स्थायोगो वा अन्यद्वा किञ्चिन्न प्रथमः इष्टप्रसङ्गरूपत्वात् प्रसञ्जकप्रस-ञ्जनीययोरविशेषाच्च । न द्वितीयः अवधारणव्यवच्छेद्यस्य स्वगोचर-वेदननिरपेक्षसिद्धित्वस्यानुमानादिना समर्थ्यमानस्य स्वाश्रयवेद्यत्व-सहदृष्ट्या प्रसङ्गस्य भग्नव्याप्तिकत्वात् अत एव न तृतीयः नामभेदमा-त्रत्वात् नापि चतुर्थः इष्टप्रसङ्गत्वात्, न हि बुद्धिर्विद्यमानावस्थायां स्वबुद्ध्यन्तरविदिता । अप्रकाशमानावस्थाप्रसङ्गे तात्पर्य्यमिति चेन्न सर्वेषां सर्वदा अप्रकाशमानत्वावस्थायास्त्वप्यन्तवादिनां घटादिष्वप्य-सम्मतत्वात् कदाचित्कस्यचिदप्रकाशमानत्वस्य बुद्धावप्यस्माभिरभ्यु-पगमात् । नापि पञ्चमः बुद्धौ दृष्टस्य कस्यचिद्विरुद्धधर्मे प्रसज्यमाने पूर्ववद्व्याप्तिभङ्गादेव । अतथाभूतस्य तु यथासंभवमिष्टप्रसङ्गत्वाद्व्याप्तिर-हितत्वाद्वेति । एवं परोक्तं प्रसङ्गं प्रतिक्षिप्य प्रतिप्रसङ्गमाह । नो चेदिति । न तावच्छिष्याचार्य्यौ परस्परबुद्ध्यनभिज्ञौ प्रश्नप्रतिवचनाद्यसंभवप्रस-ङ्गात्, एवं वादिप्रतिवादिप्रभृतयोऽपि मिथोबुद्धिमबुद्ध्यमाना न विवादा-दिकं कुर्य्युः तथा पामराणामपि संलापो न स्यादिति भावः । नन्वन्तः-करणवृत्तय एव परस्परं बुद्ध्यन्तां तत एव च सर्वो व्यवहारः स्यात्, न स्यात् बाह्यकरणव्यापाराणामिवान्तःकरणव्यापारस्यापि ज्ञानशब्दवा-च्यत्वाभावाद्, भावे वा तदतिरिक्तचैतन्यस्वीकारायोगात् एतेन वृत्त्य-वच्छिन्नचैतन्यम्मिथोवेद्यं न तु शुद्धमित्यादिकमपि दुराशामात्रम् ।

इति बुद्धेरवेद्यत्वभङ्गः ॥ २ ॥

कौमारिलास्तु कथयन्ति न स्वयंप्रकाशा नापि मानसप्रत्यक्षा बुद्धिः स्वफलेन तु विषयप्रकाशेनानुमीयत इति तदनुभाषते। बुद्धेरिति ॥

**मू० बुद्धेरर्थप्रकाशादनुमितिरिति चेत्तन्न साध्याविशेषात् साध्याद् भेदेऽपि बुद्धिर्यत उदयति ते स्यात्ततोऽर्थप्रकाशः। मध्ये बुद्धिः किमर्था ननु सममुभयोरप्यसाधारणत्वं तत्सा नित्यानुमेया यदि फलति तदा बुद्धितत्त्वापलापः ॥ ३ ॥**

टी० बुद्धिलक्ष्मादिधीवदित्यादिना पूर्वोदाहृतं स्वप्रकाशत्वं दुस्त्यजमित्यभिप्रायेण प्रतिक्षिपति। तन्नेति। अर्थप्रकाशो बुद्धिरिति हि बुद्धिं लक्षयन्ति अतः कथं तेनैव लिङ्गेन तस्यैवानुमानमिति व्यञ्जयन्नाह। साध्याविशेषादिति। नन्वर्थगतः प्रकाशो लिङ्गं पुरुषगतः प्रकाशोऽनुमेय इत्यत्राह। साध्यादिति। अयं भावः पुरुषगतप्रकाशकल्पनेऽपि यद्यर्थगतप्रकाशमन्तरेण व्यवहारो न जायेत तदा बुद्धिजनकत्वेनाभिमतैव सामग्री लाघवादर्थगतप्रकाशस्याव्यवहितहेतुरिति कल्प्यतामिति। फलितमाह। मध्य इति। किमर्था न तावदर्थव्यवहारार्था नाप्यर्थप्रकाशार्था द्वयोरन्यथासिद्धेरिति भावः। प्रतिपुरुषनियतविशेषमन्तरेण कथमर्थप्रकाशः प्रतिपुरुषनियतो भवेदित्यत्राह। ननु सममिति। बुद्धेरिव बुद्धिसामग्र्या अपि तत्तत्पुरुषासाधारणत्वं त्वयापि स्वीकृतम्। अन्यथा कथमेकपुरुषमात्रनिष्ठबुद्धिजनकत्वमिति भावः। उक्तं निगमनेन व्यनक्ति। तदिति।

इति बुद्धेर्नित्यानुमेयत्वभङ्गः ॥ ३ ॥

वैशेषिकादयो वदन्ति अनीश्वराणामात्मनामदृष्टजन्यमेव ज्ञानं न तु स्वाभाविकमिति तन्निरासार्थमाह । ज्ञातुरिति ।

मू० ज्ञातुर्ज्ञप्तेरलोपं कथयति निगमः स्मर्यते चैवमेषा तस्मादेकत्वसिद्धौ प्रसरणभिदया तद्भिदैकत्र पुंसि । योग्यादृष्टेरभावान्न च भवति सुषुप्त्याद्यवस्थासु बाधस्तत्तद्वस्तुप्रकाशक्षणविरतिवती न प्रकाशेत बुद्धिः ॥ ४ ॥

टी० श्रूयते हि न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इत्यादि नेयं श्रुतिरीश्वरधीविषया प्रकरणवैघट्यात् न धीप्रवाहाविच्छेदपरा सुषुप्त्यादौ तद्विच्छेदस्य युष्माभिरेवोक्तेः, न ज्ञानशक्तिनित्यत्वार्था मुख्ये सत्युपचारायोगात् नात्मस्वरूपनित्यत्वार्था व्यतिरेकोक्तेर्नचाच सामानाधिकरण्यमात्मस्वरूपनित्यत्वस्थापने विशेषणनैरपेक्ष्यात् । अथ स्वाभीष्टार्थस्य उपबृंहणसिद्धत्वमाह । स्मर्य्यत इति । एवं विपरिलोपरहितत्वेनेत्यर्थः । तदाह भगवान् शौनकः ।

यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥
यथोदपानकरणात् क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतस्संभवः कुतः ।
तथा हेयगुणध्वंसादवबोधादयो गुणाः ॥
प्रकाश्यन्ते न जाय*न्ते नित्या
एवात्मनो हि ते ॥ इति ।

* न जन्यते इति पा० ।

एवन्तर्हि स्मृत्यनुभवरूपेण प्रत्यक्षपरोक्षभेदेन दर्शनश्रवणादिभेदेन पूर्वापरादिभेदेन च सर्वलोकविदितो धीभेदः कथन्निर्वाह्य इत्यत्राह। तस्मादिति। अत्र प्रज्ञा च तस्मात् प्रसृता पुराणी। तेनास्य चरति प्रज्ञा। आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणेत्यादिकमप्यभग्नस्वारस्यमिति भावः। पुरुषभेदेन नियतधीभेदस्य प्रसरणभेदोपाधिकत्वाभावादेकत्र पुंसीति नियमितम्। ननु सुषुप्त्यादिषु स्वतोऽन्यतो वा बुद्धेरुपलम्भासंभवान्नित्यत्वश्रुतिरादित्यो यूप इत्यादिवत् अपहृतविषया तत्राह। योग्यादृष्टेरिति। योग्यानुपलब्धेरभावादनुपलब्धिमात्रस्य बाधकत्वाच्च न तदानीन्तद्बाधः यूपद्रव्यस्य तच्छक्तेर्वा तपनतादात्म्यविरुद्धधर्मसहितं तत्तद्धर्मिग्राहकेण विद्रावितमिति भावः। कथमत्र योग्यादृष्टेरभाव इत्यत्राह। तत्तदिति। प्रकाशयोग्यदशायामप्रकाशे हि योग्यानुपलब्धिः स्यात् विषयप्रकाशरहितावस्थायां न बुद्धिरनन्याधीनप्रकाशा अतस्सुषुप्त्यादौ तस्याः स्वतःप्रकाशयोग्यत्वाभावान्न योग्यानुपलब्धिरिति।

इति चेतनबुद्धेरपि स्वरूपनित्यत्वम् ॥ ४ ॥

यदाहुस्संविन्न नाना उत्पत्तिरहितत्वान्नाशरहितत्वाद्वा न यदेवं न तदेवं यथा घट इति, तदनुभाषते। उत्पत्त्यादेरिति।

**मू० उत्पत्त्यादेरभावान्न यदि दृशि भिदा नो दशाभेददृष्टेर्दृष्टादृष्टव्यवस्था क्वचिदिह पुरुषे बुद्ध्यवस्थाभिरेव। अज्ञानाद्यैरनैकान्तिकमपि न च धीरात्मभेदेऽप्यभिन्ना ज्ञत्वाज्ञत्वादिभेदः कथमिव घटते सर्वथैका मतिश्चेत् ॥ ५ ॥**

टी० अत्र परमार्थभेदो वा अपरमार्थभेदो वा प्रतिक्षिप्यते नाद्यः व्यतिरेकस्थाने घटादौ परमार्थभेदाभ्युपगमप्रसङ्गात् न द्वितीयः पक्षे परमार्थभेदाभ्युपगमप्रसङ्गात् तथा च किं नश्छिन्नं कल्पितभेदास्वीकारात् तन्निषेधे स्वमतविरोधश्च अत एव भेदमात्रप्रतिषेधप्रतिज्ञापि दुश्शकेत्यभिप्रायेण प्रतिवक्ति । नो इति । बाधितत्वमाह । दशाभेददृष्टेरिति । उत्पत्तिनाशाद्यवस्थास्संविदस्सर्वलौकिकपरीक्षकसंदृष्टाः तत्प्रतिषेधस्तैरेव प्रतिषिद्धोतेति भावः । हेत्वसिद्धिमपि दर्शयन् दशाभेदं दर्शयति । दृष्टादृष्टेति । यदि त्वेकैव बुद्धिस्सर्वदा सर्वविषया किञ्चिन्मया दृश्यते नान्यत् दृष्टञ्च तत्तदिदानीं न दृश्यत इत्यादिप्रतीताप्रतीतव्यवहाराः प्रलुप्येरन् चिन्ताबुभुत्साप्रश्नोत्तरादयश्च न भवेयुरित्याशयः पुरुषभेदनियतबुद्धिभेदस्यावस्थाभेदप्रयुक्तत्वाभावात् क्वचिदिह पुरुष इति विशेषितं, किञ्चोत्पत्तिरहितः प्रागभावः त्वदिष्टं देवदत्तादिभेदप्रतिनियतप्रमानिवर्तनादिभावरूपं घटाद्यज्ञानञ्च त्वयैव भेदवत्तयाऽङ्गीक्रियते नाशरहितश्च घटपटादिप्रध्वंसो नानाभूतः अतस्तैस्त्वदुक्तमनुमानमनैकान्तिकमित्याह । अज्ञानाद्यैरिति । उत्पत्तिनाशाभावद्वयसमुदायात्मा युगलहेतुर्नानैकान्तिक इति चेत्तदपि न अत्यन्ताभावैरुभयान्तरहितैः प्रतियोगिभेदेन नानाभूतैरनैकान्त्यस्य दुस्तरत्वात् तेषाञ्चोत्पत्त्यादिमत्त्वे प्रागूर्द्ध्वञ्च तदाश्रये प्रतियोगिप्रसङ्गेनात्यन्ताभावरूपताव्याघातात् न चैक एवात्यन्ताभावस्सर्वप्रतियोगिकः एकशून्यस्य सर्वशून्यत्वप्रसङ्गादिति भावः । प्रकारान्तरेणापि बाधं दर्शयति न चेति । अयं भावः अस्माभिस्तावन्नित्यस्सत्यश्चात्मभेदः स्वीकृतः युष्माभिरपि काल्पनिकः पक्षद्वये ऽपि चण्डपण्डितगुरुशिष्यादिव्यवस्था संविद्भेदमन्तरेण न संपद्येत ततश्च पुरुषभेदनियतबुद्धिभेदापह्नवस्वहृदयविसंवादीति हृदयमुक्तं विवृणोति ।

त्त्वेति । यत्तु मायाकृतविच्छेदप्रत्ययाच्छिच्छक्तिचित्रभित्तौ विचित्रप्रतिभास इति बाह्याद्वैतिभिरुक्तं तत्र यदि वैचित्र्यं सत्यम् ऐक्यव्याघातोऽपि दुर्वारः । अथ काल्पनिकं तर्ह्यन्ताद्वैतमततदेव सर्वोपप्लवप्रसङ्ग इति सर्वदा विषयाश्रयस्वगतभेदविधूननेत्यर्थः ।

इति पारमार्थिकसंविद्भेदः ॥ ५ ॥

अन्यदपि संविदो निर्भेदत्वे निर्धर्मकत्वे च परोक्तं वीतमवीतञ्चानुमानमनुभाषते । भेदादिरिति ।

**मू० भेदादिर्दृश्यभावान्न दृशि दृशितया दृश्यधर्म्मा न दृक् चेत् पूर्वस्मिन्नित्यताद्यैरनियतिविहती वाग्विरोधादि शेषे । बाधश्चात्र द्वयोस्स्यात् स्वमत इह च यैस्साध्यते ये च साध्या नैते मिथ्याविरोधान्न दृशिरपि मतेः स्यादभावोऽपि धर्मः ॥ ६ ॥**

टी० आदिशब्देन जन्मादयः स्मृतित्वानुभूतित्वादयश्च गृह्यन्ते, विगीता धर्मा न संविदि वर्तन्ते दृश्यत्वात् रूपादिवदित्येकः, अनुभूतिर्धर्मरहिता अनुभूतित्वादित्यपरः, तत्राद्यं दूषयति । पूर्वस्मिन्निति । अयं भावः अत्र नित्यत्वस्वयंप्रकाशत्वादयो धर्माः पक्षीक्रियन्ते न वा न चेत्तेषां दृश्यत्वेऽपि संविद्वृत्तित्वेन तैरनैकान्त्यं, पक्षीकारे तु सौगतादीन् प्रति त्वयैव साध्यन्ते बाध्यन्ते चेति सिद्धान्तव्याघात इति । द्वितीमपि दूषयति । वाग्विरोधादीति । आदिशब्देनासिद्धिबाधसिद्धान्तविरोधसङ्ग्रहः । अत्रापि विकल्पतः प्रत्युक्तिः संविदि निर्द्धर्मकत्वं साधयता प्रयुज्यमानौ हेतुसाध्यधर्मौ तत्रान्वीयेते न वा पूर्वत्र स्ववाग्विरोधः, उत्तरत्र हेत्वनन्वयात् स्वरूपासि-

द्धिः साध्यानन्वयाद्बाधः स्वसिद्धान्तसिद्धयोरुभयोरपि प्रतिषेधादपसिद्धान्त इति । किञ्च ।

सत्यधर्मनिषेधे स्याद् घटादेस्सत्यधर्मता ।
सत्येतरनिषेधे तु दुस्तरं सिद्धसाधनम् ॥

बाधश्चेति प्रत्यक्षानुमानागमैरिति शेषः । पुनरपि द्वयोस्साधारणं दूषणं वक्तुं विकल्पालम्बनमनुवदति । स्वमत इति । युष्मत्सिद्धान्ते साधकत्वेन साध्यत्वेन च ये धर्मास्सगृहीताः ते दृशिस्वरूपादतिरिक्ताः, अनतिरिक्ता वा अतिरिक्तत्वपक्षे सत्या मिथ्या वा सत्यत्वे च तत्पक्षीकारबहिष्कारयोरुक्तमेव । दूषणं मिथ्यात्वं निषेधति । नेत इति । मिथ्यात्वे तद्विपरीतानित्यत्वजडत्वादिप्रसक्तं सिद्धान्तविरोधश्चाभिप्रेत्याह । विरोधादिति । अनतिरेकपक्षं प्रतिक्षिपति । न दृशिरिति । विरुद्धधर्माध्यासेन व्यतिरेकमभिप्रयन्नाह । अविमतेरिति । न ह्युभयाविगीतमनुभूतिस्वरूपं विगीतञ्च नित्यत्वादिकं न मिथोऽतिरिच्येतेति भावः । नन्वस्मिन् सिद्धान्ते साधकास्साध्याश्च सर्वे धर्मास्तत्तद्विरोध्यभावमात्ररूपाः अतो हेत्वादिसिद्धिर्निर्धर्मकत्वाविरोधश्चेति तत्राह । स्यादिति । अयं भावः अभावरूपा अपि हेतुसाध्यविशेषाः पक्षीकारबहिष्कारसत्यत्वमिथ्यात्वधर्म्यन्वयानन्वयविकल्पैर्यथोचितदूषणग्रस्तैः प्रत्युक्ता एवेति ।

इति संवित्सधर्मकत्वम् ॥ ६ ॥

प्रागुक्तं बुद्धेर्द्रव्यत्वं प्राप्तावसरे प्रतिष्ठापयति । बुद्धिर्द्रव्यमिति ।

**मू० बुद्धिर्द्रव्यं विकारान्वयत इतरवद् बोद्धृवजडत्वात् संकोचादिप्रयोगा बहव इह तथा न ह्यमुख्या भवेयुः । एवं नास्या गुण-**

त्वं गलति न खलु तत्तन्त्रसङ्केतसिद्धं लोके धर्मस्वभावो गुण इति विदितं सापि सिद्धा प्रभावत् ॥ ७ ॥

टी० समवायिकारणं द्रव्यमिति वदद्भिः परैरपि विकाराश्रयो द्रव्यमित्यङ्गीकृतम् अतो विकारान्वयत इति द्रव्यलक्षणयोगकथनम्, इतरवत्संप्रतिपन्नद्रव्यवदित्यर्थः। यान्यन्यानि द्रव्याणि तानि सर्वाणि यत्किञ्चिद्विकारवन्ति अतो द्रव्याभिव्याप्तलक्षणयोगात् द्रव्यत्वं युक्तमिति। न चात्र साध्याविशेषः द्रव्यशब्दवाच्यत्वसाधने तदभावात् व्यवहारव्यवस्थापकत्वञ्च लक्षणस्य परैरप्यङ्गीकृतम्। अनुमानान्तरमाह। बोद्धृवदिति। पुरुषस्य स्वयंप्रकाशत्वं प्रागेव श्रुतिभिः प्रदर्शितं बुद्धेरप्येतत्सरादौ स्थापितं, तदयं प्रयोगः बुद्धिर्द्रव्यं स्वयंप्रकाशत्वात् आत्मवदिति प्रथमस्यासिद्धिपरिहारं द्वितीयस्यानुग्राहकञ्चाभिप्रेत्याह। सङ्कोचादिति। सङ्कोचप्रयोगस्तावदावृतं ज्ञानमित्यादिना दर्शितः, आदिशब्देन प्रसरणचरणसंग्रहः तत्प्रयोगश्च दर्शित एव, द्रव्यत्वे ह्येतेषामबाधान्मुख्यत्वमन्यथाश्रुतिस्मृतिसिद्धबहुप्रयोगमुख्यत्वभङ्गः स्यादिति भावः। ननु बुद्धेरात्मगुणत्वं बोद्धृसद्भावागमेषु सर्वेषु प्रसिद्धं गुणस्य चाद्रव्यत्वं रूपादिषु दृष्टं तदत्र धर्मिग्राहकबाधितमनुमानमित्यत्राह। एवमिति। द्रव्यत्वे सत्यपीत्यर्थः, कथन्तर्हि करचरणादिभिरद्रव्येष्वेव गुणत्वमवस्थापितमित्यत्राह। न खल्विति। अर्थशास्त्रेषु सन्धिविग्रहादयो गुणत्वेन गृह्यन्ते तद्वत्परोक्तमद्रव्यनियतं गुणत्वमिह न ब्रूम इत्यभिप्रायः। किन्निमित्तस्तर्हि बुद्धौ गुणशब्दप्रयोग इत्यत्राह। लोक इति। दासादयो हि गुणभूता उच्यन्ते दध्यादिद्रव्यविधानञ्च गुणविधिरिति व्यवह्रियते। ननु बुद्धिर्बोद्धृधर्मः, बोद्धा तु तदभिव्यक्तिस्थाने तत

एव तद्व्यञ्जकद्रव्यत्वाद्धर्मत्वारोपः । वस्तुतस्तु सा न द्रव्यं न च गुण इति परोक्तं बाधितुमाह । सापीति । प्रभावतो यथा प्रभा धर्मत्वेन प्रख्याता तथा बुद्धिरपि बोद्धृधर्मत्वेन प्रत्यक्षादिभिः प्रसिद्धा न चात्र प्रतिबिम्बादिवद् बाध इति भावः ॥ ७ ॥

उक्तार्थे सयूथ्यविमतिं वारयितुं तदुक्तप्रकारन्तावदाह । नित्येति ।

**मू० नित्या धीर्हेतुतोऽस्या भवति विषयितेत्येवमिच्छन्त एव द्रव्यत्वं नास्ति बुद्धेरिति गुणगणने तामपि स्थापयन्ति । अद्रव्यत्वं कथं स्याद्विकृतिमति विकृत्युज्झने पूर्ववत् स्यादित्थंभूताद्विकारान्न भवति यदि नातिप्रसङ्गप्रसङ्गात् ॥ ८ ॥**

टी० एवकारः स्वोक्तिविरोधसूचनार्थः गुणगणने द्रव्यत्वरहितगुणगणनायामित्यर्थः, एवकारद्योतितं विकल्पमुखेन व्यनक्ति । अद्रव्यत्वमिति । विकृतिमतीति सामान्याभिप्रायेण नपुंसकलिङ्गनिर्देशः, यदि नित्यायां बुद्धौ तत्तत्सामग्रीभिस्तत्तद्विषयित्वावस्थास्संभवन्ति तदा कथमसौ द्रव्यं न स्यात्, न हि विकृतिमति क्वचिदद्रव्यत्वम् अन्यत्र संमतम् । विकृत्यसंभवपक्षे दोषमाह । विकृत्युज्झन इति । पूर्ववत् स्यात्सामग्रीसंपातेऽपि प्रागिव न किञ्चिद्विषयीकुर्यादित्यर्थः । विषयित्वलक्षणविकारेण द्रव्यत्वं न स्यादिति शङ्कते । इत्थंभूतादिति । सामान्यलक्षणयोगे सत्यवान्तरवैषम्यात् कथमतज्जातीयत्वमित्यभिप्रायेण प्रत्याह । नेति । अन्यथा बाधक-

माह । अतिप्रसङ्गप्रङ्गादिति । द्रव्यत्वेन सम्मतेष्वपि तत्तद्द्रव्यान्तरवि-शेषोपादानेन द्रव्येतरत्वसाधनं प्रसज्येतेत्यर्थः तदिह सूक्ष्मवा क्यस्य भाष्यानुगुणमान्यपर्य्यमवसेयम् ।

इत्यद्रव्यानित्यबुद्धिवादभङ्गः ॥ ८ ॥

अथ पूर्वापरसरस्यूतसर्वप्रमेयप्रतिष्ठापकं प्रमाणं शोधयितुं सामान्यतः प्रमाणाप्रमाणविभागं तावदाह । सर्वमिति ।

**मू० सर्वं ज्ञानं न मानं परमतविजयान्नाप्रमाणं स्वबाधान्मानामानव्यवस्था तदियमनुमता लौकिकैर्यौक्तिकैश्च । तत्रामाने त्ववर्ज्यं स्वरसमिति वदन्त्यन्यथा भानमेके तत्साम-ग्र्यैव तादृग्व्यवहृतिमपरे लाघवादाश्र-यन्ति ॥ ९ ॥**

टी० अयमर्थः न तावत्सर्वं ज्ञानं प्रमितिः प्रतिपक्षविजया-भ्युपगमप्रसङ्गात्, यच ख्यातिरेव नास्ति तच कथं विजयप्रसङ्ग इति चेन्न स्वहृदयविसंवादात् परीक्षीनां स्वोक्तिविरुद्धबुद्धिजनकत्वाभावे विवादविलयप्रसङ्गः । अन्यथा स्वोक्तानुभाषणवर्णक्रमपाठादावपि विवादः प्रसज्येत अत एव प्रतिपक्षतो जातापि ख्यातिः प्रमितिरिति न वक्तव्यं स्वोक्तमात्रविषयत्वेऽनुक्तमात्रविषयत्वे स्वोक्तानुक्तमात्रवि-षयत्वे च विवादायोगात् विरुद्धविषयत्वे त्वन्यतरबुद्धेरप्रमात्वम-परिहार्य्यमिति सर्वबुद्धीनामप्रमात्वमपि प्रतिषेधति । नाप्रमाण-मिति । स्ववचनस्वसिद्धान्तसर्वलोकधीविरोधमभिप्रेत्याह । स्वबा-धादिति । स्वोक्तं लौकिकपरीक्षकसर्वप्रसम्मतमित्याह । मानामा-

नेति । एवमन्यथाख्यातिपक्षाभिप्रायेण दर्शिते विभागे भाष्योक्तं पक्षान्तरमपि प्रतिष्ठापयिषुरुक्तस्य प्रतीतिस्वारस्यरसिकैरेकदेशिभिस्सं- गृहीतत्वमाह । तच्चेति । अमाने—संशयविपर्य्यात्मकबुद्धावित्यर्थः अवर्ज्यं ख्यात्यन्तरवादिभिरपि दूरापवर्ग्येणाऽपि दुरत्ययं, स्वत एव रसोयस्य तत्स्वरसम् अस्ति हि शुक्तिशकलमेव मया रजततया गृहीतमित्यादिप्रतीतिस्वारस्यं योऽन्यथा सन्तमात्मानमन्यथा प्रतिप- द्यते । अयथावत् प्रजानाति बुद्धिस्सा पार्थ राजसी । अनात्मन्यात्मबु- द्धिर्य्या अस्वे स्वमिति या मतिरित्याद्याप्तवाक्यस्वारस्यञ्च अतो भ्रान्ता- वन्यथा भानं प्रथममुपन्यस्तं भाष्यकाराभिप्रेतमित्येके वदन्ति । केषा- ञ्चित्पक्षान्तरपरिग्रहं सहेतुकमाह । तत्सामग्र्येति । व्यवहारविशेषा- न्ययानुपपत्त्या ह्यन्यथाभानमवस्थाप्यते तत्रान्यथाख्यातिसाध्यत- याऽभिमता व्यवहृतिस्तज्जनकतयाऽभिमतसामग्र्यैव संपाद्यताम् अदृष्टचरान्यथाख्यातिसंग्रहस्तन्मध्ये मुधेत्यपरे समाश्रयन्ति पक्षद्व- योपन्यासप्रपञ्चस्तु न्याय*कुलिशे निपुणमवधारणीयः ॥ ६ ॥

इति प्रमाणाप्रमाणव्यवस्था ।

उक्तपक्षद्वये द्वितीयस्य सांप्रदायिकत्वमाह । नाथैरिति ।

**मू० नाथैरुक्ता यथार्था विमतमतिरपि न्यायतत्त्वे**
**तदेतद्भाष्येऽनूक्तन्तदत्र व्यवहृतिरुभयी बा-**
**धिताऽबाधिताख्या शुक्तौ रूप्यं प्रभाम्भः ।**
**श्रुतिनयवशतः स्वाप्नमप्यस्तु सत्यं योग्या-**
**योग्यादिभेदाग्रह इह चरमां गाहते**
**संप्रतिष्ठाम् ॥ १० ॥**

*न्यायकुलिशनामा ग्रन्थ एतद्देशे ऽनायासेन न मिलति ।

टी० विमतमतिः शुक्तिरजतादिबुद्धिस्सा न्यायतत्त्वे भ्रान्त्यधिकरणसिद्धान्ते षष्ठी* चेयं ख्यातिर्यथार्थख्यातिरित्यादिना निर्द्धार्य्यते अयं च पक्षः, अथवा यथार्थं सर्वविज्ञानमिति वेदविदां मतमिति भाष्यकारैरन्वभाषि कथमस्मिन् पक्षे प्रमाणाप्रमाणव्यवस्थादिकमित्यत्राह । व्यवहृतिरिति । बाध्यव्यवहारहेतुर्ज्ञानमप्रमाणं भ्रान्तिरित्युच्यते तत्र मणिप्रभादिदर्शने मण्याद्यर्थप्रवृत्तौ तत्संवादो ऽन्यायत्तः अबाध्यव्यवहारहेतुर्ज्ञानं प्रमाणमभ्रान्तिरिति व्यवह्रियते तत्र कदाचित्पथिवुद्बुदादौ प्रवृत्तिविसंवादो विषयापक्रमादेरिति भावः । यत्तु शुक्तौ सादृश्यात् रजतसद्भावो मरीचिकायां पञ्चीकरणानुरोधेन तोयसद्भावः स्वप्ने च रथादेस्सृष्टिविशेषतया सत्यत्वं भाषितं तत्र विषयसत्यत्वेऽप्यप्रमाणव्यवहारनिदानमाचिख्यासुर्यथाभाषितमनुभाषते । शुक्ताविति । प्रभाम्भस्सूर्य्यप्रभायां दृश्यमानं तोयमित्यर्थः स्वाप्नं स्वप्नसिद्धं रथादि, यद्यप्यत्रातस्मिन् तद्बुद्धिर्नास्ति अतज्जातीयभेदाग्रहश्च न प्रवर्त्तकः तथाऽपि तज्जातीये स्वाभीष्टयोग्यायोग्यादिभेदाग्रहात् प्रवृत्ता व्यवहृतिर्विसंवदेतेत्यप्रमाणव्यवहारोऽत्यर्थं घटेतेत्यभिप्रायेणाह । योग्येति । शुक्तिलीनं रजतं मरीचिकास्थं जलं चाङ्गुलीयकसेकाद्यनर्हम् अनस्तदनर्हे तदर्हभेदाग्रहात् प्रवृत्तिर्वितथा भवति एवं स्वाप्नेष्वपि धनपित्रादिषु जागरदृष्टसरूपेषु तत्तद्भेदाग्रहात् प्रवृत्ता दुराशा मोघा भवति आदिशब्देन नष्टानष्टादिसंग्रहः, चरमां संप्रतिष्ठां व्यवहारविसंवादनिदानतामित्यर्थः ॥ १० ॥

नन्वन्वयव्यतिरेकाभ्यां कारणविशेषस्सर्वत्र व्यवस्थाप्यः तत्र

* आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा । तथाऽनिर्वचनख्यातिरित्येतत्ख्यातिपञ्चकमिति ग्रन्थान्तरेषु सुप्रसिद्धं पञ्चकं ख्यातीनाम् ।

चेतनप्रवृत्तिरिच्छातः सा चानुकूलताज्ञानात् न चात्र ज्ञानेच्छाप्रवृत्तीनां भिन्नविषयत्वं युक्तं, यद्यपि शुष्के पतिष्यामीति कर्दमे पतति तथाऽप्यवशागतप्रवृत्तिन्याय इह नास्थेयः इदं रजतमित्यत्रैवेदमर्थभूतभास्वरद्रव्यजिघृक्षयैव प्रवृत्तेः । न च रजतभेदाग्रहात् अरजते प्रवृत्तिः अग्रहस्य क्वचिदपि प्रवृत्तिहेतुत्वादृष्टेरिति मत्वा भेदाग्रहात् प्रवृत्तावतिप्रसङ्गमाह । भेदाज्ञानादिति ।

**मू० भेदाज्ञानात् प्रवृत्तौ न कथमुपरतिः स्याद्भेदाप्रतीत्या रूप्यारूप्यभ्रमादाविव यदि न यतोऽनिष्टभेदाग्रहात् सा । आधारे भेदवर्जं स्फुरति सदृशवस्त्वन्तरे चोपपन्ना तत्तद्वस्तूचितैव व्यवहृतिनियतिस्त्वन्मते बुद्धिवन्नः ॥ ११ ॥**

टी० यदि निवृत्तिकारणभूतभेदग्रहाभावात् प्रवर्तते तथा प्रवृत्तिकारणभूताभेदग्रहाभावात् किं न निवर्तेत यथा भेदग्रहस्य निवृत्तिकारणत्वं नेदं रजतमित्यत्र दृश्यते एवमभेदग्रहस्य प्रवृत्तिकारणत्वम् इदं रजतमित्यभ्रान्तबुद्धौ दृष्टमेव ततश्चाभेदग्रहरूपप्रवृत्तिकारणाभावात् प्रवृत्तिप्रतिपक्षभूता निवृत्तिः कथन्न स्यादिति भावः । अथ रजते प्रवृत्तिरपि रजतभेदाग्रहादेवेति दृष्टं स चात्रापि समान इति मन्यसे तर्हि रजतार्थिनः कदाचिद्रजतान्निवृत्तिरपि रजताभेदाग्रहादिति दृश्यते अतो निवृत्तिकारणभूतरजताभेदाग्रहसद्भावात् निवृत्तिरनिवार्य्येत्यभिप्रायेणोदाहरति । रूप्यारूप्यभ्रमादाविवेति । तत्र निवृत्तिरन्यकारणिकेत्यभिप्रायेणाह । नेति । द्वादे विवृणोति । यत इति । सा निवृत्तिः । अयं भावः न ह्यसौ रजतार्थिनस्ततो निवृत्तिरिष्ट-

रजताभेदाग्रहात् किन्तु अनिष्टारजतभेदाग्रहात् अरजताद् भेदो-रजतत्व तदग्रहादेव हि तवापि तदर्थिनो निवृत्तिः कथं, प्रवृत्तिर्नि-वृत्तिश्च भेदाग्रहतस्स्यातामिति चेत् इत्थं प्रतियोगिविषयभेदेन साम-ग्रीभेदात् इष्टभेदाग्रहात् प्रवृत्तिः, अनिष्टभेदाग्रहान्निवृत्तिरिति । किञ्चो-पादानवद्धानमपि प्रवृत्तिविशेषः तत्र भेदाग्रहः प्रवृत्तिसामान्यप्रयोजकः तद्विशेषस्य तु तद्विशेष इति किन्नो बाध्यते। नन्वधिकरणप्रतियोगिनो-रुभयोरन्यतरस्य वा ग्रहणाभावेऽपि तद्भेदाग्रहसिद्धिः किं तत्रापि प्रवृ-त्तिः स्यान्नेत्याह । आधार इति । भेदाधारे भेदमन्तरेण भासमाने सतीत्यर्थः । स्फुरतीत्यत्र ग्रहणतः स्मरणतो वेति यथासंभवं ग्राह्यं सदृशवस्त्वन्तरेऽभिमते ऽनभिमते वाऽन्यस्मिन्वस्तुनि ततदिति इष्टानिष्टविभागाभिप्रायम् । एवमनभ्युपगमेऽन्यथाख्यातिपक्षेऽप्यतिप्र-सङ्गो दुर्वार इत्यभिप्रायेणाह । त्वन्मत इति। भ्रान्तेर्हि विशेषाग्रहसह-कृतसामग्र्या सिद्धिस्त्वयोच्यते तत्र न ह्यधिकरणादिग्रहणरहितभेदा-ग्रहस्य सहकारित्वं मन्यसे संशयविपर्य्ययरूपविशेषोत्पत्तौ च विशे-षकारणापेक्षां ब्रूषे तद्वदिहाप्यतिप्रसङ्गपरिहारः । ननु यदा शुक्तौ रज-तभेदाग्रहस्तदा तत्र शुक्तिभेदाग्रहोऽपि विद्यते अतोऽनिष्टशुक्तिभेदा-ग्रहात्ततो निवृत्तिः किन्न स्यात् तव शुक्तिभेदभ्रमात् पूर्वक्षणेऽन्यत्र भ्रमकारणतयाऽभिमतशुक्तिभेदाग्रहात् शुक्तिभ्रमः किं न स्यात् शुक्तौ शुक्तिभ्रमो न घटत इति चेत् शुक्तौ रजतधीरप्यघटितैव त्वयाऽङ्गीक्रियते न हि रजतोल्लेखिनी धीररजतविषयेति घटते अदृष्टचरत्वात्, अदृष्टमपि भेदाग्रहविशेषो घटयतीति चेत् तद्वदि-हापि शुक्तौ शुक्तिभ्रममघटितं घटयतु, दर्शनादर्शनाभ्यां विशेष इति चेत् एवन्निवृत्तिहेतुत्वेऽपि निध्यातव्यमिति, एतदपि प्रतिबन्द्यैव प्रज्ञापितम् अग्रहणस्य प्रवृत्तिकारणत्वं न दृष्टमित्यस्याप्येषैव प्रति-

वन्दिः, न ह्यग्रहस्य बुद्धिकारणत्वमप्यन्यत्र दृष्टं भवति अगत्या कल्पनं त्वन्यत्रापि समानं त्वन्मते गौरवमधिकम् ॥ ११ ॥

इत्यख्यातिसंवलितयथार्थख्यातिपक्षः ।

अथ प्रसङ्गमुखेनान्यथाख्यातिसाधनमनुभाषते । अन्यस्मिन्निति ॥

मू० अन्यस्मिन्नन्यबुद्धिर्न यदि न घटते तत्र वृत्तिस्तदिच्छोरिष्टं तत्साधनं वा यदभिमतमतोऽन्यत्र सा नेति चेन्न । रत्नांशौ रत्नबुद्ध्या विदुरनवगते रत्न एव प्रवृत्तिं ज्ञातस्वेष्टानुषङ्गादविदितमपि खल्वाददीतात्र चैवम् ॥ १२ ॥

टी० विवादपदं शुक्तिशकलं रजतज्ञानविषयः रजतोपायान्यत्वे सति रजतार्थिप्रवृत्तिविषयत्वात्सम्यग्रजतवत् यदि पुरोवर्तिनो रजतबुद्धिविषयत्वं न स्यात् किन्तत्र पुरुषः प्रवर्त्तते सुखे दुःखनिवृत्तौ तदुभयसाधने वा बुद्ध्यारूढे पुरुषस्येच्छा भवति इष्टे च प्रवर्त्तते तदिह शुक्तौ यद्युपादित्सा तदा प्रसाधिका रजतधीर्न स्यात् तर्हि न स्यादेव तत्र प्रवृत्तिरिति, अतोऽन्यत्र सा न सुखदुःखनिवृत्तितत्साधनबुद्धिविषयादन्यत्र पुंसां प्रवृत्तिर्न दृष्टेत्यर्थः । प्रवृत्तेः स्वविषयबुद्धिपूर्वकत्वनियमो नास्तीत्यभिप्रायेण प्रत्याह । नेति । व्यभिचारमुदाहरति । रत्नांशाविति । त्वत्पक्षे हि रत्नांशुविषयेण रत्नभ्रमेण प्रसारितहस्तस्तत्रत्यमनवगतं रत्नमुपादत्ते तत्र रत्नार्थिप्रवृत्तिविषयभूतं रत्नं न प्रवृत्तिहेतुरत्नधीविषयः प्रमाया एव तत्र धीविषयत्वादस्मत्पक्षेऽपि सामान्यतो रत्नजातीयस्मृत्या प्रवृत्तिः न तु तदानीं

गृह्यमाणरजतविशेषविषयस्मृत्या तस्याननुभूतचरत्वात् सामान्यतो विदितत्वादप्यविदितत्वन्नास्तीति चेन्न एतावता विदितत्वेन प्रवृत्तिविषयत्वेऽतिप्रसङ्गात् । एवं व्यभिचारस्थलान्तरमाह । ज्ञातेति । किञ्चिदिष्टं क्षीरादिकं कश्चिदुपादत्ते तच सामान्यतोऽप्यज्ञाततोयतृणादिकमप्युपात्तं भवति पुरुषप्रवृत्तिविषयत्वन्तच नास्तीति चेन्न ज्ञातानामज्ञातानाञ्च तत्प्रवृत्तिजन्यफलाधारत्वाविशेषात् तदेवमविदितस्यापि प्रवृत्तिविषयत्वे पुरोवर्त्तिन इदन्त्वेन विदितस्य रजतत्वेनाविदितस्यापि प्रवृत्तिविषयत्वं कैमुत्यसिद्धमित्यभिप्रायेणाह । अत्र चैवमिति । चकाराद् दूषणान्तरमपि समुच्चिनोति तच रजतोल्लेखस्य शुक्त्युल्लेखरूपत्वमसंभवीति पूर्वमेवोक्तं संभवद्विषयत्वे त्वनुमानस्य सिद्धसाधनता शुक्तिरजते इत्युभयग्राहिण एकज्ञानस्य सर्वसम्मतत्वात् रजतत्वविशिष्टज्ञानविषय इत्युक्तेऽपि स एव दोषो-यज्ज्ञानं रजतत्वाश्रयतया स्वविषयं गृह्णाति तस्य विषय इत्युक्ते ऽपि रजतव्यक्तिं रजतत्वाश्रयतया विषयीकुर्वतो ज्ञानस्य शुक्तिरपि विषय इति स्यात् । अथैतन्निष्ठरजतत्वाश्रयतया ज्ञानस्य विषय इति साध्यते तच दृष्टान्तासिद्धिः साध्यस्वरूपासंभवश्च एतन्निष्ठरजतत्वाद्यभावात् स्वविषयरजतताज्ञानविषय इत्युक्तेऽपि न निस्तारः रजतगतरजतत्वोल्लेखिज्ञानस्यैवैतद्विषयत्वसंभवात् । अथ स्वोपादित्साहेतुभूतरजतज्ञानविषय इति ब्रूषे तथाऽपि सहकारिविशेषात्तद्धेतुभूतरजतस्मृतेस्संनिहितासंनिहितानुभवजनितसंस्काराभ्यामुत्पत्तिसंभवात् तद्विषयतयाऽर्थान्तरतैव । रजतानुभवविषय इति विशेषितेऽपि स्मृतिमूलप्रवृत्तिविषये रजते व्यभिचार इति ॥ १२ ॥

अन्यथाख्यातिवादमनुमानतोऽपि प्रत्याचष्टे तत्र बोध्यपक्षीकारेण तावदाह । शुक्तित्वेति ।

मू० शुक्तित्वारूप्यतादेर्न्न तु रजततया भाति शुक्तिर्विगीता यद्वा धीत्वाद्यथार्था विमतमतिरतो बुद्धिबाधिप्रयोगः । वैशिष्ट्यासिद्धिमात्रप्रथनमिह परं बाधकस्यापि कृत्यं किञ्चासत्ख्यातिरंशे प्रसजति भवतामन्यथाख्यातिवेदे ॥ १३ ॥

टी० विगीता शुक्तिर्न रजततया भाति शुक्तित्वात् अरूप्यत्वाद्वा आदिशब्देन रजतविरुद्धार्थक्रियाकारित्वसंग्रहः अन्यथाख्यातिसमर्थनहेतोस्सविशेषणत्वान्निर्विशेषणशुक्तित्वादिहेतुः प्रबल इति द्योतनार्थस्तु-शब्दः । किञ्च मदुक्तस्य विपक्षे गौरवप्रसङ्गो बाधकस्संभवति न तु त्वदुक्तस्य प्रवृत्तिविशेषो हि भेदाग्रहादप्युपपन्नो दर्शितः । अथ बुद्धिपक्षीकारेणाप्याह । यद्वेति । विगीता बुद्धिर्यथार्था बुद्धित्वात् संप्रतिपन्नवत् । नन्वन्यथाख्यातिपक्षीकृता वाश्रयासिद्धिर्धर्मिग्राहकविरोधो वा । अथ विषयांशभेदेन तद्याथात्म्यमभिप्रेतं तदा सिद्धसाधनं धर्मिणस्समानधर्मस्य चानारोपितत्वात् बुद्ध्यन्तरपक्षीकारेऽप्ययमेव दोष इति । मैवम् अत्र हि पुरोवर्त्यर्थे व्यवहर्त्तुरुपादित्सां प्रत्यव्यवहितहेतुभूता काचिद् बुद्धिरस्तीति सामान्यत उभयाभ्युपेतं यद्यपि सिद्धस्य वा ऽसिद्धस्य वा धर्मिणस्सत्त्वासत्त्वे विधिनिषेधानर्हे तथाऽपि गृह्यमाणयत्किञ्चिदाकारेण सत्ये पर्वतादौ अवयविसंघातप्राकृतपरिणामादिविवादानादरेण पक्षीकरणं सर्वसम्मतं तद्वदिहापि शुक्तिविषयत्वतदविषयत्वादिविवादे सत्यप्युभयानुमतोपादित्साकारणत्वविशिष्टज्ञानपक्षीकारेणाच प्रयोगोपपत्तिः यथा च प्रमितिरूपत्वभ्रान्तिरूपत्वविशेषानादरेण शुक्तिशकलस्य

रजतज्ञानविषयत्वमात्रं सामान्यतस्साध्यते तत्र च प्रमितिरूपत्वे विरोधः भ्रान्तिरूपत्वे त्वप्रसिद्धविशेषणत्वमिति पर्य्यनुयोगं न क्षमसे एवमिहापि सामान्यतः पक्षसिद्धिरिति मध्यस्थदृष्टिमनुसंधत्स्व तथाऽप्यत्र साध्यं यथार्थत्वमनारोपितविषयत्वमारोपितविषयरहितत्वं वा आद्ये धर्म्यंशादेरनारोपितत्वात्तद्विषयत्वेन सिद्धसाधनत्वम् आरोपितविषयत्वात्यन्तासिद्धौ चानारोपितविषयत्वमपि दुर्वचम्। अत एव न द्वितीयः निष्प्रतियोगिकनिषेधायोगादित्याह। अत इति। यथार्थत्वप्रतिज्ञानवशाद्व्यवच्छेद्यत्वेन क्वचित् बुद्धिबाधः स्यादित्युक्तेरयोग इत्यर्थः। अयं भावः योगाचारादयो हि स्वप्नादिनिदर्शनेन सर्वप्रत्ययानां प्रत्ययत्वेनायथार्थत्वं साधयन्ति सर्वत्रासिद्धं च यथार्थत्वं प्रतिषेध्यं प्रतिपद्यन्ते तानुद्दिश्यायं प्रयोगः स्यात् पिशाचानां पिशाचभाषयैव ह्युत्तरं देयं तदिह यद्व्यत्यनेन पक्षान्तरान्वारोहः प्रख्याप्यते कस्तर्हि तान् प्रति दृष्टान्तोवाच्यो यस्तेषां स्वपक्षसाधकबोधः न हि तस्यायथार्थत्वं तैर्वक्तुं युक्तं स्वपक्षासिद्धिप्रसङ्गादिति। ननु बुद्धिबाधः कश्चित्तत्सिद्धौ न वा आद्ये कथन्तन्निषेधः, द्वितीये कथन्तरामिति चेत् उच्यते न हि वयं बुद्धिबाधशब्दस्य कंचिदर्थमनुमत्य प्रतिषेधामः किन्तु बुद्धिबाधोक्तिरयोग्यपदसमभिव्याहाररूपा न विशिष्टमर्थं बोधयतीति तत्प्रयोगस्यायुक्ततामात्रं ब्रूम इति भावः। एतेनान्यथाख्यातिः क्वचिदस्ति न वेत्यादिकमपि प्रत्युक्तम्, अस्ति तावत् परस्परविरुद्धाकारभानरूपान्यथाख्यातिस्सर्वेषु वस्तुषु सेयं शुक्तिविरुद्धाकारवत्तयाऽन्यत्र सिद्धान्यथाख्यातिश्शुक्त्यालम्बना न भवतीत्युक्तौ क्वचित् सिद्धस्यैवान्यत्र निषेधः। यत्तु शुक्तेरेव बाधदशायां रजतादन्यथात्वेन भानं न तन्निषेध्यं स्वाकारविरुद्धाकारवत्तया भानमिति त्वयोग्यपदसमभि-

व्याहारमात्रमिति। ननु पूर्वधीबाधाभावे परस्य कथं बाधकत्वमित्यत्राह । वैशिष्ट्येति । बाधकज्ञानं हि पुरोवर्तिनि रूप्यत्ववैशिष्ट्यं नास्तीति बोधयति तच्च रूप्ये सिद्धं प्रतियोगि भवति, अत एव भेदग्रहसिद्धौ भेदाग्रहप्रभवप्रवृत्तिरूपसाध्यापहारात् पूर्वोत्तरधियोर्बोध्यबाधकत्वबाचोयुक्तिरिति भावः । असत्ख्यातिदूषणेनान्यथाख्यातिं साधयतामनिष्टप्रसङ्गमाह । किञ्चेति । यद्यप्यधिष्ठानं सत्यं भाति यद्यपि रजतस्य रजतत्वस्य चान्यत्र सिद्धेस्तदारोपे नात्यन्तासत्ख्यातिस्तथाऽपि शुक्तिशकले रजततादात्म्यस्य रजतत्वसंसर्गस्य वा तत्र चान्यत्र चासिद्धस्य निषेध्यस्य ख्यातिविषयत्वादत्यन्तासत्ख्यातिरनिवार्य्या एतावदसत्ख्यातिरङ्गीक्रियत इति चेदिदमपि गौरवान्तरं तथा चासत्ख्यातिदूषणाद्विरन्तव्यम् अन्यथाख्यातिसाधनाद्वेति ॥ १३ ॥

नन्वन्यथाख्यातिमन्हुवानानां सर्वस्या बुद्धेर्याथार्थ्याविशेषाद् भ्रान्तिशब्दः क्वचिदपि न स्यात् न ह्यसावसाधुः, न च साधुरपि निर्विषयः स्यात् स्पष्टदृष्टबोधापलापे च सर्वबोधापलापप्रसक्त्या विश्वविलोपस्स्यादित्यत्राह । योऽसाविति ।

**मू० योऽसौ बोधोऽन्यथाधीजनक इति जगे भ्रान्तिरित्युच्यतेऽसौ नेत्थं बोधापलापः क्वचिदपि वदतां बोधमध्यक्षसिद्धम् । यत्र प्रत्यक्षसिद्धादधिकमपि परे निष्फलं कल्पयेयुः सिद्धैरेवात्र तत्तद्व्यवहृतिरिति हि स्थापितं भाष्यकारैः ॥ १४ ॥**

टी० अयं भावः अस्ति ह्यधिष्ठानादिगोचरं भेदाग्रहविशे-

षसहकृतं भ्रान्तिजनकत्वेन युष्मदभिमतं किञ्चित् ज्ञानं तदेव भ्रान्तिरित्युच्यते न चात्र बोधापलापः ईदृशबोधोपलम्भस्याभ्युपगमात् तदतिरिक्तबोधोपलम्भस्याभावाच्चेति । नन्वानादेशिकमेतद् भाष्यादिष्वनुक्तेरित्यत्राह । यत्रेति । यत्र संप्रतिपन्नैः कैश्चिद्व्यवहारस्संभवति तत्र मध्ये न किञ्चित् कल्पनीयमित्यभावजात्यवयविभेदादिनिरासे भाष्यकारैर्निरणायि प्रस्तुतार्थश्च भ्रान्तिचिन्तायां प्रदर्शितप्राय इति । ननु चाख्यातिपक्षेऽप्यन्यविशेषणमन्यविशेषणत्वेनेति कथं भाष्ये चोदितं किमिति वा तच्चाप्रदिष्टोत्तरं सत्यन्तदुच्यते सर्पभूदलनाम्बुधारादिभ्रमेष्वयं सर्प इदं भूदलनमियमम्बुधारेति सर्पादिविशेष्यलिङ्गभाञ्जि विशेषणानि भवन्ति इयञ्च समानाधिकरणत्वाभिमानात् अतोऽन्यथाख्यातिरवर्जनीयेति चोद्याभिप्रायः परिहारानुक्तिस्तु तत्तद्व्यग्रहनिबन्धनवाचकव्यवहारविशेषमात्रमिति स्वयमूहत्रमशिष्यशिक्षार्थेति ।

तर्कतत्फलसामर्थ्यादन्यथाधीप्रसञ्जनम् ।
दत्तोत्तरमिति ग्राह्यं दृग्गौरवलाघवैः ॥

यदेतदाहार्यव्याप्यजनितमारोपितव्यापकविषयं ज्ञानं तर्क इति ब्रूषे तज्जनकतयाऽभिमतज्ञानस्यैव तर्कशब्दवाच्यत्वं तस्यैव च मानानुग्राहकत्वमिति ।

इत्यन्यथाख्यातिभङ्गप्रकारः ॥ १४ ॥

अथ स्याद्विरुद्धानियतकोटिद्वयगोचरं संशयात्मकं ज्ञानं सर्वेषां प्रसिद्धं तच्च वस्तुनि विकल्पस्य विरुद्धानियताकारत्वस्य चायोगात् अन्यथाख्यातिरूपमेव तदनभ्युपगमे सन्दिग्धे न्यायप्रवृत्तिः विषयस्संशयश्चैवेत्यादिकमुच्छिद्येतेत्यत्राह । एकाधार इति ।

**मू० एकाधारे विरुद्धाकृतियुगयुगपत्ख्यातिरन्योन्यबाध्या डोलाविक्षेपकल्पा तदनियतिरियं धीक्रमे साक्षिणी नः । तस्मात्तत्तद्विशेषस्मृतिसमसमयं छन्नतत्तद्विरोधः ख्यातस्साधारणोऽर्थः परमिह विषये येन बुद्ध्यन्तरं वः ॥ १५ ॥**

टी० अयं भावः यदि स्थाणुत्वविशिष्टतया पुरोवर्ति भायात् पुरुषत्वविशिष्टतया न भायादेव तथाऽन्यत्र सर्वत्र दृष्टेः । तदयं प्रयोगः विप्रतिपन्नं स्थाणुपुरुषभानं भिन्नाधारे स्थाणुत्वपुरुषत्वे बोधयति स्थाणुपुरुषभानत्वात् स्थाणुपुरुषाविति भानवत् ततश्च पुरोवर्तिभानं स्थाणुपुरुषभानञ्च मिथोभिन्नमिति सिद्धं, तस्मादूर्द्ध्वद्रव्यभानमनुभवः स्थाणुपुरुषभानन्तु स्मरणं, न चैकस्मिन् पुरुषे स्मृत्यनुभवयोरेकदा संभवं मन्यसे स्मर्यमाणाधारसंशये धर्मिस्फुरणस्य कोटिद्वयस्फुरणस्य च स्मृतित्वाविशेषेऽपि धर्मिस्फुरणस्य कोटिद्वयस्मृतिहेतुसंस्कारोद्बोधकतया पूर्वत्वमनिवार्य्यमिति प्रकारान्तरेणापि धीक्रमं साधयति । डोलेति । संशयडोलाधिरूढो डोलायमानमानस इति रूपकोपमानाभ्यां क्रमेण विरुद्धयोगसारूप्यं व्यज्यते अनियतत्वव्यञ्जकश्च वाकारप्रयोगोऽन्यतः स्फुरणमितरोल्लेखवर्जितं स्वरसतो दर्शयति न ह्यसाविह समुच्चयार्थः तथा सत्यनियमानुल्लेखेन संशयरूपत्वाभावप्रसङ्गात् वाकारस्याविशेषात् प्रयुज्येत नाप्युपमानार्थः धर्मिणस्तत्तदन्यत्वानिश्चयेन तत्तदुपमेयत्वायोगात्, न च मिथः अयमिति पुरोवर्त्तिनिर्देशेनाघटितत्वात् अध्याहारवाक्यभेदयोरवर्जनीयत्वाच्च । अतोऽत्र विकल्पतः

प्रवृत्तमिदमव्ययं तत्त्वे तद्‌योगात् ऊर्द्ध्वः पदार्थः कश्चित् स्थाणु-र्भवति कश्चित्पुरुषो भवतीत्यूर्द्ध्वत्वस्य स्थाणुत्वपुरुषत्वाभ्यां विभज्य साहचर्यं व्यनक्ति तदिहायमिति पुरोवर्त्तिमात्रमगृहीतविशेषमनु-भूयते स्थाणुपुरुषौ तु स्मर्य्येते इति विभागः । एतदेव निगमन-व्याजेन स्पष्टयति । तस्मादिति । समसमयमित्यगृहीतक्रमयोरनु-भवस्मृत्योर्निरन्तरभानाभिप्रायम् । अथवा पुरोवर्त्यनुभवजनितसंस्का-रेण कोटिद्वयस्मृतिहेतुसंस्काराभ्याञ्च संभूय तैर्युगपदेकस्मृतिसंभवात् तदुल्लिख्यमानविषयत्रययुगपत्प्रकाशख्यापनार्थमेतत्, छन्नतत्तद्विरोध इत्येतद्भेदकधर्मानुल्लेखपरं साधारणः साधारणाकारविशिष्ट इत्यर्थः परं पश्चात् केवलमिति वा एतावतैव संशयव्यवहार इति भावः । ईदृशस्य ज्ञानस्य संशयव्यवहारजनकत्वं न क्वचिद् दृष्टमित्यत्र ला-घवं प्रतिबन्दिञ्चाभिप्रेत्याह । येनेति । साधारणख्यातिपरामर्शोऽयम् ईदृशभेदेन संशयरूपज्ञानोत्पत्तिरप्यन्यत्र न दृष्टा व्यवहारविशेषस्तु त्वदिष्टतत्कारणेनैव सिध्येदिति भावः ।

ऊहानध्यवसायौ च परोक्तौ संशयात्मकौ ।
तदन्यत्वेऽपि निर्वाहस्समानन्यायतः स्थितः ॥

इति संशययाथार्थ्यप्रकारः ॥ १५ ॥

सयूथ्यमतभेदौ द्वौ भ्रमे किञ्चित्प्रदर्शितौ ।
अथ प्रतिमतस्थानां प्रलापः प्रतिरुध्यते ॥

तत्र तावत् कचोल्लुञ्चनमतोच्छित्तामनिर्वचनीयख्यातिमधि-क्षिपामः तत्र यदाहुः ।

सत्त्वेन भ्रान्तिबाधौ स्तो नासत्त्वे ख्यातिबाधने सदसद्भ्या-मनिर्वाच्येत्यादि अनिर्वाच्यत्वं नाम किं वाच्यादन्यत्वं वाच्यत्वराहित्यं

निरुपाख्यत्वं सदसदन्यत्वं सत्त्वासत्त्वरहितत्वं ब्रह्मतुच्छविलक्षणत्व मन्यद्वा किञ्चिन्नाद्यः सर्वलौकिकवैदिकव्यवहारविरोधात् स्ववचनादिविरोधाच्च वाच्यानामेव मिथोऽन्यत्वेन तत्साधने सिद्धसाधनात् सर्ववाच्यान्यत्वमप्येकैकस्मिन् विद्यत एव न ह्येकैकस्यापि वाच्यस्य सर्ववाच्यत्व सर्वेषां वाच्यान्योन्याभावानामाश्रयत्वमित्यप्ययुक्तमनिर्वाच्यादिशब्दवाच्यस्वस्वान्योन्याभावाधारत्वायोगात्, अत एव न द्वितीयः- ब्रह्मणि तुच्छे च वाच्यत्वानभ्युपगमात् तयोरपि प्रपञ्चतुल्यत्वस्वीकारप्रसक्तिश्च, न तृतीयः निरुपाख्यशब्दस्य यौगिकत्वे दत्तोत्तरत्वात् निरुपाख्योपाख्यया च त्वयैव विगीतस्योपादानात् रूढिमात्रस्य परिभाषाप्रायत्वेन विगीतसन्यत्वानुपरोधित्वात् खरशृङ्गाद्यविशेषसाधने दृष्टविरोधादपसिद्धान्ताच्च । एवं स्थिते चतुर्थादीन् दूषयति । दुस्साधेति ॥

**मू० दुस्साधा बाधधीभ्यां सदसदितरता कुत्रचिद् व्याहतत्वात् सत्त्वासत्त्वञ्च ताभ्यां कथमिव न भवेद्व्याहतेश्चेत् समन्तत् । दृष्टत्वाद्वा विशेषः क्वचिदपि न हि नस्सर्वरूपेण सत्त्वं नासत्ता चानुपाधिर्न च विमतिरिह ब्रह्मतुच्छातिरेके ॥ १६ ॥**

टी० बाधधीभ्यामित्युपलक्षणं नाशधीभ्यामित्यपि भाव्यम् अयं भावः सदसदन्यत्वन्तावत्सतामेव सदन्तरव्यावृत्त्या तुच्छव्यावृत्त्या च संभवति सर्वेभ्यस्सद्भ्योऽन्यत्वञ्च त्वया दुर्वचम् अनेकसदनभ्युपगमात् यद्यपि पारमार्थिकं सदेकमेव तथाऽपि प्रातिभासिकानि व्यावहारिकाणि च बहूनि सन्तीति चेत् किमतः अनिर्वच-

नीयत्वाभिमतस्य व्यावहारिकसतः स्वस्मादन्यत्वायोगेन सर्वसद-न्योन्याभावकात्स्न्र्यासिद्धेः व्यावहारिकराशिबहिर्भावाभ्युपगमे च पारमार्थिकप्रातिभासिकतुच्छकोटिप्रवेशप्रसङ्गेन स्वमतादिव्याघातात् अत एव सत्त्वासत्त्वरहितत्वमपि निरस्तं व्यावहारिकसत्त्वराहित्यस्य सत्त्वमात्रराहित्यस्य वा साधने व्याघातात् पारमार्थिकसत्त्वराहि-त्यविवक्षायान्तु ब्रह्मतुच्छयोरपि तद्राहित्यात्तदविशेषप्रसङ्गः, न हि ब्रह्मण्यपि पारमार्थिकं सत्त्वन्नाम धर्मस्त्वयेष्यते तदपि तत्र प्रपञ्चवत् कल्पितमिति चेदन्यत्रापि तस्य कल्पितत्वादविशेष एव ब्रह्मणि च तस्य कल्पितत्वे कथं ब्रह्म परमार्थसत् तथात्वे वा विगीतमपि क-थन्न तथा, एवं ब्रह्मतुच्छान्यत्वमपि दुस्साधं सत्यस्य तस्य असत्यवृ-त्तित्वव्याघातात् तदसत्यत्वे तु सत्ययोस्तुच्छातुच्छयोश्च तादात्म्या-पत्त्या व्याघातादेवं ब्रह्मणि तुच्छे च ब्रह्मतुच्छान्यत्वमसत्यं विद्यत इत्यविशेषश्च । यदप्यन्यत् किञ्चित् तदपि विगीते सत्यत्वं सहेत न वा, पूर्वत्र न विवादः उत्तरत्र न स्वयं सत्यमसत्यं वा आद्ये ब्रह्मान्यत्वानन्यत्वोभयसमुच्चयोभयप्रतिषेधविकल्पेनापसिद्धान्तसिद्ध-साधनत्वव्याघातादयः । द्वितीये स्वसाध्यमसत्यं वदतस्ते न किञ्चि-दन्यैर्दूषणं देयं तत्प्रदानफलस्य त्वदुक्त्यैव सिद्धत्वादिति । अथ प्रतिबन्द्यभिप्रायेण विपरिवर्त्य प्रसञ्जयति । सत्त्वासत्त्वमिति । समा-हारद्वन्द्वोऽयं चकारो जैनानुधावनप्रसक्तिं दूषयति । ख्यात्यन्य-थानुपपत्त्या सत्त्वं बाधान्यथानुपपत्त्या चासत्त्वं किन्न कल्प्यत इति भावः । प्रतिक्षेपार्थं कथं शब्दं प्रश्नार्थं मन्यमानस्य प्रत्युक्तिं शङ्कते । व्याहतेश्चेदिति । सत्त्वासत्त्वयोस्सितासितत्वन्यायेन मिथोविरो-धात् नैकत्रैकदा तयोस्संभव इति भावः । हार्दमुद्गिरति । सम-न्त्वदिति । तत्तद्व्याहतिप्रयुक्तमभवनं त्वदुक्ते ऽपि समानमित्यर्थः ।

अयं भावः यदि सत्त्वमसत्त्वञ्च मिथोविरुद्धं मन्यसे तदा तदभावयोरपि तथात्वं नान्तरीयकं यद्यपि परस्पराभावव्याप्यमात्ररूपाणां शीतोष्णनीलपीतादीनां मिथोविरोधेऽप्युभयाभावः क्वचिन्न विरुध्यते दृष्टस्य दुरपह्नवत्वात्तथाऽप्युष्णत्वानुष्णत्वनीलत्वानीलत्वादीनामिव परस्पराभावात्मनोस्सत्त्वासत्त्वयोरेकत्रोभयसमुच्चयवदुभयव्यतिरेकोऽपि व्याहत एव यत्र सत्त्वन्तत्र नासत्त्वं यथा ब्रह्मणि यत्रासत्त्वं तत्र न सत्त्वं यथा कूर्म्मरोमणीतिवत् यत्र सत्त्वाभावस्तत्र नासत्त्वाभावः यथा खपुष्पे यत्र नासत्त्वाभावः तत्र न सत्त्वाभावः यथा ब्रह्मण्येवेति नियमस्य निर्व्याघातत्वादिति यदि समत्वं तर्हि त्वत्पक्षाय कुतस्तुष्यसि मत्पक्षाय किमिति कुप्यसीत्यभिनिविष्टप्रतिवन्दिशक्तेरनुयोगे सत्त्वासत्त्वसमुच्चयपक्षस्य प्रत्यक्षाद्यानुगुण्यमाह । दृष्टत्वादिति । अनयोस्सहभावः क्व दृष्ट इत्यत्र सर्वत्रेत्यभिप्रायेणाह । क्वचिदपीति । सर्वरूपेण सर्वप्रकारेण कालतो देशतः स्वभावतश्च तत्रतत्र नियतं हि सत्त्वम् अन्यथा सर्वनित्यत्वसर्वविभुत्वसर्वाद्वैतवादानां प्रसङ्गादसत्त्वमपि तथैव अन्यथा सर्वशून्यत्वप्रसङ्गात् एतावत् सदसत्त्वमविरोधादङ्गीकुर्मः नान्यद्विरुद्धमिति चेत् सदसद्व्यतिरेकमप्येवं यथादर्शनमविरुद्धमेवाङ्गीकुरुष्व न तु विरुद्धं, सदसद्व्यतिरेकवादः शास्त्रेषु दृश्यत इति चेत् तथा सदसत्त्ववादोऽपि तत्रतत्र दृश्यत एव अन्यविषयोऽयमन्यपरश्चेति चेत् त्वत्प्रदर्शितोऽपि तथैवेति सदसद्विलक्षणशब्देन ब्रह्मतुच्छान्यत्वविवक्षायां दूषणान्तरमाह । न चेति । इह प्रपञ्चे ब्रह्मतुच्छान्यत्वस्यास्मदभिमतत्वात्तत्साधने सिद्धसाध्यत्वप्रसक्तिरिति भावः । एतेन

सत्त्वेन भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधने ।

सदसद्भ्यामनिर्वाच्याविद्याविद्येस्सह भ्रमः ॥

इति डिम्भजम्भितं प्रत्यूढम् । यदपि तत्तन्निर्वचनखण्डनया सर्वमनिर्वाच्यमिति तदप्यनिर्वचनीयनिर्वचनखण्डनया सर्वं निर्वचनीयं भवेदिति प्रतिवक्तव्यं निर्वचनीयत्वानिर्वचनीयत्वखण्डनयाऽपि प्रपञ्चस्यानिर्वचनीयत्वं सिध्येदिति चेत् ब्रह्मतुच्छयोरपि तत्खण्डनया किन्तन्न सिद्ध्येत् सिध्यतु न ततः प्रस्तुतबाध इति चेन्न तृतीयसौगतसीमातिलङ्घनेन तुर्यसौगतगङ्गाप्रवेशप्रसङ्गात् ।

किञ्च निर्वनीयत्वखण्डनोक्त्यनिरुक्तितः ।
विश्वनिर्वचनीयत्वमखण्डितमपेत्यताम् ॥

एवन्त्वदभिमतानिर्वचनीयासंभवात् न तत्ख्यातिसाधने यतितव्यम् ।

इत्यनिर्वचनीयख्यातिभङ्गः ॥ १६ ॥

यदपि शुक्तिप्रदेशनियताविद्याशकलशबलिताद् ब्रह्मणः किमप्यनिर्वचनीयं रजतन्तदानीमुत्पन्नमिदं रजतमिति भातीति भावयन्ति तद्दूषयति । रूप्यमिति ।

**मू० रूप्यं जातं तदा चेन्न रजतमिति धीरप्रमा स्यादमुष्मिन् कार्य्यासामर्थ्यमात्रान्न तदिति कथनं कल्पतेऽतिप्रसक्त्यै । शुक्तौ चैतत्तदात्वे कथमिव जनयेद् दुर्घटाऽनाद्यविद्या नाक्षादिस्त्वर्थहेतुर्न च रजतमितिस्सा हि तेनैव जन्या ॥ १७ ॥**

टी० यदि सामग्रीविशेषात्तत्रोत्पन्नं रजतजातीयं रजतमिति गृह्येत तदाऽऽपणस्थरजतधीवदमुष्मिन्नपि रजतधीरप्रमा न

स्यात् अपि चामुष्मिन्नेदं रजतमिति बाधकधीरप्रमा स्यात् तथा च बाधायोगादबाधितस्य सत्यत्वसिद्धिः रजते च रजतान्यत्वमुल्लीखन्ती बुद्धिरन्यथाख्यातिस्स्यात् । अथ नेदं रजतमिति बुद्धिश्शुक्तिविषयेत्युच्येत तदा *पूर्वसिद्धस्य रजतस्य कथं बाधः, न हि रजतसंसृष्टस्यापणादेरजतत्वबुद्ध्या रजतं बाध्येत अन्यथा तत्र रजते नेयं शुक्तिरिति बुद्ध्या शुक्तिरेव किन्न बाध्येत । ननु नेदं रजतमिति बुद्धिरध्यासाधिष्ठानं ब्रह्म रजतान्यत्वेन गृह्णती तत्रतत्र रजतात्मतां बाधतां तर्ह्यरजतस्याधिष्ठानस्य रजतात्मताबुद्धिरन्यथाख्यातिरेवेति मुधा तत्प्रद्वेषः अधिष्ठानरजतयोर्भेदबुद्ध्या च न रजतबाधः किन्तु तदुभयनिरूपितं तादात्म्यमेव बाध्येत तथाऽप्यधिष्ठानस्य निषिध्यमानात्यन्ताभावाधिकरणत्वग्राहिणी निषेधबुद्धिस्तत्रत्यं रजतत्वमेव बाधत इति चेद्बाध्यतामधिष्ठाने तत्र रजतत्वं किमायातं तत्रात्यन्नस्य तन्निष्ठरजतत्वस्य निषेधाभावात्, न हि रजतत्वं किंचिन्निष्ठात्यन्ताभावप्रतियोगित्वग्रहणेन सर्वत्र मिथ्या भवति । अपि चास्य रजतत्वस्य स्वाधिकरणतया प्रतिपन्ने निषेधाद्बाधः उत यत्किञ्चिन्निष्ठात्यन्ताभावबोधात् आद्येऽन्यथाख्यातिरनिवार्य्या तदनधिकरणे तदधिकरणत्वबोधात् द्वितीये विगीतस्य को विशेषः सर्वस्य सर्वनिष्ठत्वाभावात् ।

ज्ञाते च सदसद्बाध्ये सदसद्धीः क्रमात्सती ।
स्वच्छायामिव दुर्लङ्घ्यामन्यथाख्यातिमावहेत् ॥
अन्यथाख्यातिरस्तीति परबुद्धिं निषेधता ।
दृष्टा तदन्यथाख्यातिरन्यथा किन्निषिध्यते ॥

* अनया पूर्वसिद्धस्येति ।

अथ स्यात् उत्पन्नमेव रजतं रजतकार्य्यानर्हतया नेदं रजतमिति निषिध्यते अगोप्ता राजा न राजेति न्यायादिति तत्राह । कार्य्येति । अयमाशयः, न हि किंचिज्जातीयं कुतश्चिद् वैगुण्यात्तज्जातीयकार्यानर्हत्वेनातज्जातीयमनृतं वा भवति अतिप्रसङ्गात् । अतस्तज्जातीयेऽप्यत्रातज्जातीयत्वोपचारमात्रमिति न बाधसद्भावः । ननूपचारोऽपि बाधाविनाभूतः सत्यं, न तत्रोपचर्य्यमाणस्वभावबाधः किन्तूपचारशब्दमुख्यार्थबाधमात्रं तथाऽप्यरजतशब्दमुख्यार्थबाधे रजतं प्राणित्येवेति । एवमप्यत्र योज्यं कार्यासामर्थ्ये सत्यपि तदिति कथनं नातिप्रसक्त्यै कल्पत इति । ननु समर्थासमर्थस्वभावयोरैक्यजात्यासंभवादतज्जातीये कथं तदिति कथनम् । मैवम् अवान्तरवैजात्यकल्पनेऽपि तज्जातीयत्वानपायात् अन्यथा कथन्तत्र रजतव्यवहारः तज्जातीयत्वव्यामोहादिति चेत् आश्रितोऽसि तर्हि विपरीतख्यातिं, सारूप्यादिति चेन्न सरूपमिति बुद्धौ सारूप्यतिरस्कारेण किञ्चिदिति बुद्धौ चोपादित्साद्ययोगात् सरूपे तद्बुद्धिद्वारा सारूप्यस्य प्रवर्तकत्वे दत्तोत्तरत्वात्, अतोऽवान्तरवैषम्येऽपि रजतजातीयमेवोत्पन्नं वक्तव्यं न च तस्य बाधस्तत्र: अबाधे कथं पश्चान्नानुवर्तेत इति चेत् स्वाभ्युपगतात् प्रणाशादेवेति पश्य, नाशोऽपि बाध एवेति चेन्न तस्य प्रतिपन्नोपाधौ निषेधरूपत्वाभावात् बाधाभावे नाशोऽपि न स्यादिति चेन्न जातस्य हि ध्रुवो मृत्युरिति न्यायेन जातत्वादेव नाशोपपत्तेः त्वया चानिर्वचनीयं रजतं जातमित्येव समर्थनादिति हेतुनिरूपणासंभवादप्यनिर्वचनीयरजतोत्पत्तिं दूषयति । शुक्ताविति कथमिव—न कथञ्चित् । अयं भावः न तावदहेतुकमिदं रजतं जायेत लोकायतमतप्रसङ्गात् हेतुश्च न तत्स्वरूपं व्याघातात्

न च तत्प्रागभावमात्र तस्यानादित्वेन प्रागपि तज्जनकत्वप्रसङ्गात् अत एव न तत्सहकृतं तन्निरपेक्षं वा स्वरूपानाद्यविद्यामात्रम् अविद्यासन्तानपक्षे च सन्तानिनः कस्यचिद्रजतकारणत्वं किं दृष्टत्वादङ्गीक्रियते कुतश्चित् कल्प्यते वा, नाद्यः असिद्धेः न द्वितीयः कारणसंभवात् कार्यक्लृप्तिस्तया च तत्क्लृप्तिरिति मिथस्संश्रयात्, न ह्यत्र रजतमुत्पन्नमिति दृष्टं तद्बुद्धेरन्यथासिद्धतया न तयाऽपि तदुत्पत्तिक्लृप्तिः इदं सर्वमरजतेति श्रुत्यसंकोचादिदङ्कारविषयस्य शुक्तिरजतस्यापि सृष्टिरवगम्यत इति चेन्न प्रमाणसिद्धविषयत्वात्तत्र यदिदं किञ्चेत्यनुवादस्य। ननु सत्यञ्चानृतञ्चेत्यनन्तरमेवाप्रामाणिकमप्युपात्तमिति चेन्न अनृतशब्दस्यात्र विकारिवस्त्वन्तरपरत्वात् अन्यथा सत्यमभवदित्यादिना समन्वयवैघट्यादिति दुर्घटेत्यनेन तत्स्वरूपाद्यसंभवं व्यञ्जयति स्वयं दुर्घटापि सती यदि दुर्निरूपं किञ्चित्कार्य्यं जनयेत् अन्यथाख्यातिमपि तथाभूतां किन्न जनयेत् परञ्च भ्रान्तितद्विषयजननात् उभयसम्मताप्रमाणख्यातिमात्रजननमिति च भाव्यम्। अनाद्यविद्यायास्तदातनकार्य्यजनकत्वं सहकारिवशात्स्यादित्यत्र संभावितान् सहकारिणो दूषयति। नानादिरिति। आदिशब्देन तद्दोषग्रहणम्। इन्द्रियाणि तावन्नार्थमुत्पादयन्ति क्वचिदप्यदृष्टेः तद्दोषाश्च तज्जन्यधीवैपरीत्यापादनेन चरितार्था नार्थविशेषजनकत्वेन कल्पनीया इति भावः। अस्तु रजतबुद्धेरेव सहकारित्वमित्यत्राह। न चेति। किमत्र पूर्वानुभूतरजतस्मृतिरेव रजतजनकतया शङ्क्यते उत स्वविषयेण सहाध्यस्यमाना आहोस्वित् आपणस्थरजतबुद्धिवद्विषयजन्येति विकल्पे प्रथमं दूषयति। न चेति। न हि धीः स्वविषयसजातीयमुत्पादयन्ती क्वचिद् दृष्टा अन्वयव्यतिरेकमहिम्ना त्वन्यथाख्यातिजनकत्वमागोपालं प्रसिद्ध-

शक्नोति । तर्कोऽपि तादृशः । अनुमानमप्यव्यवस्थितमिति प्रागेवोक्तं शब्दस्यापि गन्धवदालोकवच्च स्वाश्रयानुवर्तित्वमशेषदेशव्यापित्वञ्च लोकदृष्ट्या श्रीयामुनाचार्य्यादिभिरुपपादितं ततः शब्दस्य भेर्य्यादिनिष्ठत्वमुपपादितं भवति । कथन्तर्हि शब्दस्य गतिव्यवहारः भेरीध्वनिरुज्जृम्भते अध्ययनशब्दस्सर्वतः प्रवर्तत इति अयमपि पूर्वोक्तेनैव दृष्टान्तेन संघटते गन्धाद्याश्रयद्रव्यप्रसरणवत् शब्दाश्रयद्रव्यस्यापि सर्वतः प्रसरणात् यथा परपक्षे निमित्तकारणभूतवायोः प्रसरणेन सर्वतश्शब्दोपलम्भः एवं तत्तद्द्रव्यप्रसरणेन तत्तद्द्रव्यनिष्ठशब्दोपलम्भस्यापि संभव इति, आकाशनिष्ठत्वन्तु शब्दस्य भूतान्तर्गतत्वेनास्माभिरप्यनुमन्यते ॥

इति शब्दस्य सर्वभूताश्रितत्वम् ॥ २० ॥

अत्र केचिद्रूपादिकञ्चतुष्टयमस्ति शब्दस्तु तच्चतुष्टय एव वर्तते स च श्रोत्रगम्यः तथाऽपि तेभ्यो न भिद्यत इत्याहुः तदिदमनुभाषते । सत्यानिति ।

**मू० सत्यान् सत्यापयन्तः कतिचन चतुरः स्पर्शरूपादिधातूंश्शब्दं स्वाहांत्तसिद्धं चतुरधिकरणं प्राहुरेभ्यो न भिन्नम् । किन्तद्भेदाप्रतीतेः प्रबलविहतितस्संमतैक्यप्रमातः स्वाच्छन्द्याद्देशनाया विभवत इति वा वीक्ष्य शिष्टा विजह्युः ॥ २१ ॥**

टी० अत्र धातुशब्दः परसिद्धान्तप्रयोगप्रसिद्धमनुवदति अतिरोहिमन्यत् । अनुभाषितमर्थं विकल्प्य दूषयति । किन्तदिति । किञ्चतुर्भ्यो धातुभ्यो व्यतिरिक्तपदार्थभेदाप्रतीतेः किं वा प्रबलव्या-

घातदर्शनाद् यद्वा चतुर्भिरुपरितनानामैक्यप्रतीतेः, यदि वा स्वाच्छन्द्यात्, केवलसुगतगुरूपदेशाद्वा तादृशं मतं स्वीक्रियते तत्सर्वमसिद्ध्यादिदोषदूषितत्वाच्चतुर्भ्यो धातुभ्यो व्यतिरिक्तार्थग्रहणे हेतुर्न भवतीत्यर्थः ॥

इति सौगतोक्तशब्दकृतिभङ्गः ॥ २१ ॥

अत्र केचिदाहुः शब्दस्य गुणत्वमेव नास्ति अपि तु द्रव्यत्वमेव यथाहुः ॥

वर्णात्मकाश्च ये शब्दा नित्यास्सर्वगतास्तथा ।
पृथग्द्रव्यतया ते तु न गुणाः कस्यचिन्मताः ॥

इति, एतत्तु वाय्वाद्यवस्थाविशेषरूपशब्दप्रतिपादकश्रुतीतिहासपुराणादिविरुद्धत्वादनादर्तव्यमित्याह । शब्द इति ।

**मू० शब्दोऽवस्थाविशेषः श्रुतिभिरभिहितस्तेन नैष स्वनिष्ठोऽव्योमादेश्चाविभुत्वात् क्वचिदपि न तु तत्सन्निधिस्तद्विदूरे । साक्षादक्षाप्तिसाक्षात्कृत इति घटवद् द्रव्यमित्यप्यसारं साध्यात् प्राग्घेत्वसिद्धेर्न हि परमतवन्नाभसं श्रोत्रमत्र ॥ २२ ॥**

टी० नैष स्वनिष्ठस्स्वतन्त्रं द्रव्यन्न भवतीत्यर्थः । अस्य च शब्दस्य स्वाधारभूतव्योमादेरविभुत्वात् व्योमादिरहिते देशे पुनरसन्निधानं न दोषायेत्याह । व्योमादेरिति । परमाकाशे तु प्राकृताकाशाभावेऽपि शब्दसद्भावो युज्यत इति प्रागेवोक्तं तर्हि शब्दो द्रव्यं साक्षादिन्द्रियसम्बन्धेन गृह्यमाणत्वात् घटवदित्यनुमानं प्रयुञ्ज्महे इति चेत्तदप्यसारमित्याह । साक्षादिति । कुत इत्य-

चाह । साध्यादिति । अयमर्थः शब्दस्य द्रव्यत्वे साक्षादिन्द्रियसंबन्धेन साक्षात्कारसिद्धिः तत्सिद्धौ तत्सिद्धिरितीतरेतराश्रयत्वम् अथापि द्रव्यत्वसिद्धिमन्तरेण साक्षादिन्द्रियसंबन्धस्सिद्ध्यति श्रोत्रस्याकाशत्वात् शब्दस्याकाशगुणत्वादिति चेत् अत्र केचिदाहुः हेतुसिद्ध्या साध्यसिद्धिर्व्याहन्यत इति । तथा हि शब्दस्याकाशगुणत्वाङ्गीकारेण साक्षादिन्द्रियसंबन्धस्सिद्ध्यति तथा च हेतुरेवायं साध्यं व्याहन्तीति । तदिदं सर्वमभिप्रेत्याह । साध्यादिति । हेत्वसिद्धिमुपपादयति । न हीति । अस्मत्पक्षे श्रोत्रस्याकाशत्वायोगात् नैयायिकादिमतवत्साक्षादिन्द्रियसंबन्धप्रसङ्गोऽपि नास्तीत्यर्थः ॥

इति शब्दद्रव्यत्वभङ्गः ॥ २२ ॥

सध्वनीनां वर्णानां पुद्गलरूपत्वमाहुः क्षपणकाः तदिदमनुवदति । वर्णानामिति ।

**मू० वर्णानां सध्वनीनामभिदधति हरिद्वाससः पुद्गलत्वं नाक्षादेस्सिद्धमेतन्न च तदभिमते शब्दितः शब्दशब्दः । सूक्ष्मद्रव्ये हि धर्मः श्रुतिविषयदशालक्षणो दुस्त्यजस्तैस्तस्मान्नास्मत्समीक्षामतिपतितुममी शक्नुयुस्तद्वदन्ये ॥ २३ ॥**

टी० हरिद्वसना नग्नाटाः । दूषयति । नाक्षादेरिति । अयमर्थः न तावत्प्रत्यक्षादिप्रमाणसिद्धत्वादयमर्थोऽवगम्यते नापि लोकव्यवहारानुरोधेनोभयमपि नास्ति तदाह । न चेति । तदभिमते पुद्गले न शब्दशब्दः शब्दितः न व्युत्पन्नः पुद्गलेषु शब्दशब्दस्य

व्याकरणाभिधानपाठलोकव्यवहारशिष्टप्रयोगेष्वन्यतमस्याप्यभावात् उपजीव्यानुमानाभावात् तदनुग्राहकतर्काभावाच्चेत्यर्थः ॥

इति शब्दपुद्गलत्वभङ्गः ॥ २३ ॥

वर्णात्मकशब्दस्वरूपनित्यत्वमाहुः कौमारिलाः तदिदमाह । वर्णा इति ।

**मू० वर्णे स्थैर्य्यं विरुद्धान्वयविरहवति प्रत्यभिज्ञा नियच्छेत्तैव्र्यादिव्यञ्जकस्थं भ्रमवशघटितं तत्र कल्प्येत दिग्वत् । एकात्तग्राह्यसंवित्प्रतिनियतिरपि ह्यञ्जनादाविव स्याद्व्यक्त्या स्यात् कार्य्यताधीर्य्यदि न निगदितो नैगमैरस्य नाशः ॥ २४ ॥**

टी० पूर्वं द्रव्यत्वं निराकृतम् इदानीं नित्यत्वमिति विभागान्न पौनरुक्त्यम् । ननु तीव्रमन्दादिभेदेन विरुद्धधर्मग्रस्तत्वात् कथमस्मिन्नित्यत्वमित्याशङ्क्याह । विरुद्धान्वयेति । तीव्रमन्दादिभावो व्यञ्जकस्य एव न पुनःशब्दस्य इत्याह । तैव्र्यादीति । कथन्तर्हि शब्दतैव्र्यादिप्रत्यय इत्यत्राह । भ्रमवशघटितमिति । तत्र दृष्टान्तं दर्शयति । दिग्वदिति । यथा नित्यविभुशब्दवादिनां पूर्वश्शब्दोऽपरश्शब्द इति दिक्प्रत्ययः काल्पनिकः एवन्तीव्रादिप्रत्ययोऽपीति अनेनैव दृष्टान्तोपादानेन दिक्प्रत्ययस्यापि शब्दे काल्पनिकत्वं स्थापितं भवति । अथवा अनित्याविभुशब्दवादिनामपि शब्दे दिक्प्रत्ययः काल्पनिक एव भेर्य्याद्युपाधीनामेव तत्तद्दिक्संबन्धः उपाधिसंबन्धादाकाशनिष्ठतामात्रेण शब्दे दिक्संबन्धव्यवहारः । ननु कथं समानेन्द्रियग्राह्याणां समानदेशस्थानामित्यादिना प्रति-

नियतव्यञ्जकाभिव्यङ्ग्यत्वं प्रतिषिद्धं शब्दानाम् अतस्ताल्वादिव्या- पारोत्पाद्यत्वं शब्दस्येति तन्न अञ्जनादिभिर्व्यभिचारात्, दृष्टं खलु प्रतिनियताञ्जनाभिव्यङ्ग्यत्वं पिशाचादौ निहितनिध्यादौ च तद्व- दिहापि ताल्वादिव्यापाराणामकारणत्वेऽपि न दोषः तदिदमाह । अञ्जनादाविवेति । कथन्तर्हि कविः काव्यन्निर्ममे प्रोवाच ब्रह्म- विद्यामिति शब्दे कार्य्यत्वप्रतिपत्तिरित्यत आह । व्यक्त्येति । इत्थमङ्गीकारे श्रुतिविरोधमाह । यदि नेति । श्रुतिस्मृतीतिहास- पुराणेषु शब्दस्य विनाश एव सर्वत्र प्रतिपाद्यत इत्यर्थः । नैगमैर्नि- गमसंश्रयैर्वचनैश्शब्दनाशोनिगदितः ॥ २४ ॥

**मू० ध्वन्यात्मा वायुभेदः श्रुतिविषयतयाऽपाठि तौतातिताद्यैस्तद्वत् पञ्चाशदेते समकरण- तया वर्णिताः किन्न वर्णाः । तीव्रादिर्वर्णधर्मो नियत इति यथादर्शनं स्थापनीयं स्पर्शादौ चैवमिष्टं तदिह न सुलभा द्रव्यता नित्यता च ॥ २५ ॥**

टी० किञ्च ये शब्दस्य द्रव्यत्वं नित्यत्वञ्च वर्णयन्ति तैरेव तौतातिताद्यैः कौमारिलाद्यैः ध्वन्यात्मा वायुभेद एव श्रुतिविषयतया- ऽपाठि एवमेव पञ्चाशदेते वर्णाः किन्न वर्णिताः समकरणतया समा- नेन्द्रियग्राह्यतया समानताल्वादिव्यापारजन्यतया च तेषामेव वर्णानां वायुभेदानां स्वाभाविक एव तीव्रादिभावः । न पुनरौपापा- धिकः यथादर्शनं व्यवस्थापनीयं यथा दुरालभास्पर्शस्य दुःखहेतुत्वं दहनस्पर्शस्य दाहहेतुत्वं तस्मादवर्णात्मकशब्दवत् वर्णात्मकोऽपि शब्दो वाय्ववस्थाभेद इति स्वीकारे को विशेषः । अवस्था चागन्तु-

रपृथक्सिद्धो धर्म इत्युक्तम् अतो द्रव्यत्वं नित्यत्वञ्च वर्णानामिति वर्णितमेतदप्रामाणिकमिति वर्णयामः विस्तरस्त्वन्यत्रानुसन्धेयः।

इति वर्णानित्यत्वम् ॥ २५ ॥

कथन्तर्हि वर्णानित्यत्वे वेदनित्यत्वं सिद्ध्यतीत्यत्यन्तभीतस्यात्यास्तिक्यनिमित्तचोद्यं परिहरति। शब्देति।

**मू० शब्दानित्यत्वतोऽपि श्रुतिषु न विलयः स्यात् क्रमव्यक्तिनीत्या तन्नित्यत्वे च काव्यादिकमपि न कथं नित्यमित्यभ्युपैषि। तस्मान्नित्यैकरूपक्रमनियमवशान्नित्यभावः श्रुतीनामीशोऽप्यध्यापको नः परमतिचकितैर्वर्णनित्यत्वमुक्तम् ॥ २६ ॥**

टी० शब्दानित्यत्वेऽपि श्रुतिषु न विलयः स्यात् यथा शब्दानां नित्यत्वेऽपि नित्यविभूनां तेषां देशतः कालतो वा कश्चित् क्रमो नास्ति क्रमविशेषविशिष्टस्यैव शब्दस्य पदत्वं वाक्यत्वञ्चानुवर्ण्यते स पुनः क्रमः कीदृग्रूप इति चिन्तने शब्दानां क्रमाभिव्यक्तिमात्रमेव, अभिव्यक्तिश्चोपलम्भसामग्री सान्निध्यं वा तदधीनोपलम्भो वा तदनुक्रमोऽपि तत्कालपरम्परासंपातः सर्वमेतदनित्यमेव एवञ्च यथाक्रमाभिव्यक्त्या वेदनित्यत्वं भवद्भिरभिव्यक्तिनियममात्रेणाङ्गीक्रियते एवं क्रमविशेषविशिष्टशब्दोत्पत्तिपारम्पर्य्यमेवोच्चारणक्रमनियमः तेनैव वेदनित्यत्वमस्माकं सिध्यति, वर्णनित्यत्वमप्रयोजकमेव वर्णानामवेदत्वात् वाक्यसंघातविशेषो हि वेदः पदसंघातविशेषो वाक्यं पदञ्च वर्णसंघातविशेषः सर्वमेतदनित्यमेव वाक्यानां सजातीयत्वमात्रं त्ववशिष्यते तदेव नित्यत्वमिति अन्यथा वर्णानां नित्यत्वमात्रेण

काव्यादिकमपि नित्यमिति कथं नाभ्युपैषीत्याह । तन्नित्यत्वे चेति । कथन्तर्हि वेदनित्यत्वमित्यत्र नित्यत्वे प्रयोजकं निगमयति । तस्मादिति । इदं खलु वेदानां नित्यत्वं यन्नित्यैकरूपक्रमविशेषोच्चार्यमाणत्वं, स पुनः क्रमः निपुणं निरूपयतामुच्चारणमात्रनिष्ठ एवेति एतेनाध्यापकानां पूर्वपूर्वाध्यापकाध्ययनानुक्रमानुसरणमेव वेदनित्यत्वमिति सिद्धे सतीश्वरोऽपि पूर्वकल्पानुसरणं स्वसंकल्पसिद्धं स्वयमप्यनुसरतीति वेदेऽपि पूर्वकल्पोच्चारणानुसरणमनुवर्त्तयतीति वेदनित्यत्वसिद्धिः । वर्णनित्यत्ववादिभिस्तु तदनित्यत्वे वेदानित्यत्वभ्रान्त्या तद्भ्रान्तिनिबन्धनभीत्या वा वर्णनित्यत्वमुक्तमिति न तानप्यधिक्षिपामः ।

इति वर्णानित्यत्वेऽपि वेदनित्यत्वप्रकारः ॥ २६ ॥

एवं शब्दं निरूप्य स्पर्शे विशेषान् निरूपयति नैवेति ।

**मू० नैवोष्णौ नापि शीतौ क्षितिसततगती तत्र तोयादियोगाच्छीतत्वादिप्रतीतिस्तदुपधिकतया तत्रतत्रैव दृष्टेः । आयुर्वेदे तुषारो मरुदिति कथनं त्वद्भिराप्यायिकाभिर्वृद्धिह्रासौ समाद्यैर्भवत इति परं तच्चिकित्सानियत्यै ॥ २७ ॥**

टी० यथोपलम्भमनुष्णाशीतस्पर्शौ पृथिवीवायू तत्र तोयादियोगात् शीतत्वादिप्रतीतिः शीतं स्थलं शीतोवायुरित्यादि तत्र हेतुमाह । तदुपधिकतयेति । दर्शनं हि सर्वत्र व्यवस्थापकम् उष्णा भूरुष्णं जलमित्यादिष्वातपाद्युपाधिवशादेव तत्र तत्रोष्ण्यादेर्दर्शनात् कथन्तर्हि आयुर्वेदे तुषारोमरुदित्युच्यते तुषारः शीत इत्यर्थः तत्त्वाप्यायिकाभिरद्भिरेव कथं वा तर्हि वृद्धिह्रासौ समाद्यैर्भवत इति तुल्य-

गुणयोगेन विरूपाणामपि तत्रैवायुर्वेदे साम्यादिकमुच्यते तत्पुनश्चिकित्सानियमार्थम् अयमत्र भावः अस्य धातोरनेन हेतुना ऽभिवृद्धिः अनेन च परिक्षय इत्यादि शास्त्रसिद्धं दृष्टं च, सर्वेषां धातूनां यथोचितं चिकित्सा अनादिसिद्धा शास्त्रेण तत्र तत्र चिकित्साविशेषनियमसिद्ध्यर्थं तानितानि रूपाणि कल्पितान्यकल्पितानि व्यवह्रियन्त इति नैतावता पदार्थतत्त्वनियमसिद्धिरिति ॥ २७ ॥

इत्यनुष्णाशीतस्पर्शाधारनियमः।

एवं शीतोष्णभूतनियमोऽपि यथोपलम्भं द्रष्टव्य इति दर्शयति। स्यादिति।

**मू० स्यादुष्णः कृष्णवर्त्मा सलिलमपि तथा शीतमस्तु प्रकृत्या स्पर्शोऽन्योऽप्यत्र दृष्टस्स तु भवतु रुमाक्षिप्रलावण्यवच्चेत्। मैवं संसृष्टवस्तूपधिनियततया तद्विवेकस्य युक्तेः प्रायश्शीतोभवेति प्रभृतिकमपि तद्ग्राहकत्वादिरोधात् ॥ २८ ॥**

टी० उष्णः कृष्णवर्त्मा तथैव जलमपि शीतमित्युपलभ्यते प्रकृत्या अत्र कश्चिदाह अन्योऽपि स्पर्शो दहने सलिले च कदाचिदुपलभ्यते स तु रुमाक्षिप्रकाष्ठादिलवणन्यायेन तस्यैव परिणतिविशेष इति तदिदमाह। स्पर्श इति। तन्निराकरोति। मैवमिति। रुमाक्षिप्रकाष्ठादेर्लवणत्वपरिणतिः प्रत्यक्षसिद्धगुणवैषम्यनियमेन युक्ता अत्र त्वगन्यादिसंसर्ग एव जलादेरौष्ण्यं तथा सलिलसंसर्ग एव भूतान्तरे शैत्यमित्युपाधिसंसर्गो दृश्यत इति विशेषः। इदमेव स्फोरयति। संसृष्टेति। कथन्तर्हि शीतो भव हनूमत इति वह्नेरपि शीतत्व-

मित्याशङ्क्याह । प्राय इति । अयमत्र भावः न पुनर्वह्नेश्शीतत्वं जायतेऽपि तु सीतासंकल्पविशेषेण दाहकत्वमेवोपरुद्ध्यत इत्यर्थः ।

इति शीतोष्णभ्रमनियमः ॥ २८ ॥

एवं रूपमपि परिशोधयति । पीतेति ।

**मू० पीता भूः श्वेतमम्भो हुतवहपवनौ रक्तधूम्रौ तथा द्यौर्नीलेति क्वापि शिष्टं तदिह न नियतां वर्णसत्तां ब्रवीति । ध्यानार्थं मन्त्रवर्णेष्विव कथितमिदं व्योमवातौ ह्यरूपौ पीतैकान्त्यं भुवोऽक्षश्रुतिहतमथ तत्प्राचुरी सास्तु मा वा ॥ २९ ॥**

टी० अत्र कश्चिदचूचुदत् पीता भूमिः श्वेतमम्भः वह्निपवनौ रक्तधूम्रौ द्यौर्नीलेति मन्त्रशास्त्रे वर्णविशेषो विविच्यते तच्च शास्त्रं नाग्रहनिबन्धनम् अतस्तदनुसारेण नियता वर्णसिद्धिरनुसरणीयेति तदिदं निराचष्टे । तदिहेति । कथमित्यत आह । ध्यानार्थमिति । केवलं ध्यानार्थमेव तत्तद्वर्णकथनं तेषुतेषु भूतेषु तत्र । दृष्टान्तमाह । मन्त्रवर्णेष्विवेति । अत्रैव हेतुमाह । व्योमेति । अरूपावेव ह्याकाशवायू रूपवत्तयाऽत्र निर्दिश्येते । किञ्च अनेकरूपयुक्ताया भुवः पीतैकान्त्यवचनं प्रत्यक्षविहतं श्रुतिविहतञ्च श्रूयते हि यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णन्तदन्नस्येति तर्हि प्राचुर्यविशेषात्तत्तद्वर्णोक्तिरिति चेत् साऽप्यस्तु मा वा नास्माकं काचिद्धानिरित्याह । प्राचुरीति ॥

इति भूतपञ्चकवर्णोक्तिनिर्वाहः ॥ २९ ॥

तर्हि कथं श्रुत्या पृथिव्याः कृष्णत्वनियम इत्याशङ्क्य परिहरति । कृष्णामिति ।

**मू० कृष्णामाम्नासिषुः क्ष्मां तदिह न विरहं वक्ति रूपान्तराणां प्रत्यक्षादेर्विरोधात्पचनविषमितं स्पर्शगन्धादि चास्याः । पाथस्तेजोविशेषे स्फुरति वसुमती भागतोवर्णभेदो न ह्यम्भः क्वापि दृष्टं विपरिणतगुणं पाकसंस्कारतोऽपि ॥ ३० ॥**

टी० यत्कृष्णं तदन्नस्येति श्रुतिर्न पृथिव्या रूपान्तरविरहं वक्ति प्रत्यक्षादिविरोधादुपलभ्यते हि रूपान्तरमपि पृथिव्याम्, एवं पाकभेदविषमितः स्पर्शगन्धादिनियमोऽप्यङ्गीकार्य्य इति दर्शयति । वचनविषमितमिति । क्वचित्तु कलुषजलादौ पलालवह्न्यादौ च पृथिवीसंसर्गविशेषात् वर्णभेदो दृश्यते सोऽपि संसर्गविशेषकृत इति यथोपलम्भमङ्गीकार्य्य इत्याह । पाथ इति । अम्भसि पुनः पाके सत्यपि गुणपरिणतिर्न क्वाप्युपलभ्यत इति युक्तमेकरूप्यमेव तत्राभिधातुमिति दृष्टप्रक्रियामात्रानुसरणेन सर्वमेतदुपपादितमिति दर्शयति । न ह्यम्भ इति ।

इति पाकजापाकजरूपादिविभागः ॥ ३०

एवमुक्तेषु शुक्लकृष्णादिषु चित्रमिति किमपि रूपान्तरमस्तीति केचिन्मन्यन्ते तदनुभाषते । आरब्धमिति ।

**मू० आरब्धं रूपभेदैरवयवनियतैश्चित्रमन्यत्तु रूपं काणादाः कल्पयन्तः क्व तदिति कथयन्त्वंशतस्तद्विकल्पे । नांशेष्वेतत्तन्निष्टं न च तदभिहितः कश्चिदंशीति तूक्तं स्वाधार-**

**व्यापकत्वं सुगममिह तथा स्पर्शगन्धादि-**
**चैत्र्यम् ॥ ३१ ॥**

टी० तद्विकल्पयति । क्वेति । अवयवरूपादिभिरारब्धं चित्र-रूपं क्व वर्तते अंशेषु वा अंशवति वा विकल्पितमर्थं दूषयति । नांशेष्विति । अंशेषु चित्ररूपं वर्तत इति काणादानामेव नेष्टं तेषां प्रागेव रूपवत्त्वात् तस्य च रूपस्यानिवृत्तेः तस्मादवयविनि चित्रं रूपादि वर्तत इति वक्तव्यं तदपि नेत्याह । न चेति । अवयविभङ्गस्य प्रागेव कृतत्वादित्यर्थः । कथन्तर्ह्यंशनिष्ठानां रूपभेदानां स्वाधारभूतपटव्यापकत्वमिति चेत् तदस्माकमेव सुगमं पटस्याभावात् अंशनिष्ठानां रूपभेदानां तत्तदंशव्यापकत्वाच्च उक्तमर्थं स्पर्शादावपि तुल्यमिति निगमयति । तथेति । यथा चित्रं रूपं तथैव चित्रस्पर्शः चित्रो रसः चित्रो गन्ध इति व्यवहारोऽपीति तत्तदंशे वैचित्रीभेदात् नापूर्वरूपादिक्लृप्तिरिति सर्वमप्यर्थं समुच्चित्य निगमितवान् ।

इत्यतिरिक्तचित्ररूपादिभङ्गः ॥ ३१ ॥

अत्र केचित् स्नेहाख्यगुणान्तरमाहुः । अपरे पुनस्तद्रूपादावन्तर्भावयन्ति उभयमपि पक्षमनुक्रमादुपपादयति उभयोरपि पक्षयोरेकदेशिमतत्वेन स्वीकारात् तत्र प्रथमपक्षे प्रत्यक्षं प्रमाणयति । स्नेह इति ।

**मू० स्नेहः प्रत्यक्षसिद्धो यदुपधिरुदके स्निग्ध-**
**धीस्सद्रवत्वात्तोयत्वाच्चातिरिक्तः क्वचिदिह**
**यदसौ भाति ताभ्यां विनापि । सौवर्णादिद्र-**
**वाणां न च भवति यतः पांसुसंग्राहकत्वं**
**पर्य्यायानुक्तिरस्मिन् भवति विषमता चेति**
**केचिद् गृणन्ति ॥ ३२ ॥**

टी० यदुपधिरुदके स्निग्धधीरिति उदके स्निग्धधीर्य्यद्गुणो-पाधिकेत्यर्थः । नन्वसौ स्नेहो द्रवत्वात्तोयत्वाच्च नातिरिक्त इति कश्चित् तन्नेत्याह । अतिरिक्त इति । तत्र । हेतुमाह । क्वचिदिति । असौ–स्नेहः, क्वचित्–पृथिव्यां ताभ्यां–द्रवत्वतोयत्वाभ्यां विनाऽपि प्रतिभातीति यतः अतः द्रवत्वतोयत्वाभ्यामतिरिच्यते स्नेह इत्यर्थः अयञ्चात्र हेतुः द्रवत्वमेव स्नेहश्चेत् सौवर्णादिद्रवाणां पांसुसंग्राह-कत्वं स्यात् न च तद् दृश्यते अतो द्रवत्वातिरिक्तः स्नेहस्तदिद-माह । सौवर्णादीति । अपि च पर्य्यायानुक्तिरपि द्रवत्वस्नेहयोर्भेदं साधयति यत्रयत्र स्निग्धत्वं तत्र सर्वत्र द्रवत्वमिति व्यवहाराभावात् यथा मणिकृपाणदर्पणादौ सुवर्णे च स्नेहाभावस्य द्रवत्वस्य च भव-तैवोक्तत्वात् विषमता चेति द्रवत्ववैषम्ये स्नेहवैषम्यं नास्ति स्नेह-वैषम्ये द्रवत्ववैषम्यञ्चास्तीति केषाञ्चित् पक्षः ॥

इति स्नेहाख्यगुणान्तरसद्भावपक्षः ॥ ३२ ॥

अन्ये पुनरन्यथा आहुरित्याह । अन्य इति ।

**मू० अन्ये स्नेहन्तु रूपं किमपि निजगदुः स्निग्ध-**
**वर्णात्त्यबाधाद् दृष्टत्वाद् दुस्त्यजन्तद् भवति**
**खलु भिदा कापि गन्धादिकेऽपि । अप्त्वादेः**
**पांसुसङ्गस्सुगममिदमयस्कान्तजात्यादिनीत्या**
**न ह्यन्यत्तत्र क्लृप्तं न च न दृढमितं पार्थिवे**
**पिच्छिलत्वम् ॥ ३३ ॥**

टी० इत्थं किल ते मन्यन्ते स्निग्धवर्णात्यबाधात् स्नेहाख्यं रूपं किमप्यधिगच्छाम इति तदेवोपपादयति । दृष्टत्वादिति । अथापि रूपसामान्यात् स्नेहाख्यरूपविशेषे वैषम्यं दृश्यत इत्याशङ्क्य

तत् प्रतिवन्द्या निराकरोति । भवतीति । दृष्टं खलु गन्धादिष्वपि तत्तद्धर्मिग्राहकप्रमाणसिद्धं वैषम्यं न हि कस्तूरीकरीषादिष्वेकरूपो गन्धः न च दुरालभाशतपत्रादिष्वेकरूपः स्पर्शः, एवं रसादिष्वपि द्रष्टव्यं, कथन्तर्हि स्नेहमन्तरेण पांसुसंग्रह इत्याह । अप्त्वादेरिति । अप्त्वं स्नेहश्च समानाधिकरणमिति हि भवता प्रतिपाद्यते तथा च सत्यप्त्वमेव स्नेहकार्य्यपांसुसंग्रहे नियामकमस्तु कथं जातिरेव गुणविशेषमन्तरेण कार्य्यविशेषनियामिकेत्यत्र दृष्टान्तमाह । अयस्कान्तजात्यादिनीत्येति । अयस्कान्तजातिविशेष एवायस्संग्रहणे निमित्तं न ह्यन्या तत्र कारणक्लृप्तिः । एवमत्रापि तोयत्वजात्यतिरिक्तस्नेहरूपगुणक्लृप्तिर्न युक्तेत्यर्थः । किञ्च स्नेहो जलैकनियत इति स्नेहवादिभिरभिधीयते अथापि पार्थिवे पिच्छिलत्वं दृश्यते अतस्तत्तद्वस्तुनियतरूपविशेषाद्यतिरेकेण स्नेहो नाम कश्चिन्नास्तीत्यपरेषां पक्षः ॥

इति स्नेहस्य रूपविशेषान्तर्भावपक्षः ॥ ३३ ॥

एवं द्रवत्वेऽपि पक्षभेदावाह । मासृण्यादीति ।

मू० मासृण्यादिप्रभेदोपहितगुरुतया ऽब्बादिनिम्नाभिमुख्यं माषव्रीह्यादिराशौ भवति च पतने तादृशन्तारतम्यम् । किञ्चादृष्टान्यक्लृप्तिर्ज्वलनपवनयोर्न क्रियायां तथाऽस्मिन्नित्येकेऽन्ये तु दृष्ट्वा गुणमधिकमुशन्त्यादिमस्यन्दहेतुम् ॥ ३४ ॥

टी० मासृण्यादिप्रभेदावच्छिन्नगुरुत्वमेवाबादीनां निम्नाभिमुख्ये कारणं न पुनर्द्रवत्वं नाम कश्चिद् गुणः इदञ्च पतने तारतम्यं माषव्रीह्यादिराशौ दृष्टमिति यथादर्शनमेवानुसरामः न हि

माषादिराशौ पतनाद्यर्थं गुणान्तरं परिकल्प्यते भवद्भिः । किञ्चाग्ने-रूर्द्धज्वलनं वायोस्तिर्य्यग्गमन*मित्यत्रादृष्टातिरेकेण गुणान्तरं भवद्भिर्न कल्प्यते एवं सलिलस्यापि निम्नाभिमुख्येन सरणमित्यत्रादृष्टव्यतिरेकेण गुणान्तरं कल्पनीयं तदिदमाह । किञ्चेति । दृष्टान्तदृष्टं पक्षे योजयति । तथेति । एवमेकदेशिनां पक्षं परिसमाप्यान्येषां पक्षमनुवदति । अन्ये त्विति ॥

इति द्रवत्वान्तर्भावबहिर्भावपक्षौ ॥ ३४ ॥

उक्तस्य द्रवत्वस्य स्वाभाविकास्वाभाविकादिविभागं दर्शयति । तोय इति ।

**मू० तोये दृष्टं स्वभावाद् घृतकनकमुखे पाकजन्यं द्रवत्वं तैलादौ नैव पाकानुगम इति भवेत्तादृशावंशकॢप्तिः । भस्मीभावाद्यनर्हे यदुत कणभुजा सूत्रितं तैजसत्वं हैमादिश्लिष्टभौमावयवनयविदामित्थमेतन्न हृद्यम् ॥ ३५ ॥**

टी० स्वभावादेव तोये द्रवत्वं दृष्टं घृतकनकमुखे पाकजन्यं द्रवत्वं दृष्टम् उभयमपि तथैवाङ्गीकर्तव्यं तैलादौ पाकानुगमो न दृष्ट इति तादृशावंशकॢप्तिः एवं दृष्टप्रक्रियामुक्त्वा कणभुगभिमतमार्थान्तरमनूद्य दूषयति । भस्मीभावादीति । अत्यन्तानलसंयोगेऽनुच्छिद्यमानद्रवत्वेन हेमादीनां तैजसत्वमुक्तं कणभुजा तद्धेमादिश्लिष्टभौमावयवे व्यभिचाराद् दुःस्थमेव, तुल्यं खलु हेम्ना तच्छ्लिष्टभौमावयवानामत्यन्ताग्निसंयोगेऽपि भस्मीभावानर्हत्वम् । अथापि

* तिर्यक्पवनमिति पा० ।

यथा तेषां भैामत्वं तद्वद्द्रेणोऽपि तैजसत्वमेव साधयितुं न शक्यत इत्यर्थः । अन्यत् सर्वं न्यायपरिशुद्धौ विस्तरेणोक्तमस्माभिरिति नेह प्रतन्यते ॥

इति सांसिद्धिकपाकजद्रवत्वाधारनियमादिः ॥ ३५ ॥

गुरुत्वाख्यस्य गुणस्यानुमानगम्यत्वं प्रतिबन्द्या प्रतिक्षिपति । पात इति ।

**मू० पातस्तुल्यो ऽम्बुभूम्योः पवनदहनयोस्तिर्य्यगूर्द्ध्वप्रवृत्त्या पाते भेदात् पलादिप्रतिनियतिरपि ह्यंशवैषम्यतः स्यात् । भागानां तारतम्याज्ज्वलशिखिमरुतां स्यन्दनादे*र्विशेषस्तस्मात् सर्वोऽप्यदृष्टादिह भवतु न चेत् स्याद् गुणोऽन्यो ऽनलादौ ॥ ३६ ॥**

टी० "अग्नेरूर्द्ध्वज्वलनम्" इत्यादिना पवनदहनयोस्तिर्य्यक्प्रवृत्तिरूर्द्ध्वप्रवृत्तिर्यथाकेवलमदृष्टात् परिकल्प्येते एवमम्बुभूम्योरपि पातः केवलमदृष्टादेवास्तु किमनेन कल्पितेन गुरुत्वेन तत्कल्पने गौरवात् कथन्तर्हि गुरुत्वाभावे मानवेलायां द्विपलादिव्यवहारः पातभेदात् परिकल्प्येत तदपि चांशवैषम्यद्योयुज्यत इत्याह । पाते भेदादिति । पञ्चपणनिक्षेपाद्दशपणनिक्षेपे हि पातवैषम्यं दृश्यते तत्तदाधिक्यमन्तरेण न भवति निष्कनिक्षेपेऽप्यंशाधिक्यमस्त्येव निष्कार्द्धनिक्षेपात् अन्यथा गुरुत्वाधिक्यस्याप्ययोगात् तथा च तेनैवांशवैषम्येण पातभेदः तथा च किमजागलस्तनवदप्रयोजकेन गुरुत्वाधिक्येन, दृष्टा च भूतान्तरेषु गुणान्तरकल्पनामन्तरेणांशाधिक्यादेव कार्य्यभिदा यथा

* देर्भिदेष्टेति पा० ।

अग्नेरूर्द्ध्वज्वलनादौ जाज्वल्यते हि वह्निरंशाधिक्ये तदभावे केवलं ज्वलति एवं पौपवीति च मरुदंशाधिक्येन तदभावे केवलं पवते । एवं जलमप्यंशाधिक्ये क्रियासमभिहारेण स्यन्दते तदभावे स्यन्दत एव । तस्मात् सर्वोऽप्यदृष्टादेव भवतु अन्यथा अग्न्यादावपि गुणान्तरं कल्प्यं स्यादित्याह । न चेदिति । न ह्यग्न्यादावूर्द्ध्वज्वलनादिकारणं भवद्भिः कल्प्यते अतो गुरुत्वस्यानुमानिकत्वमनुमानवार्त्तानभिज्ञतानिबन्धनमिति ॥

इति गुरुत्वाख्यगुणानुमानभङ्गः ॥ ३६ ॥

तर्हि गुरुत्वस्य प्रत्यक्षत्वमस्त्विति वदन्तमपि प्रतिक्षिपति । त्वक्संवेद्यमिति ।

**मू० त्वक्संवेद्यं गुरुत्वं कतिचिदभिदधुस्तत्तु तेषां गुरुत्वं नोर्द्ध्वं स्पृष्ट्वा प्रतीमस्तदिह परधृतेनाप्यधस्तात्स्पृशन्तः । न ह्यन्यालम्बितोऽर्थो भवति लघुतरः स्पर्शनं नोपरुद्धं तेनाक्रान्तौ प्रणुत्ति क्रम इति गुरुणा तर्कितस्तोलनाद्यैः ॥ ३७ ॥**

टी० त्वचा गुरुत्वं संवेद्यत इति ये ह्यभिदधुः तत्तु तेषां गुरुत्वमित्यधिक्षेपवादः । तत्र हेतुमाह । नोर्द्ध्वमिति । यदि गुरुत्वं त्वचा गृह्येत रुचकादिष्वधः स्पर्शवदूर्द्ध्वस्पर्शेऽपि गुरुत्वं प्रतीयेत न च तथा प्रतीमः । किञ्चाधस्तादपि स्पर्शनेन क्वचिद् गुरुत्वं न प्रतीयते न हि परधृते वस्तुन्यधस्तादपि स्पृशन्तो गुरुत्वं प्रतियन्ति । नन्वन्यालम्बिते लघुत्वमेव तदा जातमिति वक्तुं न शक्यते अन्यस्य प्रयासेन धारणाभावप्रसङ्गात् अस्तु गुरुत्वमनुवर्त्तेत इति अथाऽप्य-

न्यालम्बिते स्प्रष्टुः स्पर्शनमुपरुद्धमिति च वक्तुं न शक्यमित्याह । स्पर्शनमिति । स्पर्शनेन्द्रियोपरोधे गुणान्तरोपलम्भस्याप्यभावप्रसङ्गादित्यर्थः । कथन्तर्हि लोके गौरवतारतम्यं हस्तेन परीक्ष्यत इत्यत्राह । तेनेति । गुरुणा द्रव्येण हस्ताद्याक्रान्तौ प्रणोदनक्रमविशेषस्य उपलब्धत्वात् हस्ततोलनाद्यैः प्रणोदनक्रमस्तर्कित इत्यर्थः । यदि गुरुत्वमस्ति तदा गुरुत्वनिमित्तकः प्रणोदनक्रमः यदि वा गुरुत्वं नास्ति तदा गुरुत्वाश्रयत्वेन परिकल्पितद्रव्याधिक्यनिबन्धनः प्रणोदनक्रमः सर्वथा गुरुत्वप्रत्यक्षत्वं नास्तीति भावः ॥

इति गुरुत्वप्रत्यक्षत्वभङ्गः ॥ ३७ ॥

इत्थमनुमानगम्यत्वं प्रत्यक्षगम्यत्वञ्च गुरुत्वस्य प्रतिक्षिप्तम्, एवन्तर्हि गुरुत्वमेव प्रतिक्षिप्तं भवति तथा चागमविरोधः । सांख्यास्तु गुरु वरणकमेव तम इति तमस्कार्य्यत्वेन गुरुत्वमुपपादयन्ति, यत्सांख्योक्तं न तत्सर्वमपि प्रतिक्षिप्यते अनुकूलमविरुद्धं चाङ्गीक्रियते वेदवादिभिरिति एतत्प्रतिबन्द्या निराकर्तुमनुवदति । क्षित्यादाविति ।

**मू० क्षित्यादौ सांख्यदृष्ट्या यदि किमपि तम*-स्कार्यमिष्टं गुरुत्वं तद्वत् कल्प्येत वह्निप्रभृतिषु न कथं सत्त्वकार्य्यं लघुत्वम् । यादृग्भूताद् गुणात्तद्वदसि च पतनं तादृशादस्तु तस्मात् क्वाप्यस्त्वन्यस्य गुर्वी भवतु तदधिकं काममाप्तोपदेशात् ॥ ३८ ॥**

टी० तदेव प्रतिबन्द्या प्रतिक्षिपति । तद्वदिति । यदि सांख्योक्तमिति गुरुत्वं स्वीक्रियेत तर्हि सत्त्वं लघुप्रकाशकमिति तैरेवोक्तं सत्त्वकार्य्यं लघुत्वमपि वह्न्यादौ स्वीक्रियेत न च तथा स्वीकृत-

तमः*कार्यमिति गौड़द्राविड़पुस्तकपाठं त्वपाणिनीयत्वादुपेक्ष्महि

मति भावः । किञ्च पतनानुपपत्त्या हि गुरुत्वं कल्प्यते प्रकृतिपरिणा-मविशेषे पृथिव्यादौ तच्च गुरुत्वं यादृग्भूतात्तमसो भवतीति वदसि तादृशादेव तस्मात् तमसः पतनमस्तु किमनेन मध्ये परिकल्पितेन गुरुत्वेनेत्याह । यादृग्भूतादिति । अन्यथा लघुत्वमपि परिकल्प्येतेति प्रतिबन्दिरनुवर्त्तते तस्मादधिकस्य गुरुत्वस्य परिक्लृप्तिर्लघुत्वक्लृप्तिवत् गुर्व्वी, अथापि तेषु तेषु शास्त्रेषु माषसर्षपादीनामन्येषामपि पर्वतपरमा-णवादीनां गौरवतारतम्यव्यवहारो दृश्यत इति चेत् तर्हि आगमि-कमेव गुरुत्वमङ्गीकुर्म्महे अतो नास्माकं क्वचिद्विरोधः, अविरोधमे-वाह । काममिति । आगमप्रमाण्यावलम्बनेन अतिरिक्तगुरुत्वाङ्गीका-रेऽपि नास्माकं काचित् क्षतिः तस्याप्यागमस्य पूर्वोक्तप्रक्रियया विष-यभेदाङ्गीकारेऽपि नास्माकं प्रधानार्थविरोधः ॥

इत्यागमिकगुरुत्वनिर्वाहः ॥ ३८ ॥

अथ संख्यायाः परिशोधनार्थं प्रागेव संख्याविषयां प्रक्रिया-मनुवदति । एकेति ।

**मू० एकद्व्यादिप्रतीतिव्यवहृतिविषयो योगुणस्सा तु संख्या क्वाप्यैक्यं नित्यसिद्धं क्वचिदवयव-गैर्जन्यते तत्तदैक्यैः । द्वित्रित्वाद्यं त्वनेका-वगतिसहकृतैकैकनिष्ठैक्यजन्यं तत्तत्पुम्मा-त्रदृश्यं क्षणिकमिति कथा कापि कौतस्कु-तानाम् ॥ ३९ ॥**

टी० एकद्व्यादिप्रतीतिव्यवहारविषयो यो गुणस्सा संख्या सा पुनः क्वापि परमाण्वादौ नित्यसिद्धा, क्वचिद् द्व्यणुकत्र्यणुकादौ तत्त-त्कारणगतैरैक्यैर्जन्यते द्वित्वत्रित्वादिकन्तु अनेकावगतिसहकृतैकैक-

निष्ठैक्यजन्यं तादृशी चावगतिरपेक्षाबुद्धिरित्यभिधीयते सा चापेक्षा बुद्धिः तत्तत्पुरुषमात्रनिष्ठेति तज्जन्यद्वित्वत्रित्वादिकं तत्तत्पुरुषैरेव दृश्यते तत्कालमात्रभावित्वात्, तच्च क्षणिकमिति कौतस्कुतानां तार्किकाणां कथा कापि श्रूयत इति शेषः॥

इति कणादोक्तसंख्याप्रक्रिया॥ ३६॥

अनूदितेऽर्थे द्वित्वादिकं निराकरोति। तत्रेति।

**मू० तत्र द्वित्वाद्यपेक्षामतिविषयभिदामात्रमेवा-स्त्वभीष्टं द्वित्वाद्युत्पत्तिमूलं यदभिलपसि तद्व्याहृतेरस्तु मूलम्। द्वित्वादिप्रागभावैर्ध्रुवमिह हि विना धीविशेषोऽभ्युपेयस्तन्मूलं निर्गुणानां विगणनमपि च स्थापनीयं गुणानाम्॥ ४०॥**

टी० यादृशादपेक्षाबुद्धिविषयाद् द्वित्वाद्युत्पत्तिं वदसि तादृशापेक्षाबुद्धिविषयवस्तुविशेषोपलम्भ एव द्वित्वादिव्यवहारमातनोतु किमनेन द्वित्वादिकल्पनेन तदिदमाह। द्वित्वाद्युत्पत्तिमूलमिति। अयं भावः न ह्यपेक्षाबुद्धिर्निर्विषया अज्ञानत्वप्रसङ्गात्, नापि प्रकृतानुपयोगिवस्तुविषया प्रकृतासंगतिप्रसङ्गात्, तथा सविषयत्वे प्रकृतसंगतत्वे च सिद्धे कोऽयं विषयविशेष इति निरूपणीयमित्यवशिष्यते स पुनर्विषयविशेष एव द्वित्वादिस्थाने निविश्य द्वित्वादिव्यवहारमातनोत्विति तर्हि द्वित्वादिप्रागभाव एव विशेषः स एव द्वित्वाद्युत्पत्तौ मूलं स चाभावत्वादेव भावमपेक्षते, न हि द्वित्वादिकमन्तरेण द्वित्वादिप्रागभावो वक्तुं शक्यत इति चेत् तदपि मन्दं प्रागभावस्यानादित्वेन द्वित्वादेरनादित्वप्रसङ्गात्, तद्ध्यनेकावगतिसह-

कृतैकैकनिष्ठैक्यप्रतीतिनिरपेक्षा बुद्धिरिति विशेषयाम इति चेत् तर्हि प्रागभावातिरिक्तो विषयविशेषो भवद्भिरेवाभ्युपेय इति तदेव द्वित्वादिकमस्त्विति पुनरेवायातं तदिदमाह । धीविशेषोऽभ्युपेय इति । अभ्युपेयते च भवद्भिरप्ययमर्थो गुणादीनां गणनाविशेष इति प्रतिबन्दीं पुरस्कुरुते । तन्मूलमिति । न हि गुणादीनां द्वित्वादिकं भवद्भिरभ्युपगम्यते गुणानां गुणाभावात् । न च द्रव्यगतेन संख्याविशेषेण गुणानां संख्यैकार्थसमवायेन द्वित्वत्रित्वादिव्यवहार इति वाच्यं विरुद्धत्वात् संख्यायाः नव द्रव्याणि चतुर्विंशतिर्गुणाः पञ्च कर्म्माणि द्वे सामान्ये इत्यादिर्हि भवद्व्यवहारः, ते च परस्परविरुद्धाः कथं गुणेषु संघटेरन् । अथापि द्रव्यावान्तरेषु घटपटादिषु चतुर्विंशतित्वमप्यस्ति तदेव गुणेषु व्यवह्रियते, पञ्चत्वमपि क्वचिदङ्गुलीप्रभृतिषु तत्कर्म्मस्विति नियमोऽस्त्विति चेन्न अनियमात् । न हि चतुर्विंशतित्वमेव गुणेषु व्यवहर्त्तव्यं पञ्चत्वमेव कर्म्मस्विति नियामकमस्ति संख्याया अभावात् । अथापि बहुलक्षणविशेषपरिगृहीतेषु गुणेषु चतुर्विंशतित्वव्यवहारः कतिपयलक्षणपरिगृहीतेषु पञ्चत्वव्यवहार इति चेन्न लक्षणबहुत्वस्य लक्षणाल्पत्वस्य च तत्तदपेक्षाबुद्धिविषयत्वव्यतिरेकेण निरूपयितुमशक्यत्वात्, अन्यथा मुख्यसंख्याङ्गीकारप्रसङ्गात्, एवञ्च सति तत्तदपेक्षाबुद्धिविषयतारतम्यमात्रेण त्रिचतुरादिव्यवहारो गुणादिष्विव द्रव्येष्वपीत्यभ्युपेत्य इति निर्णयः ॥

इति परोक्तद्वित्वादिनिरासः ॥ ४० ॥

एवं द्वित्वादिसंख्यां निरस्य एकत्वसंख्यां स्वरूपतः परिशोधयति । कैवल्यमिति ।

**मू० कैवल्यं नैकसंख्यापरविरहतया नापि मुख्यान्यभावौ संघातैक्यन्तु राशिक्रममवयवि तु**

**प्राङ्निरस्तं ततोऽन्यत् । तेनासंघातरूपे क्वचन निरुपधिः स्यादसावेकसंख्या स्वाधारैकायुरेषा परमुपचरिता सेयमद्रव्यवर्गे ॥४१॥**

टी० मुख्यान्यकेवलेष्वेकमिति बहुषु विषयेषु एकशब्दं प्रयुञ्जते प्रयोक्तारः, तत्र कैवल्यं नैकत्वसंख्या परविरहरूपत्वात् कैवल्यस्य, न ह्येकत्वसंख्या वस्त्वन्तरवैधुर्य्यरूपतया प्रतीयते एकमिति भावत्वेनैव प्रतीयमानत्वात् । नापि मुख्यत्वमेकत्वसंख्या अमुख्येष्वप्येकत्वव्यवहारदर्शनात् । नाप्यन्यभाव एकत्वं स्वस्मिन्नप्येकत्वव्यवहारात् । अतो मुख्यत्वमसहायत्वमन्यत्वञ्चापहायान्यदेव किञ्चिदेकत्वं तच्च नावयविनि वर्त्तते अवयविन एवाभावात् । संघातैक्यन्तु राशिवदौपचारिकमेव तदिदमाह संघातैक्यमित्यादिना, ततोऽन्यदित्यन्तेन, तेनासंघातरूपे परमाण्वादौ निरुपाधिरसावेकत्वसंख्या स्वीक्रियते एषा चैकत्वसंख्या स्वाधारैकायुः यावद्द्रव्यभाविनीत्यर्थः अद्रव्येषु कथमेकत्वसंख्येति चेत्तत्राह । परमिति । द्विविधो ह्येकत्वव्यवहारो मुख्य औपचारिक इति परमाण्वादौ मुख्यः संघातरूपे पुनरवयव्यादौ औपचारिकः, औपाधिकत्वात्तद्व्यवहारस्य, एवमद्रव्येष्वेकत्वव्यवहार औपचारिकः अन्यथा अनवस्थादिदोषप्रसङ्गादिति अयमत्र निर्णयः—द्वित्वादिकं नास्त्येव अपेक्षाबुद्धिविषयतामात्रेण प्रतीतिव्यवहारयोरन्यथासिद्धत्वात् । एकत्वन्तु विद्यते तत्पुनर्यत्र बाधोऽस्ति गुणादौ तत्र त्वौपचारिक इति ॥

इत्येकत्वसंख्यास्वरूपाश्रयादिनिरूपणम् ॥ ४१ ॥

इत्थमेकत्वं प्रसाध्य तस्य मतभेदेन स्वरूपमेव विविच्य दर्शयति । ऐक्यमिति ।

**मू० ऐक्यं स्वाभेदमाहुः कतिचन न भिदाऽस्त्ये-**

**क्यमेवेति दृष्टेर्भेदादृष्टयैक्यमोहस्तदिति च वचनं तत्रतत्राभ्युपेतम् । अन्ये त्वेतत्स्वसत्त्वं विदुरितरसमुच्छ्रित्यवस्थानुवृत्तं तत्पक्षेऽपि स्वरूपादधिकमिदमिह द्वित्वमोहादिसिद्धेः ॥ ४२ ॥**

टी० आचार्य्याः केचित् स्वाभेदमेवैक्यमाहुः तत्र हेतुमाह । न भिदास्त्येक्यमेवेति दृष्टेरिति । अयं भावः ऐक्यविवरणे प्रवृत्ता निर्णेतारो भेदाभावरूपतयैव ह्यैक्यं विवृण्वन्तीति व्यवहारान्तरमप्यत्रानुकूलमित्याह । भेदेति । ऐक्यभ्रमो भेदादर्शनादभूदिति भ्रान्तिविषये व्यवहरन्ति व्यवहर्तारः, तच्चैक्यस्य भेदाभावरूपत्वानुकूलं तत्रतत्राभ्युपेतमितीदृशो व्यवहारो भूयान् स च व्यवहारस्सर्वैरप्यभ्युपेयः अतो भेदाभाव एव ऐक्यमिति केचिदाचार्य्या निरणैषुः । अन्ये तु स्वसत्त्वमेवैक्यम् इतरसद्भावेऽपि तद्वर्तते तच्च स्वसत्त्वं स्वरूपादधिकमेव अन्यथा स्वरूपे प्रकाशमाने द्वित्वादिमोहानुपपत्तेः, एकत्वे तिरोहिते हि द्वित्वादिव्यामोहः द्वौ चन्द्रमसावित्यत्र स्वरूपं प्रकाशते एकत्वं तिरोहितमिति वाच्यं तथा चैक्यस्य भेदाभावरूपत्वेऽपि स्वसत्त्वरूपत्वेऽपि स्वरूपादतिरेकः स्वीकार्य्यः, अन्यथा द्वित्वादिव्यामोहायोगादिति ॥

इत्येकत्वविषयमतभेदः ॥ ४२ ॥

अतः परम् अभिज्ञाप्रत्यभिज्ञाविषययोरेकत्वयोर्वैषम्यमाह । अन्यदिति ।

**मू० अन्यद् गृह्णात्यभिज्ञा तदिदमिति पुनः प्रत्यभिज्ञाऽन्यदैक्यं कालक्षेत्रादिभेदग्रहजनित-**

भिदाभ्रान्तिशान्तिस्ततःस्यात् । मोहस्तत्रैकताधीर्ज्वलन इव भवेत् प्रत्यभिज्ञात्वतश्चेत् स्वव्याघातोऽनुमाया भ्रम इह निखिला स्यादभिज्ञापि तद्वत् ॥ ४३ ॥

टी० इदमिति गृह्णती तावदभिज्ञा सा खल्वेकदेशकालवर्तिनि स्वस्मिन्नैक्यं गृह्णाति तदिदमिति पुनः प्रत्यभिज्ञा देशकालभेदप्रसक्तभेदविरोध्यन्यदैक्यं गृह्णाति अतो विषयभेदाद् भेदभ्रान्तिशान्तिः स्यात् । ननु विप्रतिपन्ना प्रत्यभिज्ञा भ्रान्तिः प्रत्यभिज्ञात्वात् प्रदीपप्रत्यभिज्ञावदिति प्रत्यभिज्ञायास्सार्वत्रिकं भ्रान्तित्वमाशङ्कते । मोह इति । परिहरति । स्वव्याघात इति । तथा च अयमिति ह्यनुमानं प्रवर्तते तत्रापि प्रतिसन्धानरूपत्वेन स्वव्याघातः प्रसज्यत इति भावः । बाधाबाधविवेकाभावेन प्रत्यभिज्ञामात्रतया सर्वत्रापि भ्रान्तित्वसाधने शुक्तिरजताभिज्ञावत् स्वलक्षणाभिज्ञायामपि भ्रान्तित्वं साधयितुं शक्यत इत्याह । भ्रम इहेति ।

इत्यभिज्ञाप्रत्यभिज्ञाविषयैकत्वविशेषसत्यत्वम् ॥ ४३ ॥

वैशेषिकोक्तसंख्यातोऽव्यतिरिक्तसंख्यावादिनं प्राभाकरं प्रतिबन्द्या प्रतिक्षेप्तुमारभते । अद्रव्य इति ।

मू० अद्रव्येऽप्यस्ति संख्याव्यवहृतिबलतस्सा ततोऽन्या गुणादेर्मैवं संख्यासु संख्याव्यवहृतिवदियं स्यात्त्विहोपाधिसाम्यात् । नोचेत्प्रामानऽवस्थाव्यवहृतिनियतिस्थापनं तुल्यचर्चं तस्मात् काणादकृप्तिर्गुरुमतकथकैर्युक्तमत्रापि सोढुम् ॥ ४४ ॥

टी० इत्थं किल तेषामाशयः संख्याव्यवहृतिरद्रव्येऽप्यस्ति अतो व्यवहारबलात् सा संख्या पुनरद्रव्याद् गुणादेरन्येति तद् दूषयति । नेत्थमिति । तत्र प्रतिबन्दिमाह । संख्यास्विति । अद्रव्यत्वे समानेऽपि संख्यासु संख्याव्यवहारो भवद्भिरप्यङ्गीकार्य्यः, द्रव्यत्ववैधर्म्यं ह्यद्रव्यत्वं तत्तु संख्यायामपि समानं तथा च संख्यायां संख्याव्यवहारवत् अन्येष्वप्यद्रव्येषु संख्याव्यवहार औपाधिकः स्यादेवेति । तत्र हेतुमाह । उपाधिसाम्यादिति । स्वाभाविकसंख्याङ्गीकारे पुनरनवस्थेत्याह । नोचेदिति । गुणादाविव संख्यायामपि संख्याव्यवहारो मुख्यः स्यादिति भावः । संख्यायाममुख्यसंख्याव्यवहृतिनियमस्थापनञ्चेत् तद्गुणादावपि तुल्यचर्चमित्याह । व्यवहृतिनियतिस्थापनमिति । उक्तमर्थं निगमयति । तस्मादिति । काणादक्लृप्तिमङ्गीकुर्वाणस्य प्राभाकरस्य संख्यायामपि तत्क्लृप्तिरङ्गीकार्येत्यर्थः ॥

इति प्राभाकरोक्तसंख्यानिरासः ॥ ४४ ॥

अथ कश्चिदाह गुणेषु संख्याव्यवहृतिवद् द्रव्येष्वपि परिमाणव्यवहारोऽप्युपाधिभेदादेव स्यात् न पुनः स्वाभाविकं परिमाणमिति तदाह । देशाधिक्यादीति ।

मू० देशाधिक्यादिसिद्धावुपधिभिरिह तद्युक्तसंयोगभेदाद्देशव्याप्तिप्रभेदः परिमितिरिति चेन्नोपधीनाम्मितत्वात् । द्वैधैस्तन्न्यूनतादौ प्रसजति हि मिथस्संश्रयस्तत्स्वतस्सा मन्तव्या क्वापि राशिप्रभृतिषु तु परं देशसंबन्धभेदः ॥ ४५ ॥

टी० उपाधिभिर्मणिकघटकरकादिभिराकाशदेशाधिक्यादिसिद्धौ तत्तदुपाधियुक्ताकाशदेशसंयोगतारतम्यात्तत्तदर्गतानां द्रव्याणां तत्तद्देशव्याप्तिप्रभेद एव परिमाणं न पुनः परिमाणमिति गुणान्तरमिति चेन्न उपाधीनामेव मणिकादीनां स्वभावतः परिमितत्वात् अतः स्वाभाविकं परिमाणम् उपाधिष्विवान्यत्राप्यङ्गीकरणीयमित्यर्थः । ननु देशैरेवोपाधीनां परिमाणमस्तीति यदि वदसि तर्हि परस्पराश्रयः आकाशादिदेशैरुपाधिद्रव्यपरिमाणम् उपाधिभिश्चाकाशादिदेशपरिमाणमिति। उक्तमर्थं निगमयति । तदिति । स्वतः क्वापि सा परिमितिर्मन्तव्या क्वापीत्यसंघातरूपद्रव्यमुच्यते संघातरूपेषु राशिप्रभृतिषु देशसंबन्धविशेषमात्रमेव परिमाणस्य व्यवहारकारणमित्याह । राशीति । न हि क्वचिदौपचारिकत्वे सर्वत्राप्यौपचारिकत्वमित्यर्थः ॥

इति परिमाणसिद्धिः ॥ ४५ ॥

अत्र बौद्धपरिकल्पितां तुच्छरूपां परिमितिं दूषयति । बौद्धा इति ।

**मू० बौद्धास्तुच्छामणूनामभिदधति परिच्छित्ति-**
**माकाशधातुं वस्तुस्थित्या परिच्छित्त्यभवन-**
**वशतस्स्यादमीषां विभुत्वम् । अन्यत्रासत्त्व-**
**रूपा परिमितिरिति हि स्थापितं सा मृषा**
**चेत् प्राप्तं सर्वत्र सत्त्वं प्रथमसरगता**
**स्मर्य्यतां व्योम्नि युक्तिः ॥ ४६ ॥**

टी० बौद्धाः खल्वाकाशधातुरूपत्वादाकाशस्य च तुच्छत्वादणूनां परिमितिं तुच्छरूपामभिदधति आकाशपरिवृतत्वमेवा-

णूनां परिमितिः आकाशं चाभावरूपतया तुच्छमेव अन्तरम् । वस्तुस्थित्येति । एवं तद्भूणूनां परमार्थतः परिच्छित्त्यभाववशाद् विभुत्वमेव स्यादित्यर्थः । न हि परस्परविरोधे कोट्यन्तरमस्ति द्रव्यस्य सतः परिमाणावश्यंभावात् । उक्तमर्थं विवृणोति । अन्यथेति । बौद्धपक्षे हि एकत्र देशेऽवस्थितस्य देशान्तरासत्त्वमेव हि परिमाणं सा चेन्मृषा परिमितिस्तर्हि देशान्तरेऽपि सत्त्वं स्यात् तर्हि कथमाकाशादौ परिमितत्वमपरिमितत्वञ्चेत्यादिचोद्यं प्रथमसर एव परिहृतमुपाधिभेदादिति तदत्रापि स्मर्यतामित्यर्थः ॥

इति सौगतोक्ततुच्छपरिमितिनिरासः ॥ ४६ ॥

ननु सर्वपरिमाणनिषेधो ब्रह्मणि दृश्यते अस्थूलमनणवहृस्वमिति तत्कथं विरुद्धपरिमाणनिषेधसमुच्चय इति कश्चिच्चोदयति । स्थूलेति ।

**मू० स्थूलाणुह्रस्वदीर्घेतरदुपनिषदि स्थापितं ब्रह्म तस्मिन् सर्वोत्कृष्टं महत्त्वं श्रुतमपि तदिह स्थूलतान्या निषिद्धा । अन्ये त्वाहुर्विभूनामपरिमितवचःप्रत्ययान्नित्यभावं भावैकात्म्यभावे परिमितिविरहोऽप्यत्र भावान्तरं स्यात् ॥ ४७ ॥**

टी० तत्र परिहारमाह । तस्मिन्निति । सर्वोत्कृष्टं महत्त्वं ब्रह्मणि श्रुतं विहितव्यतिरिक्तविषयो निषेध इति न्यायसिद्धं तेन ब्रह्मणि अस्थूलता पर्वतादितुल्यपरिमाणराहित्यमेव न पुनस्सर्वव्यापित्वरूपपरिमाणराहित्यं विषयभेदेन व्यवस्थासिद्धौ विरुद्धार्थकल्पनायोगादिति विभुत्वरूपं परिमाणं भावरूपमेवाङ्गीकृत्य केचिदाचार्याः

प्राहुः । अन्ये पुनर्विभूनामपरिमितवचोविषयत्वात् परिमाणाभावमेव विभुत्वं प्रतिपादयन्ति, सर्वव्यापिनः परस्य ब्रह्मणः परिमितौ माना-भावादिति अभावरूपपदार्थाङ्गीकारेणायं निर्वाहोऽभावाख्यपदार्थान्त-राङ्गीकारेण भावान्तराभाववादे तु परितो मानविरहोऽपि भावात्मक एवेत्याह । भावेति । भावैकात्मन्यभावेऽपि भावरूपतया स्वीकृते सतीत्यर्थः ॥ ४७ ॥

ननु तव मते महत्त्वमेव न संजाघटीतीति चोदयति । नात्यन्तेति ।

**मू० नात्यन्ताणोर्म्महत्त्वास्त्यवयविनि हृते मध्यमं क्वास्तु मानं तद्धेतुष्वेव तद्धीरपि तव घटते लाघवोत्कण्ठितस्य । एवं त्यक्ते महत्त्वे परममहदपि त्याज्यमेवेति चेन्न त्यागाभा-वात्तदिष्टादधिकमनधिकं वाऽस्तु न क्वापि दोषः ॥ ४८ ॥**

टी० अत्यन्ताणोर्जीवस्य न तावन्महत्त्वमस्ति अवयविना-दानङ्गीकारात् त्र्यणुकाद्यभावेन मध्यमपरिमाणरूपं महत्त्वमपि भवतां नास्ति तदिदमाह । अवयविनीति । घटादिषु महत्त्वप्रतीतिश्च लाघवोत्कण्ठितस्य तव च पक्षे पटघटादिहेतुषु तन्तुकपालादि-संघातेष्वेव घटते, एवं मध्यममहत्त्वे त्यक्ते परममहत्त्वमपि भवतः परित्याज्यं स्यात्, परमशब्दस्य व्यवच्छेद्याभावेन विशेषप्रतीतेर-भावादिति चेत् अनूदितमर्थं दूषयति । नेति । तत्र हेतुमाह । त्यागाभावादिति । तदेवोपपादयति । तदिति । तन्महत्त्वं परे-

ष्टान्महत्त्वपरिमाणादधिकं वा अनधिकं तदेव वा परिमाणं सर्वथा तावन्न परित्यज्यते परमाणुरूपं वस्तुतत्त्वमिति न क्वाप्यस्माकं दोष इत्यर्थः ॥

इति परममहत्त्वनिरूपणम् ॥ ४८ ॥

अथ कश्चिदाह न द्रव्येष्वणुमहदादिप्रक्रियाभेदेन परिमाणं स्वाभाविकमस्ति अपि त्ववस्थाभेद एव तत्सर्वमिति तदेतदनुवदति । द्रव्यमिति ।

**मू० द्रव्यं कृत्स्नं स्वभावात् परिमितिरहितं व्यापकैकत्वयुक्तेरौपाधिक्यंशक्लृप्तिर्घटगगनन्यायात्स्यादवस्था ह्युपाधिः । स्वाभावैर्वेष्टितत्वं घटत इह घटाद्याकृतौ द्रव्यधर्मे पार्श्वोक्तिस्तावता स्यादिति न सदवधेरन्यथाऽप्यत्र सिद्धेः ॥ ४९ ॥**

टी० तत्र हेतुमाह । व्यापकैकत्वयुक्तेरिति । एकैव सर्वव्यापिका प्रकृतिरुच्यते अचेतना परार्था चेत्यादिभिर्वचनैः, युक्तियुक्तं चैतत् एकस्यैव नानावस्थायोगेन नानात्वे लाघवात् अंशक्लृप्तिस्तु कथमितिचेत्तत्राह । औपाधिकीति । तत्र दृष्टान्तं कथयति । घटेति । यथाऽऽकाशे घटाद्युपाधिभेदादंशक्लृप्तिरित्यर्थः, तत्र घटादिरेवोपाधिः इह पुनः कोऽयमुपाधिरिति चेत् तत्राह । अवस्था ह्युपाधिरिति । सैवावस्था तत्रतत्र परिणता नानात्वव्यवहारे निदानमित्यर्थः । तर्हि परिमितद्रव्याभावे घटादिषु स्वाभाववेष्टितत्वं कथमित्याशङ्क्य परिहरति । स्वाभावैरिति । घटादीति स्वाभाववेष्टितं किमपि द्रव्यान्तरं न पश्यामः अपि तु प्रकृतौ परिणता घटाद्याकृतिरेव स्वाभाववेष्टिता

प्रतिभाति, अनेनैव न्यायेन घटादौ पार्श्वैक्तिरपि संघटत इति वदति। पार्श्वैक्तिरिति । घटाद्याकृतावेव परितः पार्श्वैक्तिव्यवहारः अतः परिमाणं नाम किमपि द्रव्ये न परिकल्प्यमिति तन्निषेधति । न सदिति । तत्र हेतुमाह । अवधेरिति । उपलब्धिरेव हि सर्वत्र प्रमाणं परिमितत्त्वरूपेण उपलभ्यमानेषु घटपटादिषु, न ह्यवधिसापेक्षं तत्तत्परिमाणमुपलभ्यते तत्सापेक्षत्वे पुनरवधेरपि निरपेक्षपरिमाणशालित्वमकामेनापि स्वीकर्तव्यमिति भावः ॥ ४६ ॥

इत्थं सामान्येन परिमाणं प्रसाध्य स्वाभाविकमात्मनोऽणुत्वं साधयितुं विशेषतोऽप्यणुपरिमाणं शोधयति । अव्यक्त इति ।

**मू० अव्यक्ते स्यादणुत्वप्रभृतिपरिणतिः स्तम्भकुम्भादिनीत्या नाणुत्वं पूर्वसिद्धं नरमृगरचनाद्यप्यवस्थाक्रमेण । इत्युक्तं सांख्यशैवप्रभृतिसमयिभिस्तत्तथैवास्तु मा वा नित्याणौ जीवतत्त्वे न कथमपि भवेदण्ववस्थाप्रसूतिः ॥ ५० ॥**

टी० अणुत्वप्रभृतयो हि धर्माः प्रकृतिद्रव्य एव परिमाणभेदादुज्जन्ते यथा स्तम्भत्वकुम्भत्वादयः, अतो ऽनादिसिद्धमणुत्वं नाम किञ्चिन्नास्ति यथा एकस्यैव प्रदेशभेदेन नरमृगादिविरुद्धधर्मरचना । अथवा एकस्यैव क्रमेण पूर्वं नररूपेणावस्थितस्य पश्चान्मृगरूपेणावस्थानम् एवं कालभेदेनाणुत्वेनावस्थितस्यैकस्यैव महत्त्वं महत्त्वेनावस्थितस्याणुत्वम् इत्थं सांख्यशैवप्रभृतिभिरुक्तम् एतद्युक्तमयुक्तं वास्तु उभयथाऽपि नास्माकं क्षतिर्यदि कारणावस्थायां महती प्रकृतिः कार्यावस्थायां कालभेदेन परिणतिवशादणुत्वं भजति, यदि

वा कारणावस्थायां त्रसरेणुसंघातरूपेणावस्थिता प्रकृतिरनुपलभ्यमान-स्वरूपभेदा कार्यावस्थायां कालभेदाधीनभागोपलम्भेन त्रसरेण्वादि-रूपेणोपलभ्यत इति उभयथाऽपीश्वरकारणत्वादिरूपप्रधानार्थवि-रोधाभावादुच्यमानस्य चार्थस्यानुपपत्तिविशेषस्फोटयाभावात्तत्र न विप्रतिपद्यामहे । अयमत्र विशेषः प्राकृतपरमाणौ यथा तथा वाऽस्त्वणुपरिमाणं जीवतत्त्वे न कथमपि भवेदणवस्थाया उत्पत्ति-र्जीवस्यानाद्यनन्तत्वेनैव प्रमाणसिद्धत्वादित्याह । न कथमपीति ।

इत्यवस्थामात्रपरिमाणवादभङ्गः ॥ ५० ॥

इत्थं परिमाणं संशोद्ध्य पृथक्त्वमपि शोधयति । चर्चेति ।

**मू० चर्चा तुल्यैव भिन्नं पृथगितरदिति प्रत्यये तत्पृथक्त्वं भेदाख्यो नीलपीतप्रभृतिरभिमतः किं मुधाऽन्यस्य क्लृप्तिः । नाप्यज्ञातावधीनां पृथगिदमिति धीर्नापि भिन्नादिवाचां साकं क्वापि प्रयोगो न च पृथगिति धीर्द्रव्य एवेति सिद्धम् ॥ ५१ ॥**

टी० व्यवहार एव खल्वर्थतत्त्वविभागे निदानं यद्भिन्नमिति व्यवह्रियते, तदेव पृथगिति यत्पृथगिति तदेवेतरदिति च व्यवह्रि-यते, अत एषां शब्दानां पर्य्यायत्वाद् भेदातिरेकेण पृथक्त्वं नाम न कश्चिद्धर्मः कल्पनीयः, किंच भेदश्च नीलपीतादिरसाधारणो धर्म एवाभिमतः तथा च पृथग्व्यवहारस्यान्यथासिद्धत्वे किं मुधा-न्यस्य पृथक्त्वस्य परिक्लृप्त्या । ननु पृथक्त्वं भावरूपं प्रतियोगिनिरपेक्षं भेदस्तु प्रतियोगिसापेक्ष इति वैषम्यमाशङ्क्य परिहरति । नापीति । न ह्यवधिपरिज्ञानाभावे सतीदमस्मात् पृथगिति व्यवहार इति यदि

पृथक्त्वमसाधारणधर्मरूपाद् भेदादन्यत् तर्हि तद्वाचकशब्दस्य भेदवाचकशब्देन सामानाधिकरण्यं प्रसज्येत । न च तथोपलभ्यते न हि पृथगित्युक्त्वा भिन्नमिति वदन्ति भिन्नमिति चोक्त्वा पृथगिति वा तदिदमाह । नापीति । न च पृथगिति धीर्द्रव्य एव नियता गुणादीनामपि पृथक्त्वेनोपलम्भात्, अतः परस्परव्यावर्त्तकासाधारणधर्म एव सर्ववस्तूनां पृथक्त्वं, तदेव लक्षणं, स एव भेद इति सर्वमवदातम् ॥

इति पृथक्त्वाख्यगुणान्तरक्लृप्तिभङ्गः ५१ ॥

संयोगस्यान्तरालाभावत्ववादिनं बौद्धं निराकर्तुं तस्यानन्यथासिद्धप्रमाणप्रतिपन्नत्वेन स्वीकर्तव्यत्वमाह । तन्त्वादीनामिति ।

**तन्त्वादीनां घटादिव्यवहृतिनियता दृश्यते**
**काप्यवस्था सा चेद् द्रव्यस्वरूपं भवति विफ-**
**लता कारकव्यापृतीनाम् । तत्रासंयुक्तबुद्धिः**
**कथमिव च भवेत् स्थैर्य्यवादस्थितानां नैर-**
**न्तर्य्यञ्च भावो मम तदघटितम्मध्यमेवान्त-**
**रञ्च ॥ ५२ ॥**

टी० घटादिव्यवहृतिनियता तन्त्वादीनामवस्थैव पट इति वेदान्तिनः येऽपि चावस्थाव्यतिरेकेण द्रव्यान्तरं स्वीकुर्वन्ति, तेषामप्यसमवायिकारणावस्थाविशेषत्वेन स पुनः स्वीकार्य्यः, तथा च संयोगसिद्धः, सावस्था द्रव्यस्वरूपमेवेति चेत्तर्हि कारकव्यापाराणां विफलता च स्यात् । किञ्चापूर्वसंयुक्तत्वरूपावस्थानङ्गीकारे विभक्तेषु तन्तुषु असंयुक्तत्वबुद्धिः कथं स्यात् स्थिरवादिनां संयुक्ततन्तुस्वरूपस्यानपायात् प्रतिक्षणं तन्तव उत्पद्यन्त इति चेत् निरस्त एव क्षणभङ्गवाद इत्यभिप्रायेणाह । स्थैर्य्यवादस्थितानामिति । ननु

नैरन्तर्य्ये संयोगः स चान्तरालाभावः अभावश्च शून्यमेवेति चेतन्न अभावस्यापि भाववदशून्यत्वात् निषेधकप्रमाणगोचरो ह्यभावः कथं शून्यतामनुभवति । किञ्च भावान्तराभाववादिनामस्माकं पक्षे नैरन्तर्य्यमपि भाव एव किन्त्वन्तरं तदपि भाव एव द्वयोरपि पदार्थयोर्मध्यमेव नन्वन्तरमित्युच्यते अतोऽन्तरालमन्तरालाभावरूपतया भवत्परिकल्पितसंयोगोऽपि भावरूप एवेति न शून्यगन्धावकाशः ॥

इति संयोगसिद्धिः ॥ ५२ ॥

एवं संयोगस्य सिद्धिमुक्त्वा तस्य संयोगस्य वस्तुन्येकदेशवर्तित्वसामर्थ्यात् सर्वस्यापि द्रव्यस्य सांशत्वं वदतो जैनस्य पक्षमनूद्य प्रमाणानुरोधेन परिहरति । सर्वमिति ।

**मू० सर्वं द्रव्यं सभागं न यदि कथमुपाध्यन्वयो भागतः स्यात् कार्त्स्न्येनोपाधियोगे कथमणुविभुनोस्सूक्ष्मतादीति जैनाः । सामग्रीशक्तिभेदप्रजनितविविधोपाधियोगस्वभावादौपाधिक्यंशक्लृप्तिः कथमिव न भवेद् द्विष्ठसंबन्धदृष्टेः ॥ ५३ ॥**

टी० इत्थं किल ते मन्यन्ते परमाण्वादि सर्वमपि द्रव्यं सभागमेव पदार्थान्तरसंयोगस्य पार्श्वषट्कमन्तरेणानुपपत्तेः यदि पार्श्वपरिक्लृप्तिरुपाधित इति वदन्ति तच्च न निरवयवद्रव्यस्य उपाधिसंयोगेऽप्यनधिकारात्, मध्यस्थस्य हि परमाणोः परितः स्थितषडुपाधिसंसर्गोऽपि षड्भिरेव पार्श्वैरुपपद्यते अन्यथा कथमुपाधिसंसर्गः तत्तत्पार्श्वेत्योपाधिकोऽपि पार्श्वनियमः सिद्ध्येत् तर्हि निरवयवस्य कार्त्स्न्येनोपाधिसंसर्गं वदाम इति चेत् तर्हि परमाण्वाकाशयोः परस्पर-

संसर्गे परमाणुरपि विभुः स्यात् आकाशो वा परमाणुः स्यात्तदिदमाह । कार्त्स्न्येनेति । इत्यमनूदितं पक्षं प्रमाणानुरोधेन परिहरति । सामग्रंति । अयमर्थः—दृश्यते तावत्संयोगः स च क्वाचित्कतया उपलभ्यते स यदि संसर्गप्रदेश एव न वस्तुनीत्यभिधीयेत तथा सति तस्यापि प्रदेशस्य प्रदेशान्तरपरिक्लृप्त्या कस्मिंश्चिदपि वस्तुनि संबन्धो न स्यादेव, दृश्यमानस्य च संबन्धस्याधारतया परिदृष्टमेव वस्तु परिग्राह्यं तत्तु निरवयवञ्चेत् औपाधिकांशभेदक्लृप्त्या निर्वाह्यम् । ननु तादृशस्योपाधिसंबन्धेऽप्यनधिकार इत्युक्तमिति चेत् द्विष्ठसंबन्धदृष्टिबलादुपाधिसंबन्धस्य स्वपरनिर्वाहकत्वेन निर्वाहः कल्प्यः, तदिदमाह । औपाधिकीति । एवं च सत्यणुरपि स्वधर्मिग्राहकबलादणुत्वेनैव सिद्धः, विभुरपि विभुत्वेन, उभयमपि निरवयवम् । अथापि तत्तद्धर्मिग्राहकप्रमाणबलाद्विभुत्वाणुत्वयोः प्रतिनियतिः, द्वयोरपि निरवयवत्वम् औपाधिकांशक्लृप्तिश्चेति सङ्गतमेतत् ॥

इति निरवयवेष्वेकदेशसंयोगप्रकारः ॥ ५३ ॥

अस्तु संयोगः अथापि विभूनां परस्परसंयोगो नास्तीति काणादाद्यः तन्निषेधति । नैरन्तर्यमिति ।

मू० नैरन्तर्यं विभूनामपि भवति ततोऽन्योन्य-
योगोऽपि योग्यः केचित्तं हेत्वभावाज्जहति
विहतिकृन्नित्यधीकल्पने तत् । स्याद्वा
तत्सिद्ध्यसिद्ध्योरनुमितिरपटुर्बाधहानेर्विपक्षे
शास्त्रैरन्यद्विभुः स्यात् परधृतमपृथक्सिद्धि-
रेवं ततोऽस्य ॥ ५४ ॥

टी० निरन्तराणां हि पदार्थानाम् अन्योन्यसंयोग उपलभ्यते विभूनामपि नैरन्तर्य्यमस्ति अतोऽन्योन्यसंयोगयोग्यताऽस्ति तदेतदाह । तत इति । केचित्तु हेत्वभावात् संयोगं जहति अन्यतरकर्म्मोभयकर्म वा संयोगो वा संयोगस्य हेतुः त्रितयमपि विभुषु न घटत इति तत्र दूषणमाह । विहतिकृदिति । ईश्वरज्ञानादीनां कारणाभावादभाव इति परवादिभिरुक्ते कार्य्यभूतस्य ज्ञानादेः कारणापेक्षा न नित्यज्ञानादेरिति कणादादयः परिहरन्ति तुल्यमेतदजसंयोगकल्पनेऽपि अनित्यसंयोगस्यैव कारणाभावादभावो वक्तुं शक्यते नित्यस्य तु कारणसापेक्षत्वाभावेन तदभावात् अभावो वक्तुं न शक्यत इति । इमामेव प्रतिबन्दिमभिप्रेत्याह । नित्यधीति । तर्ह्यजसंयोगसाधने किम्मानम् उक्तमेव नैरन्तर्य्यं परोक्तमन्वारुह्यापि परिहरति । स्याद्वेति । अजसंयोगसाधने तावदनुमानं शक्तमशक्तं वा भवतु विपक्षे बाधकाभावात् शास्त्रं पुनस्सर्वाधारं धाम विष्णुसंज्ञमित्यादिकं परस्य ब्रह्मणः कृत्स्नप्रपञ्चाधारत्वमावेदयति तदाधारत्वञ्च तदपृथगवस्थानमेव अतो विभूनामपि परमात्मसंबन्धस्य शास्त्रप्रमितत्वाद् बाधकाभावाच्च युक्त एवायमजसंयोगः । इति ॥

इत्यजसंयोगनिरूपणम् ॥ ५४ ॥

संयोगस्य सार्वत्रिकोपजीवनेन सर्वैरनपोह्यत्वं दर्शयति । संयोगादिति ।

मू० संयोगाद्विश्वसृष्टिः प्रकृतिपुरुषयोस्ताद्दशैस्तद्विशेषैर्ब्रह्मादिस्तम्बनिष्ठा जगति विषमता यन्त्रभेदादयश्च । अक्षार्थामर्थयोगाद्विविधमतिरबाद्यन्वयादङ्कुरादिश्शुद्धाशुद्धा-

**द्वियोगान्नियतमपि फलं न्यायतत्त्वेऽस्य घोषः ॥ ५५ ॥**

टी० प्रकृतिपुरुषयोस्संयोगाद्विश्वसृष्टिस्तावत्तादृशैरेव संयोगविशेषैर्ब्रह्मादिस्तम्बपर्य्यन्तं जगद्वैषम्यम् आलानयन्त्रादयः सुप्रसिद्धास्संयोगरूपाः अक्षाणामर्थसंयोगाद्विविधा मतिर्दृश्यते अबाद्यन्वयाद् बीजादिकमङ्कुरति शुद्धाशुद्धात्मकाभ्यां कपिला—नरास्थिसंस्पर्शाभ्यां नियतमपि फलमनुशोश्रूयामहे, अतस्संयोगविशेषास्सर्वेऽपालभ्यन्ते इति न्यायतत्त्वे संयोगस्य घोष इति ॥

इति संयोगवैचित्र्यप्रदर्शनम् ॥ ५५ ॥

विभागस्य संयोगनाशादर्थान्तरत्वं प्रतिक्षिपति । संयुक्त इति ।

**मू० संयुक्ते द्रव्ययुग्मे सति समुपनतो यस्तु संयोगनाशः संग्राह्योऽयं विभागव्यवहृतिविषयस्सोऽपि तद्धेतुतस्स्यात् । त्वन्निर्दिष्टे विभागे गतवति च सतोः स्याद्विभक्तप्रतीतिर्भूयस्संयोगसिद्धौ कथमिति तु यथा त्वद्विभागान्तरादौ ॥ ५६ ॥**

टी० पूर्वं परस्परसंयुक्ते द्रव्यद्वये विद्यमाने सति समुपनतो यः संयोगनाशस्स एव विभागव्यवहारविषय इति संग्राह्यः तर्हि संयोगविनाशकत्वेन विभागं स्वीकुर्म इति चेत् तन्न संयोगनाशस्य विभागकारणत्वेन कल्पितत्वात् कर्म्मण एव सिद्धिः स्यात् तदिदमाह । सोऽपि तद्धेतुत इति । ननु विभागस्य संयोगनाशरूपत्वे संयोगनाशस्यानन्त्यात् भूयस्संयोगसिद्धावपि विभक्तप्रतीतिः स्याद-

वेति चेत्तर्हि त्वन्निर्दिष्टे विभागे तस्मिन्नेव क्षणे गतवति विभागप्रध्वंसमात्रमेव सतोर्द्रव्ययोरनुवर्तते तेनैव तत्र विभक्तव्यवहारानुवृत्तौ भूयस्संयोगेऽपि तत्रापि विभक्तव्यवहारः स्यादिति प्रतिबन्दिमाह । त्वन्निर्दिष्ट इति । पृच्छति । कथमिति । उत्तरम् । यथेति । यथा विभागान्तरे सति पूर्वविभागप्रध्वंसानुवृत्त्या विभक्तप्रतीतिरेवं मध्ये संयोगकाले विभक्तप्रतीतिः स्यात् । ननु तत्र उत्तरविभागाद् विभक्तप्रतीतिर्मध्ये संयोगकाले तत्प्रागभावात् विभक्तप्रतीतिर्नास्तीति चेत् एवन्तर्हि मध्यगतसंयोगस्य विभक्तप्रतीतिपरिपन्थित्वात् तस्मिन् काले विभक्तप्रतीतिर्नास्ति भूयःसंयोगप्रध्वंसकाले तस्यैव संयोगस्य प्रध्वंसेन तस्मिन्नेव काले विभक्तप्रतीतिरस्तीति ममापि समानमिति भावः ॥

इति परोक्तविभागभङ्गः ॥ ५६ ॥

एवं संयोगनाशस्य विभागत्वं समर्थ्य संयोगनाशस्य स्वरूपं चोदनापूर्वकं शोधयति । कोऽसाविति ।

**मू० कोऽसौ संयोगनाशस्तव मत इति चेत्**
**सोऽयमन्यत्र योगस्तस्य प्राचा विरोधात्**
**स तु मिषति तथा ऽऽलोचितस्तद्विनाशः ।**
**अज्ञातप्राच्ययोगः परमभिमनुते स्वेन रूपेण**
**चैनं सर्वोऽप्येवं ह्यभावः स्फुटमिह न पुनः**
**कश्चिदन्योऽस्ति दृष्टः ॥ ५७ ॥**

टी० सोऽयमन्यत्र योगः उत्तरदेशसंयोग एव पूर्वदेशसंयोगस्य विनाशः, तत्र हेतुमाह । तस्येति । अयमर्थः उत्तरदेशसंयोगस्य पूर्वदेशसंयोगेन विरोधात् स तु एवोत्तरदेशसंयोग एव

तथा ऽऽलोचित:—पूर्वदेशसंयोगविरुद्धत्वेनालोचित: तद्विनाशो मिषति पूर्वदेशसंयोगनाश इति परिस्फुरति। कथन्तर्ह्युत्तरदेशसंयोग इति भावरूपेण प्रतिपत्तिरित्यत आह। अज्ञातेति। द्विविधा हि उत्तरदेशसंयोगप्रतीति: ज्ञातपूर्वदेशसंयोगस्य तद्विरुद्धत्वेन काचित्स्वरूपेण चापरा तत्र ये स्वरूपेण प्रतिपद्यन्ते ते भावरूपेणाभिमन्वते ये पुन: पूर्वदेशसंयोगविरुद्धत्वेन प्रतिपद्यन्ते ते त्वभावरूपेणेति विभाग:। उक्तमर्थं सार्वत्रिकत्वेनोपपादयति। सर्वे इति। भावान्तराभाववादिनां सर्वोऽप्यभावो न भावान्तरादतिरिच्यत इति भाव:। एवं सर्वत्रापि भावस्यापलापे कुत्रापि भावो न स्यादित्याशङ्क्याह। स्फुटमिति। यत्र स्फुटदृष्टो भवति भावरूप: पदार्थ: तत्र तथैव स्वीकार्यम्, यत्र पुनरितराभावतया निर्वोढुं शक्यते तत्र तथैव निर्वाह्य: सर्वेऽपि वादिन इत्थमेव खलु भावाभावविवेकं परिकल्पयन्तीति भाव: ॥

इति संयोगनाशस्वरूपशोधनम् ॥ ५० ॥

अत्र परत्वापरत्वे प्रमाणाभावाद् दूषयति। स्पन्देति।

मू० स्पन्दावृत्त्यादिभेदात् परमपरमिति प्रत्ययो तत्तदर्थे कालाधिक्यादिमात्रान्न खलु समधिकं शङ्कयातां विधातुम्। दृष्टिर्नोन्यस्य क्लृप्तिर्भवति गुरुतरातिप्रसङ्गोऽन्यथा स्यात् किन्न स्यातां गुणाद्यै: परतदितरते पूर्वभावादि चान्यत् ॥ ५८ ॥

टी० न तावत् परत्वापरत्वे वस्तुन: स्वरूपकृते परापरव्यतिरेकाभावप्रसङ्गात् अतो बुद्धिकृते इत्येव हि भवद्भिस्सिद्धान्तितं सा

च बुद्धिरपेक्षा बुद्धिरित्यभिधीयते सा बुद्धिर्न निर्विषया बुद्धेर्निर्विषयत्वायोगात् । नापि सामान्येन यत्किञ्चिद्विषया सर्वासामपि बुद्धीनामपेक्षाबुद्धित्वप्रसङ्गात् परत्वापरत्वयोरन्योन्यवैषम्याभावप्रसङ्गाच्च अतो विषयविशेषविशेषितेयं बुद्धिः परत्वापरत्वहेतुरिति स्वीकर्त्तव्यं, तथैव च भवद्भिरपि स्वीक्रियते तथा चापेक्षाबुद्धिविषयरूपत्वमन्तरेणाधिकपरत्वापरत्वयोरदर्शनात् अनपेक्षितकल्पने गौरवाच्च अपेक्षाबुद्धिविषयभाव एव परत्वापरत्वे स्त इति तात्पर्य्यार्थः । पदार्थस्तु स्पन्दावृत्त्यादिभेदात् कालकृतपरत्वापरत्वे सूर्य्यपरिवृत्त्यादिभेदेन कालाधिक्यादिमात्रात् परमपरमिति प्रत्ययौ स्तः । दिक्कृतपरत्वापरत्वे संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वमात्रात् परत्वापरत्वबुद्धी भवतः । इत्थमन्यथासिद्धौ बुद्धिव्यवहारौ समधिकपरत्वापरत्वे विधातुं न शक्नुयातां तदिदमाह । न खल्विति । दृष्टत्वादाधिक्यं परिगृह्णीम इति चेन्नेत्याह । दृष्टिर्नान्यस्येति । न हि किञ्चित् परत्वमपरत्वं वा पूर्वोक्तादन्यदुपलभामहे कल्पनन्तु गुरुत्वहतम् । अनपेक्षितकल्पनमतिप्रसङ्गदुःस्थञ्च गुणादिष्वपि परत्वापरत्वव्यवहारो दृश्यते यथाऽऽभिजात्येन परः विद्ययाऽपरः वृत्तेन पर इत्यादि, नैतावता तत्र परत्वादि कल्प्यते । किञ्च कालेन पूर्वं पश्चाद् भावि वर्त्तत इति देशेनापि प्राग्भावो पश्चाद्भावीत्यादिव्यवहारभेदास्सहस्रशोऽपि दृश्यन्ते । न च तत्र गुणभेदो भवद्भिरपि कल्प्यते केवलं देशकालविशेषसंबन्धमात्रेण व्यवहारविशेषाः प्रतीयन्त इति भवन्तोऽपि वदन्ति तदन्यत्रापि न दण्डवारितम् । किञ्च दिक्कालावुपाधीकृत्यापेक्षाबुद्धिः प्रवर्त्तत इति हि भवत्सिद्धान्तः, तदपि न सङ्घटीति दिक्कालयोः परत्वापरत्वपरिणतेः प्रागेवोपलब्धत्वे पश्चाद-

नुमानवैयर्थ्यात्, अनुपलब्धत्वे तु अपेक्षाबुद्धेरेव सुषुप्तिप्रसङ्गादि-त्येषा दिक् ॥

इति बुद्धिजन्यपरत्वापरत्वत्वाख्यगुणान्तरक्लृप्तिभङ्गः ॥ ५८ ॥

अथ बुद्धिविषयचिन्ता प्रवर्तते बुद्धेर्गुणत्ववादिनं प्रत्याह । द्रव्यमिति ।

मू० द्रव्यं प्राग् बुद्धिरुक्ता परमिह विषयैस्सङ्ग-
मादिर्निरूप्यस्संयोगं भाष्यकाराः प्रथममक-
थयन्न्यायतत्त्वानुसारात् । तत्संयोगे समेऽपि
स्फुरति न निखिलं तेन योग्यत्वमन्यद्
ग्राह्यं संबन्धसाम्ये नियतविषयता दृश्यते
ह्यीन्द्रियेषु ॥ ५९ ॥

टी० बुद्धिसरे बुद्धेर्द्रव्यत्वमुक्तं परमिह विषयैस्संबन्धादिर्निरूप्यते तत्र भाष्यकारा न्यायतत्त्वानुसारात् बुद्धेर्विषयैस्सह संबन्धं संयोगमकथयन् तर्हि सर्वैरपि संयोगात्सर्वं भासेतेति न वाच्यं बुद्धेस्संयोगे समेऽपि निखिलन्न स्फुरति तत्र हेतुमाह । योग्यत्वमन्यद्ग्राह्यमिति । संबद्धमपि योग्यमेव बुद्ध्या गृह्यत इत्यर्थः । तत्र दृष्टान्तमाह । संबन्धेति । संबन्धसाम्ये सत्यपि नियतविषयता दृश्यते तद्वदिहेति इन्द्रियार्थसन्निकर्षे तुल्ये ऽपि चक्षुषा रूपमेव गृह्यते न पुनः स्पर्शः, स्पर्शनेन स्पर्शः न रूपं, कुत एतद् योग्यत्वस्य नियतत्वात्, एवं सर्वेषां बुद्धिसंबन्धे सत्यपि सहकारियोग्यतादिनियमादेकमेव गृह्यते नान्यदिति नियमो नानुपपन्न इति ॥

इति विषयविषयिभावनिरूपणम् ॥ ५९ ॥

इत्थं विषयविषयिभावं निरूप्य तद्वैषम्ये निदानमाह ।
नित्यमिति ।

मू० नित्यं नित्यादिबुद्धिर्निखिलविषयिणी तद्व-
देव स्वभावः शास्त्रैः क्षेत्रज्ञबुद्धेरपि समधि-
गतः कर्म्मभिस्तन्निरोधः । संकोचोल्लास-
योश्च प्रतिनियतिरिह स्यादुपाधिप्रभेदा-
न्निश्शेषोपाधिमोक्षे निखिलविषयतामश्नु-
वीत स्वभावात् ॥ ६० ॥

टी० नित्या बुद्धिर्निखिलविषयिणी तद्वदेव स्वभावो यथा न क्रियते ज्योत्स्नेत्यादिशास्त्रैः क्षेत्रज्ञबुद्धेरपि समधिगतः, अपि तु कर्मभिस्तन्निरोधः तेन सङ्कोचोल्लासयोः प्रतिनियतिरिहोपाधिभेदात् स्यान्निश्शेषोपाधिमोक्षे सैव बुद्धिर्निखिलविषयतामश्नुवीत । अत्रोपाधिः कर्म स च निरूपेण भगवन्निग्रह एव अतो भगवानेव निग्रहानुग्रहाभ्यां बुद्धेः संकोचविकासौ करोति ॥

इति विषयविषयिभाववैषम्यम् ॥ ६० ॥

मुक्तानां धीविकासानुपपत्तिं विकल्पाभासेन वदतां श्रुतिविरोधं वक्तुं तदुक्तिमनुवदति । मुक्तानामिति ।

मू० मुक्तानां धीक्रमाच्चेत् प्रसरति न कदाप्य-
न्तमेषाऽधिगच्छेत् संक्षिप्रायाश्च दूरान्ति-
कपरिपतने यौगपद्यं न शक्यम् । संयोगो
भूतभव्येष्वपि न हि घटते तद्धि यस्सांप्र-
तिक्या इत्याद्यैर्न्न क्षतिः स्याच्च श्रुतिमुख-
विदिते योग्यतावैभवेऽस्याः ॥ ६१ ॥

